## ग्रंथप्राप्तिस्थानम् ।

शास्त्री सूर्यराम भानुशंकर,
रामजीनो टेकरो,
वलसाड. BULSAR.

शास्त्री चुनीलाल लीलाधर,
लक्ष्मीनारायण महोल्लो,
वलसाड. BULSAR.

शास्त्री मोतीराम कल्याणजी.
कांदावाडी, कल्याण बिल्डींग नं. ३
मुंबई ४. BOMBAY-4.

पंडित नारायण मूळजी, बुकसेलर,
नरनारायणना मंदीर पासे, कालबादेवी, मुंबई २. BOMBAY-2.



વેદ શાસ્ત્રી ચુનીલાલ લીલાધર, ઠે. લક્ષ્મીનારાયણ સ્ટ્રીટ, વલસાડ

॥ ॐ श्री श्रीजगद्धात्र्यैनमः ॥

# प्रास्ताविकं किञ्चित् ।

साधुर्जनः पश्यतु ग्रंथवर्णानित्यर्थयामो जगदीश तुभ्यम् ।
पतेन्न चास्मिन् खलु दोषरूपा शनैश्चरस्येव खलस्य दृष्टिः ॥

आवश्यकविधेयत्वेन वरीवर्ति ह्येषा विश्वजनीना वेदाज्ञा " देवपितृकार्याभ्यां न प्रमदितव्यमिति " । देवकार्यं यथा यज्ञादिपदेन कथ्यत एवमेव पितृकार्यं च श्राद्धपदेन प्रस्तूयते । श्राद्धपदार्थश्च मरीचिना प्रदर्शितो यथा । "प्रेतं पितृंश्च निर्दिश्य भोज्यं यत् प्रियमात्मनः । श्रद्धया दीयते यत्तु तच्छ्राद्धं परिकीर्तितम् । " लक्षणेनानेन प्रमीतोद्देश्यकं क्रियमाणं कर्म श्राद्धपदवाच्यमिति स्फुटं प्रतीयते तथाप्यत्र केचन विवदन्ते । जीवतामेव पित्रादीनां परिचरणं श्राद्धपदेनाभिधीयत इति । प्रधानहेतुश्चोपन्यस्यते तैरत्र ' वेदेष्वदर्शनादिति' । निगमेषु निर्दिष्टं मन्वादिस्मृतिषु स्फुटमुट्टंकितं श्राद्धाभिधं कर्म तु नापलप्यते तैः किन्तु प्रमीतोद्देश्यकं तन्नास्तीति तेषां विप्रतिपन्नबुद्धीनां राद्धान्तः ।

२ अत्र विचार्यते । वेदेषु किं जीवन्त एव पित्रादयः पितृपदेन समुपदिष्टा अन्ये वा देवताविशेषाः । अत्रोच्यते । विस्पष्टमेव दरीदृश्यते पितृपदेन निर्दिष्टा माध्यमिकेषु देवतागणेष्वन्यतमा देवताविशेषा एव पितर इति । परमेतावान्विशेषः । कंचित् लोकान्तरं गताः पित्राद्याः संबन्धिनः पितृपदवाच्याः कचिच्च वसुरुद्रादित्यनामानस्तेषां निर्वापफलप्रापकाः पितृपदवाच्यत्वेन प्रदर्शिताः । तथाह्यत्र निगमः ॥ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्तेनोवन्तु पितरो हवेषु ॥ अस्यार्थः—

॥ १ ॥ ( ये ) असुं ( प्राणम् ) ईयुः ( प्राप्तवन्तः अर्थात् पूर्वं स्थूलविग्रहाः प्राणान्विता आसन् त एवेदानीं प्राणमात्रमूर्तयोऽस्थूलविग्रहास्तत्र जीवितकाले ) अवृकाः ( अनमित्राः सर्वदा सर्वत्र साधुव्यवहारतः शत्रुरहिताः ) ऋतज्ञाः ( सत्यज्ञा यज्ञज्ञा वा कर्तृतया कारयितृतया वा यज्ञानुष्ठानविदः ) सोम्यासः ( सोमसंपादिन आसन् ) तेच कतिविधा इत्याह अवरे, परासः, मध्यमाः , इति त्रिविधाः । तत्र परासः ( द्युस्थानचारिणः, " ये चेमेऽरण्ये श्रद्धा तपइत्युपासते " इत्यादिना छान्दोग्ये वर्णिता देवयानमार्गेण सूर्यलोकं गताः ) मध्यमाः ( द्यावापृथिव्योरन्तरेण स्थायिनः " य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते " इत्यादिना छान्दोग्ये वर्णिताः पितृयानमार्गेण चन्द्रलोकं गताः ) अवरे ( भूपृष्ठस्थान्तरिक्षचारिणः " अथैतयोः पथो र्न कतरेण च " इत्यादिना छान्दोग्ये वर्णिताः पृथिव्यामेवनिरन्तरावर्तिनश्चतुरशितिलक्षभेदभिन्नासु योनीषु जायमानाः ) तदेषां त्रिविधानां पितृणां मध्ये येऽवरास्तेषामप्राप्तमार्गाणामसकृदावर्तित्वेन क्वचिदपि दीर्घकालस्थितिसंभावनाभावात् न पितृलोकस्थत्वम् ; ये परास्तेषामप्यनावर्तित्वश्रुतेस्तथात्वमेव; **येतु मध्यमाश्चन्द्रलोकं पितृलोकं वा गतास्तेषामेव स्वस्थानत्वेन प्राधान्यमिष्टम्** । अत एव अन्तरिक्षस्थानेष्वेवपठितं पितर इति पदम् ; यास्केनापि " माध्यमिको यम इत्याहुस्तस्मान्माध्यमिकान् पितॄन् मन्यन्ते यमो हि तेषां राजेति " ( एवमादिगुणयुक्तास्ते ) पितरः ( मध्यमस्थानीया देवगणाः ) नः अस्माकम् हवेषु ( आह्वानेषु श्राद्धादिक्रियायाम् ) अवन्तु ( नित्यमागच्छन्तु ) अथ च उदीरताम् ( यस्मिन् स्थितास्ततोप्युत्कृष्टे गच्छन्तु ॥ ) मन्त्रेणानेन सुविस्पष्टं बोध्यते प्रमीता एव पितृपदभाजो न जीवन्तः । एतेन विप्रवादिनां तेषां " वेदेष्वदर्शनादिति हेतुरपि हेतुत्वेनाभासमान एव । यमस्य पितृराट्त्वं पितृणां स्वरूपंच " परेयिवांसमित्यादि सूक्तद्वये ऋग्वेदीयेऽन्यत्र च यजुर्वेदादौ विस्पष्टमेव; परं विस्तारभिया एकमेव निगमं व्याख्याय विरम्यते । ॥ १ ।

**परेयिवांसं प्रवतो महीरनु बहुभ्यः पन्थामनुपस्पशानम् । वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्व** ऋक्संहिता ( ६-२४-१ ) अस्यार्थः—प्रवतः ( मनुष्याः उपलक्षणमेतद्देवतिरश्चाम् ) महीः ( महतीः सर्वा भूतजातीः ) परेयिवांसं ( सर्वतः प्राप्तवन्तम् ) बहुभ्यः (पुण्यकृद्भ्यः पापकृद्भ्यश्च) पन्थाम् ( पन्थानम् ) अनुपस्पशानम् ( अमुना मार्गेणायं प्राणी जीवनादुत्सर्पति तमेवमार्गं तस्य स्पाशयित्वा बध्वा तस्कर इव ज्वरसर्पादिरूपोभूत्वा जीवितादुपयास्यामि नेष्यामि इत्येवमुपस्पाशयमानं तमेवंकर्माणम् ) वैवस्वतम् ( विवस्वतः पुत्रम् ) जनानां सङ्गमनम् ( सममेव चक्षुः कृत्वा यथाकृतकर्मफलोपभोगवशेन जनानस्माल्लोकादमुं लोकं गमयतीत्येवंशीलम् ) राजानं यमम् ( सर्वप्राणभृतामाकर्षकमीश्वरं यमदेवं हे यजमान ) हविषा ( हुतद्रव्येण ) दुवस्व ( परिचर राध्नुहि ) मन्त्रेऽस्मिन्यमस्य स्वरूपं कार्यं च संप्रदर्श्य तस्य परेतराजत्वं—पितृराट्त्वं प्रतिपादितम् । छान्दोग्ये प्रदर्शितयोर्मार्गयोर्निरूपको मन्त्रो यजुर्वेदे प्रदर्शितः **द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च** ( यजु. १९-४१ ) अस्यार्थः—मर्त्यानां ( मरणधर्मिणाम् ) द्वे सृती (सएष देवयानो वा पितृयाणो वा पन्थाः इति श्रुतितः द्वौ मार्गौ ) अहमशृणवम् ( श्रुतवानस्मि ) पितरं मातरं च अन्तरा (द्युलोकभूलोकयोर्मध्ये) एजत् (कंपमानं क्रियावत्) विश्वं (सर्वमिदम्) ताभ्यां (देवयानपितृयाणाख्य मार्गाभ्याम्) समेति (संगच्छति.) अन्येपि बहवो मन्त्राःप्रमीतानामेव पितृत्वं बोधयन्ति परं विस्तारभिया तेषु कतिपयानुदाहरामि **ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवःस्वधया मादयन्ते । तेभ्यः स्वराडसुनीतिमेतां यथावशं तन्वं कल्पयाति** (यजु० १९–६०) अस्यार्थः—येपितरः अग्निष्वात्ताः (अग्निना आस्वादिताः) ये च अनग्निष्वात्ताः (स्मशानकर्माप्राप्ताःसन्तः) दिवः (स्वर्गे) स्वधया ( स्वकर्मफलोपभोगेन ) मादयन्ते ( सुखं संसेवन्ते ) स्वराट् ( यमः ) तेभ्यः ( पितृभ्यः ) यथावशम् ( यथाकामम् ) एतां असुनीतिं तन्वम् ( मनुष्यसंबन्धिनं प्राणयुक्तं शरीरम् ) कल्पयाति ( कल्पयतु ददातु ) **ये निखाता ये परोप्ता ये दग्धा ये चोद्धृताः । सर्वांस्तानग्न आवह**

॥ २ ॥ **पितॄन् हविषे अत्तवे** (अथर्व० १८–२–३४) अस्यार्थः—ये निखाताः ( अकृताग्निसंस्काराः पृथिव्यां गर्ते स्थापिताः ) ये परोप्ताः ( संस्कारकाभावात् यत्र मृतास्तत्रैव तथास्थिताः ) ये दग्धाः (संस्कारकेणाग्निसात्कृताः) ये चोध्धृताः ( संस्कारकेण पुत्रेण शिष्येणान्येन वा यतिसंस्कारविधिना जले पृथिव्यां वा प्रक्षिप्ताः ) अग्ने (हे वैश्वानर) सर्वांस्तान् पितॄन् हविषे अत्तवे (हुतं स्वीकर्तुं, अत्तुम्) आवह (प्रापय) ॥ २

**अथैनं पितरः प्राचीनावीतिनः सव्यं जान्वाच्योपासीरंस्तानब्रवीन्मासि मासि वोऽशनं स्वधा वो मनोजवश्चन्द्रमा वो ज्योतिरिति ॥** शतपथब्रा० कां० २ प्र० ३ ब्रा० ४ कं० २ ॥—अस्यार्थः—सृष्टेः प्रारंभकाले पितरः (मध्यमस्थानीया देवताः) अपसव्यं कृत्वा यज्ञोपवीतं वामजानुं निपात्य ब्रह्मणोऽभिमुखं स्थितास्तान् प्रोवाच प्रजापतिः प्रतिमासममावास्यायां भोजनं वो भविता । यौष्माके कर्मणि स्वधाशब्दो दानार्थे प्रयोक्ष्यते । स्वधोच्चार्यार्पितं वस्तु मनस इव वेगेन भवतां निकटे समेष्यति । शिशिरभानुर्भवतां प्रकाशको भविता ॥ ब्राह्मणेऽस्मिन्स्पष्टतयानुवर्णितं चन्द्रलोकस्थत्वं तेषाममायां च पिण्डपितृयज्ञाह्वयं कर्म ॥ **उदन्वतीद्यौरवमा पीलुमतीति मध्यमा । तृतीयाह प्रद्यौरिति यस्यां पितर आसते ॥** अथर्व० कां० १८ अनु० २ मंत्र ४८ ॥ अस्यार्थः—अन्तरिक्षस्य भागत्रयं तत्र नीहारावृतं प्रथममन्तरिक्षं **उदन्वतीद्यौ**रिति कथ्यते, तदुपरि **पीलुमतीद्यौ**रिति कथ्यते, तदुपरि तृतीयाद्यौरर्थात् तृतीयमन्तरिक्षं **प्रद्यौ**रितिकथ्यते, तस्यामेव चन्द्रप्रकाशितायां पितरो वसन्ति ॥ मन्त्रेणानेन मनुष्यलोकात् पितृलोकस्य भिन्नत्वं विस्पष्टतया समनुवर्णितं भवति, इतोऽपि ज्ञायते प्रमीतानामेव पितृत्वं न केवलं जीवतां पित्रादीनाम् ॥ **ये नः पितुः पितरो ये पितामहा य आविविशुरुर्वन्तरिक्षम् । तेभ्यः स्वराडसुनीतिर्नो अद्य यथावशं तन्वं कल्पयाति ॥** अथर्व० कां० १८ अनु० ३ मं० ५८ ॥ अस्यार्थः—येऽस्माकं पितुः पितरः पितामहादयो मरणादूर्ध्वं महान्तमन्तरिक्षस्थपितृलोकं गतास्तेषामस्माकं पितॄणां प्राणान् अर्थात् ( ब्रह्मसूत्रे तृतीयाध्यायस्थतदन्तराधिकरणे प्रतिपादितसूक्ष्मशरीरान् ) अनुकृष्य नीयमानः स्वतन्त्रो यमराजः कर्मानुसारिणमुत्तमं शरीरं ददातु ॥ अनेन

निगमेन पितृलोकस्य मनुष्यलोकाद्भिन्नत्वमन्तरिक्षस्थत्वं च प्रतिपाद्यते ॥ **पितापुत्रौ चेदाहिताग्नी स्यातां येभ्यः पिता तेभ्यः पुत्रो दद्यात् । पिता प्रेतः स्यात् पितामहो जीवेत् पित्रे पिण्डं निधाय पितामहात् पराभ्यां द्वाभ्यां दद्यादिति** ॥ काठकश्रौत-सूत्रम् ॥ सूत्रेऽस्मिन् प्रमीतेभ्यः पितृभ्यः पिण्डदानं विहितं न जीवद्भ्यः ।

ब्राह्मणेऽपि **अथ त्रयो यावल्लोकाः मनुष्यलोकः पितृलोको देवलोक इति** (शतपथब्रा० १४-३-२४) अनेन मनुष्यलोकात् पितृलोकस्य भिन्नत्वमेव प्रदर्शितम्; इतोऽपि ज्ञायते प्रमीतानामेव पितृत्वम्; जलाञ्जलिदानेनमादयन्ते पितर इत्यपि मन्त्रे प्रतिपादितं यथा—**यास्ते धाना अनुकिरामि तिलमिश्राः स्वधावतीः । तास्ते सन्तु विभ्वीः प्रभ्वीस्तास्ते यमो राजानुमन्यताम्** ( अथर्व० १८-३-६९ ) अत्र भूयांसि वैदिकप्रमाणानि सन्ति परं विस्ताराभिया दिङ्मात्रमेव प्रदर्शितं तेन सुधियो ज्ञास्यन्ति प्रमीतानामेव पितृत्वं प्रमीतोद्देश्यकं हि क्रियमाणं जलांजलिदानरूपं पिण्डनिर्वपणरूपं भोजनादिप्रदानरूपं भिन्नं भिन्नं समुच्चितं वा कर्म श्राद्ध-पदेन कथ्यत इति वैदिकसिद्धान्तः ।

अयमेवार्थः स्मर्यते स्मृतिकृद्भिर्मन्वादिभिः; " श्राद्धं कुर्यात् प्रमीतानां पितॄणां तृप्तिहेतवे । दर्शसंक्रान्तिमन्वादियुगाद्यादिषु पर्वसु ॥ अन्यत्रापि निमित्तेषु पितॄन् यः श्राद्धकर्मणा । पूजयेत् स गृही सर्वान् कामानाप्नोत्यभीप्सितान् ॥ कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा । पयोमूलफलैर्वापि पितृभ्यः प्रीतिमावहन् ॥ " गृह्यसूत्रेष्वप्ययमेवार्थः; प्रमीतेभ्योऽञ्जलिंदद्यात् पिण्डांश्च तथाच सूत्रम् ' प्रेतायोदकं सकृत्प्रसिंचन्त्यंजलिनाऽसावेतत्त उदकमिति । ' ' प्रेताय पिंडं दत्वाऽवनेजनदानप्रत्यवनेजनेषु नामग्राहम् । ' ' पिण्डकरणे प्रथमः पितॄणां प्रेतः स्यात् पुत्रवांश्चेत ' । एतेन जीवतामेव पित्रादिकानां परिचरणं श्राद्धमिति कथयन्तो भ्रान्ता एव ।

तच्च श्राद्धं चतुर्विधम् । एकोद्दिष्ट, सपिंडन, पार्वण, नान्दीभेदात् । विश्वेदेवविहीनमेकपिंडयुतं यदेकोद्देश्यकं श्राद्धं तदेकोद्दिष्टमुच्यते । पित्रर्घ्यपात्रपिण्डेषु मेलनं येन भाव्यते । प्रेतार्घ्यपिण्डयोस्ताद्धि सपिण्डनमुदीर्यते ॥ दर्शरविसंक्रमादिपर्वणि यत् क्रियते तत् पार्वणश्राद्धम् । अग्न्याधानसोमयागादेः पुत्रजन्मविवाहादेश्च शुभकर्मणः प्रारंभे यदङ्गतयानुष्ठीयते तन्नान्दीश्राद्धम । तत्र तावदेकोद्दिष्टं श्राद्धं त्रिविधम् । नव, नवमिश्र, पुराणभेदात् । तत्र मृतस्यपित्रादेः प्रथमदिनमारभ्य दशाहान्तं विहितानि श्राद्धानि नवानीत्युच्यन्ते । एकादशाद्यूनाब्दिकान्तानि नवमिश्राणि । ततः पराणि सांवत्सरिकादीनि तु पुराणानि । ननु 'सपिण्डीकरणं कृत्वा कुर्यात् पार्वणवत् सदा । प्रतिसंवत्सरं श्राद्धं छागलेयोदितो विधि'रिति शातातपादिस्मृतितः पित्रादित्रितयोद्देशेन प्रतिसंवत्सरं श्राद्धस्य कर्तव्यत्वात् कथमेकोद्दिष्टभेदेषु पुराणानां सांवत्सरिकादीनां परिगणनं युज्यत इति चेत् सत्यम् । शातातपादिस्मृतिप्रामाण्येन तेषां पार्वणवदनुष्ठेयत्वेऽपि 'सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक् कार्यमेकोद्दिष्टं मृतेऽहनि ॥' इति यमाद्युक्तेरेकोद्दिष्टविधिनापि सांवत्सरिकश्राद्धस्य कर्तव्यत्वेन संमतत्वात् । इदं च पक्षद्वयं देशाचाराद् व्यवस्थितम् । तत्र दाक्षिणात्याः पार्वणधर्मेण नागराः केचन पौरस्त्याश्चैकोद्दिष्टधर्मेण सांवत्सरिकश्राद्धमनुतिष्ठन्ति । सपिंडनं त्वेकविधमेव । एकोद्दिष्टभिन्नानां सर्वेषां नित्यनैमित्तिककाम्यश्राद्धानां पित्रादित्रितयोद्देशेनानुष्ठीयमानत्वात् पार्वणश्राद्धेऽन्तर्भावः । यद्यपि तीर्थमहालयादिश्राद्धेषु पितृव्यकाद्याप्तान्तानामेकोद्दिष्टविधिना यजनं नतु पितामहादिसाचिव्येन तथापि तत्र पित्रादित्रितयोद्देशस्य सत्वान्नाव्याप्तिरिति वदन्ति । परेतु तीर्थमहालयादिश्राद्धानि सैकोद्दिष्टपार्वणाभिधानि सांवत्सरिकादीनि श्राद्धानि च पार्वणाभिधानीति कथयन्ति

तदेवं श्राद्धाभिधं कर्म वैदिकं प्रमीतोद्देश्यकं चेति निरूपितम् । भेदाश्च प्रदर्शिताः । अथ विधिवदनुष्ठितस्य श्राद्धकर्मणः फलं मनुयाज्ञवल्क्यावाहतुः । यद्यद्ददाति विधिवत् सम्यक्श्रद्धासमन्वितः । तत्तत् पितॄणां भवति परत्रानन्तमक्षयम् ॥ आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च । प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः ॥ ( पितरः श्राद्धतर्पिताः इत्यपि पाठान्तरम् )

॥ ३

नन्वेतद्वचनद्वयोपस्थापितोऽर्थो नोपपद्यते। प्रातिस्विकशुभाशुभकर्मवशेन स्वर्गनरकादिगतानां प्राणिनां पुत्रादिभिर्दत्तैरन्नपानादिभिस्तृप्त्यसंभवात्। यथाकथंचित्तृप्तिसंभवेऽपि ये पितर आत्मनोप्यनीश्वराः कथं ते श्राद्धकर्तृभ्यः पुत्रादिभ्यो राज्यादिफलं प्रयच्छेयुरिति शङ्काया निरासः कृतोऽन्यत्र भगवद्भ्यां मनुयाज्ञवल्क्याभ्याम्॥ वसून् वदन्ति तु पितॄन् रुद्रांश्चैव पितामहान्। प्रपितामहांस्तथादित्यान् श्रुतिरेषा सनातनी॥ वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः। प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेन तर्पिताः॥ इति स्मृतिवचनाभ्यां न केवलं प्रमीता देवदत्तादय एव पित्रादिपदवाच्या अपि तु वसवो रुद्रा आदित्या एते पितरः श्राद्धदेवता अपि पितृपितामहप्रपितामहादिशब्दवाच्यास्त एते वसुरुद्रादित्याः स्वयं श्राद्धेन तर्पिताः सन्तो मनुष्याणां श्राद्धकारिणां पितॄन् देवदत्तादींस्तर्पयन्ति फलान्यपि शास्त्रोक्तानि प्रयच्छन्ति श्राद्धकारिभ्य आयुःप्रजाधनादिरूपाणीति। अर्थात् श्राद्धकर्मणि संप्रदानभूताः प्रमीतदेवदत्तादय एव नोच्यन्ते पित्रादिशब्दैः किन्तु तदधिष्ठातृवस्वादिदेवतासहिता एव प्रमीतदेवदत्तादयः श्राद्धकर्मसंप्रदानभूता उच्यन्ते। ततश्च तदधिष्ठातृदेवता वस्वादय एव श्रद्धायुतैः पुत्रादिभिर्दत्तेनान्नपानादिना तृप्ताः सन्तस्तानपि देवदत्तादींस्तर्पयन्ति फलेन च योजयन्ति श्राद्धकर्तॄन् पुत्रादींश्चेति सनातन वैदिक सिद्धान्तः। अस्य प्रपंचस्तु हरिवंशमहाभारतगरुडमत्स्यादिपुराणेभ्योऽवगन्तव्यः।

ग्रन्थोऽयं सर्वप्रकाराणां मृतानुद्दिश्य क्रियमाणानां कर्मणां प्रकाशकः। यद्यपि विश्वनाथ्यन्त्येष्ट्यर्कादिप्रयोगग्रंथाः सन्त्यनेके परं तेषु केषांचित्कर्मणां समासेन प्रदर्शनात् केषांचिच्चाप्रदर्शनादन्तरान्तरा कारिकाप्रदर्शनेनोच्छिद्यमानप्रयोगधारात्वात् मंत्राणांकुत्रचित् प्रतीकेनैव प्रदर्शनात् साधारणबुद्धीनां कर्मकारयितॄणां नातीवोपयुक्ता इति ग्रन्थस्यास्यमुद्रापणप्रयत्नोऽकारि। अस्य ग्रन्थस्य प्रयोगाः दालभ्यप्रोक्तस्मृतिमनुरुध्य ग्रथिताःअतएवास्य दालभ्यविधानेति नाम्ना प्रसिद्धिः। दाक्षिणात्याश्च प्रायेणामुमेव विधानमवलंब्य कर्म कुर्वन्ति कारयन्ति च। दालभ्यविधानस्य हस्तलिखितानेकग्रंथान् संगृह्य ग्रन्थान्तरेभ्योप्यविरुद्धान् कांस्कानंशानादाय मूलकारिकावलोकनेन परिशोध्य च मुद्रापितोऽयं ग्रन्थः।

उट्टङ्कितावश्च प्रतिस्थलं बह्व्यः कारिकाः प्रयोगोपस्थापिकाः। प्रयोगेषु सर्वत्र संपूर्णमन्त्राणामुल्लेखात्साधारणजनानामप्युपकारकोभवितास्यं ग्रंथः। मंडलक्रमाचित्रप्रदर्शनेन कर्मोपयोगिसाहित्यसूचीनामुट्टंकनेन च संस्कारितोऽयं साङ्गोपाङ्गकर्मकलापपरिदर्शको ग्रन्थः; अवश्यमावर्जयिष्यति याज्ञिकमनांसि। मुद्रापणार्थं संग्रहीतानां सर्वेषामेव ग्रन्थानां व्याकरणाशुद्धिप्राचुर्येण युक्तत्वात् यथामनीषमशुद्धिप्राचुर्यनिरसनेन मार्जितायामपि प्रथमावृतौ भाव्यमनवधानेन तत्र तत्र पदाशुद्धिभिरत्र मर्षणीयं विद्वद्भिः।

ग्रन्थस्यास्य मूलभूता दालभ्यस्मृतिरद्यावधि न कुत्रापि मुद्रिता। पुण्यपत्तने (भांडारकर रिसर्च इन्स्टीट्यूट्) इत्यभिधे पुस्तकालये बिकानेरराजकीयग्रन्थालये च चकास्ति दालभ्यप्रोक्ता स्मृतिः। द्वितीयावृत्तौ तस्याः स्मृतेरपि मुद्रापणमवश्यं करिष्य इति मनीषा प्रकाशकस्य। अशुद्धिबाहुल्यग्रस्तममुं ग्रंथं महता प्रयत्नेन संशोध्य प्रकाशनेन; न्यग्रोधपुर (वलसाड) स्थश्रीविद्यामृतवर्षिणीपाठशालाया भूतपूर्वाध्यापकाभ्यां 'सूर्यराम' चुनीलालशर्मभ्यां कर्मठजनतायां वहूपकृतमिति कथनं नातिकथनं स्यात्। प्रदीप इव कर्मणां प्राञ्जलतया प्रकाशनेन; अशुभकर्मप्रदीपाभिधोऽयं ग्रंथः सत्यमन्वर्थायते। प्रमीतोद्देश्यकानां समेषामेव कर्मणां निरूपणेन ग्रंथांतरेभ्योऽतिशेतेऽयमित्युक्तिरपि तथ्यैव। प्रयोगेष्वपि ग्रन्थान्तरेभ्यः क्वचिद्विशेषो दृश्यते तत्र प्रमाणत्वेनोपन्यस्ताः कारिकाः। कर्मसूच्चार्यमाणानां पदानां स्थूलाक्षरेणांकनात् केवलं बोद्धव्यानां सूक्ष्माक्षरेणांकनाच्च ग्रंथसौष्ठवमपि सुसंगतं जातम्। चतुर्थभागस्य मुद्रणावसरे सूतिकाविधानं पंचकविधानं चेति प्रयोगद्वयमनवधानतोऽमुद्रितं तत्पश्चान्मुद्रापयित्वा पत्रांकान् २१/१८ २१/२८ इत्येवंरूपेण विधाय चतुर्थभागस्यान्ते प्रस्थापितम्। तदेवं प्रकाशितो ग्रंथः सदसद्व्यक्तिहेतुभ्यः सद्भ्यः समर्पितः सर्वविद्यानामीशानस्य भगवतो विद्यातीर्थस्य महेश्वरस्य प्रसादेन चिरमावर्जयेत् सतां मनांसीत्याशास्ते.

**न्यग्रोधपुराभिजनः श्रीमुंबादेवीसंस्कृतपाठशालाध्यापको दीक्षितोपनामा कल्याणजित्तनुजो मोतीरामः**

# ॥ विषयानुक्रमणिका ॥

## द्वितीयोविभागः



## तृतीयोविभागः

## चतुर्थोविभागः

## सूक्तसंग्रहाख्यः पंचमोभागः



सूतिकाविधानं पञ्चकविधानं चानवधानतोऽमुद्रितं तत्प्रयोगद्वयं पश्चान्मुद्रापयित्वा चतुर्थभागस्यान्ते $\frac{२३८}{१}$ $\frac{२३८}{२}$ एवं पत्रांकान्
विन्यस्य स्थापितम् ॥

॥७

## ॥ एकादशाहश्राद्धेमंडलानि ॥



प्रेतमातृकास्था०



वृषमातृकास्था०



पंचदेवतास्था०



सत्येशस्था०



वृषोत्सर्गहोमस्थं०



प्रायश्चित्तहोमस्थं०

यजमानासनम्



॥८॥

# पंचकविधानयुतैकादशाहश्राद्धेमंडलानि



वृषोत्सर्गस्था० पंचदेवतास्था०



चतुर्दशयमस्था०



पंचकविधानदेवतास्था०



सत्येशस्था०



वृषोत्सर्गहोमस्थं०



प्रायश्चित्तहोमस्थं०



पंचकविधानहोमस्थं०



यजमानासनम्



||१|| ||१||

# सूतिकाविधानसहितैकादशाहश्राद्धे देवतामंडलस्थापनक्रमः



वसोर्धारा रुद्रकलश सहित वृषमातृका स्थापनम्.



प्रेतमातृकास्थापनम्.



ब्रह्मादिपंचदेवता स्थापनम्.



विष्णवादिपंचदेवतासहित चतुर्दशयमानां स्थापनम्.



सत्येशस्थापनम्.



वृषोत्सर्गहोमस्थंडिलम्.



सूतिकाविधान होमस्थंडिलम्.



प्रायश्चित्तहोम स्थंडिलम्.



यजमानासनम्.



||१||

# समानयश्राद्धेस्थापनक्रमः

विष्णोः स्थापनम्



यजमानासनम्



विश्वेदेवाः

विश्वेदेवाः

प्रेतस्थाप०

प्रेतपिता

प्रेतपिता महः

प्रेतप्रपितामहः

॥१०॥

## त्रयोदशाहेपाथेयश्राद्धेस्थापनक्रमः

विष्णुस्थापनम्



द्वादशश्रवणानां ललितादिशक्तियुतानां स्थापनम्



यजमानासनम्



# शुद्धषोडशमासिकनिवृत्तिश्राद्धेस्थापनक्रमः

विष्णुस्थापनम्

पित्रादिस्थापनम्

यजमानासनम्



विश्वेदेवाः

विश्वेदेवाः

॥११॥

# नारायणबलिश्राद्धेस्थापनक्रमः

ग्रहस्थापनम्



ब्रह्मादिपंचदेवताः



क्रौंचादिप्रेतस्था०



चतुर्दशयमाः



सत्येशस्था०



ग्रहहोमस्थंडिलम्



प्रायश्चित्तहोमस्थंडिलम्



यजमानासनम्



॥१२॥

## सर्पबलिश्राद्धेस्थापनक्रमः

नवनागानांस्थापनम्



होमस्थंडिलम्



सत्येशस्थापनम्



यजमानासनम्



# एकतन्त्रेण पंचबलिविधाने मंडलक्रमः






















॥१३॥

## द्वादशाहेपंचदशमासिकश्राद्धेमंडलक्रमः

विष्णुस्थापनम्



यजमानासनम्



पंचदशश्रा
द्धानां
स्थापनम्

# एकतन्त्रेण पंचबलिविधाने मंडलक्रमः


ग्रहस्थापनम्


होमस्थंडिलम्


अभिषेकवेदी





गणपतिस्था०


सत्येशस्था०


वास्तुस्थापनम्

॥१३॥

# द्वादशाहेपंचदशमासिकश्राद्धेमंडलक्रमः

विष्णुस्थापनम्



पंचदशकु
शबटूनां
स्थापनम्

यजमानासनम्



||१४||

## ॥ भूतबलिश्राद्धे मंडपः ॥




||१४||

## नीलोत्सर्गेस्थापनक्रमः



वृषोत्सर्गः



ग्रहाणांस्थापनम्



गौर्यादिमातृणांस्था०



सत्येशस्था०



वृषोत्सर्गहोमस्थंडिलम्



ग्रहहोमस्थंडिलम्



यजमानासनम्



# ॥ अथदाल्भ्योक्तोऽशुभकर्मप्रदीपः ॥

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीगुरुचरणकमलेभ्योनमः ॥ सिन्दूराभंलम्बकर्णा-
भिरामं शुण्डादण्डंचाभितश्चालयन्तम् ॥ भूयोभूयोनौमिगौरीशबालंस्वेष्टेसिद्धेकोजगत्या-
मुपास्यः ॥ १ ॥ अविरलमदजलनिवहंभ्रमरकुलानीकसेवितकपोलम् ॥ अभिमतफलदातारं-
कामेशंगणपतिंवन्दे ॥ २ ॥ स्मृतिसारंसमुद्धृत्यप्रणीतमौर्ध्वदेहिकम् ॥ दाल्भ्यंमुनिशार्दूलं-
प्रणमामिपुनःपुनः ॥ अथशुक्लयजुर्वेदान्तर्गतमाध्यंदिनीशाखोक्तं " और्ध्वदेहिकं " कर्म
लिख्यते ॥ आसन्नमरणपित्रादिकंज्ञात्वापुत्रादयस्तीर्थेनीत्वाप्रायश्चितंकारयेयुः ॥ तदीयंप्रायश्चित्तंस्वयंवाकुर्यात् ॥
तद्यथा–षडब्दंत्र्यब्दंसार्धाब्दंवायथाशक्तितदैवसुवर्णादिप्रत्याम्नायद्वाराकुर्यात् ॥ अथप्रायश्चित्तेन्दुशेखरधर्मसिन्धु-
१ कल्पद्रुमाद्यनुसारीसर्वप्रायश्चित्तप्रयोगः ॥ तच्चषडब्देप्राजापत्यानि १८० त्र्यब्दे ९० सार्धाब्दे ४५ अब्दे-
प्राजापत्यानि त्रिंशत् ३० ॥ प्राजापत्यलक्षणं ॥ त्र्यहंप्रातस्त्र्यहंसायंत्र्यहंमद्यादयाचितं ॥ त्र्यहंपरंचनाश्नी-
यात्प्राजापत्योयमुच्यते ॥ १ ॥ प्राजापत्यप्रत्याम्नायश्चयथा–गायत्र्याअयुतजपः ॥ तिलहोमःसहस्रव्याहृतिभिः ॥
द्वादशब्राह्मणभोजनं ॥ तीर्थयोजनयात्रा ॥ द्वादशस्नानानिशुष्ककेशपर्यन्तं ॥ वेदसंहितापारायणं ॥ द्वादशसहस्रनमस्काराः ॥

द्वात्रिंशदुत्तरशतंप्राणायामान्कृत्वाअहोरात्रमुपोषितस्तिष्ठेत् ॥ रुद्रैकादशिनी ॥ षडुपवासाः ॥ एकविप्रभोजनमुपवासश्च ॥ अत्यशक्तौसहस्रगायत्रीजपः ॥ द्वादशप्राणायामावेतिस्मृत्यर्थसारे ॥ प्राजापत्येऽशक्तस्तुधेनुंदद्यात्पयस्विनीम् ॥ धेनोरभावेनिष्कंस्यात्तदर्धंपादमेववा ॥ एकगोदानेसुवर्णरौप्यनिष्कंतदर्धंतदर्धंवागोमूल्यंस्यात्शक्त्यादाने ॥ शुष्ककेशवद्वादशस्नानेषु द्विगुणद्वादशामान्नदानाद्यौचैकंप्राजापत्यामिति ॥ तत्रशक्तस्यामान्नंद्विगुणंद्रव्यं चतुर्गुणंमित्यादियोज्यं ॥ अथनिष्कलक्षणं—अष्टरक्तिकोमाषः ॥ माषदशकंसुवर्णम् ॥ सुवर्णचतुष्टयंनिष्कः ॥ एवंचगणनायांविंशत्यधिकशतत्रयरक्तिकाभवंतीतिलोके ॥ ३२० ॥ शास्त्रेतुपंचरक्तिर्माषः ॥ माषदशकंसुवर्णः ॥ सुवर्णचतुष्टयंनिष्कः ॥ एवंचलोकशास्त्रयोरेकवाक्यतयाचत्वारिंशन्माषाः ४० ॥ अशक्तौतदर्धं२०तदर्धंवा१०तत्रमुख्यंसुवर्णंतदशक्तौरजतं ॥ एतेषुपञ्चदशकृच्छ्रेषुअन्यतमंयथाशक्तिप्रायश्चित्तंकर्तव्यं ॥ तद्यथा ॥ चत्वारोवेदधर्मज्ञाःपर्षत्त्रैविद्यमेववा ॥ साब्रूतेयंसधर्मःस्यादेकोवाध्यात्मवित्तमः ॥ १ ॥ इतियाज्ञवल्क्योक्तपर्षल्लक्षणलक्षितानांवेदधर्मशास्त्रविदांस्वाचारनिष्ठानांपर्षदर्हाणामृग्यजुः सामाध्येतॄणांचतुर्णांत्रयाणांएकस्यवाध्यात्मविदोब्राह्मणस्यपर्षत्वेनोपवेशनं तदग्रेवाग्यतः सचेलंस्नात्वाक्लिन्नवासाः पर्षदंप्रदक्षिणीकृत्यहृदयेनदूयमानोधरण्यांसाष्टाङ्गंप्रणमेत् ॥ ततस्तैः किंतेकार्यंमिथ्यामावादीः, सत्यमेववद, इत्यादिपृष्टेपर्षदग्रेगोवृषयोःप्रत्येकंप्रत्याम्नायत्वेनयथाशक्तिस्वर्णरौप्ययोर्निष्कंतदर्धंतदर्धंवानिवेदनम् ॥ **अथोपहारकल्पनं** ॥ गंधः ॥ पुष्पं ॥ धूपः ॥ दीपः ॥ फलताम्बूले ॥ पञ्चगव्यानिपृथक्पृथक् ॥ मृत् ॥ भस्म ॥ गोमयं ॥ दूर्वा ॥ तिलाः ॥ समित् ॥ दर्भः ॥ होमार्थंघृतं ॥ पर्षद्दक्षिणा ॥ निबंधानुवादकपूजार्थंदक्षिणा ॥ पूर्वोत्तराङ्गगोदानं ॥

विष्णुश्राद्धद्रव्यामिति ॥ **अथप्रयोगः** ॥ तीर्थादौगत्वा ॥ तीर्थप्रार्थना ॥ **स्मरणात्किल्मिषंहन्तिदर्शनं सर्वकामदं ॥ नमस्काराद्भवेत्पुष्टिःस्नानाच्चपरमंपदं** ॥ गोदावर्यादितीर्थमवलोक्यसाष्टाङ्गंप्रणमेत् ॥ पाणिपादंप्रक्षाल्याचम्य, **देशकालौसंकीर्त्यसर्वप्रायश्चित्तांगतयाविहितंसचैलस्नानंकरिष्ये** ॥ अशक्तौतु-स्वगृहेएवपाणिपादप्रक्षालनंकृत्वा ॥ ततश्चत्रीनेकंवाध्यात्मविदंपर्षत्वेनोपवेश्यकृतस्नानःशक्तश्चेदार्द्रवासाःपर्षदंप्रद-क्षिणीकृत्यतदग्रतउपविशेत् ॥ ततस्तेतंप्रच्छेयुः ॥ **किंतेकार्यंवदास्माभिःकिंवामृगयसेद्विज ॥ तत्वतो-ब्रूहिनःसर्वंसत्यंहिगतिरात्मनः ॥ १ ॥ अस्माकंचैवसर्वेषांसत्यमेवपरंबलं ॥ यदिचेद्वक्ष्यसे-सत्यंनियतंप्राप्स्यसेशुभं ॥ २ ॥ यद्यागतोस्यसत्येननत्वंशुध्यसिकर्हिचित्** ॥ ततः कर्तापर्ष-दग्रेगोवृषयोः प्रत्येकंप्रत्याम्नायत्वेनयथाशक्तिस्वर्णरौप्ययोर्निष्कंतदर्धंवानिधाय—**तत्रसंकल्पः— करिष्यमाणसर्व-प्रायश्चित्ताङ्गतयाविहितंगोवृषनिष्क्रयद्रव्यंसभ्येभ्योदातुमहमुत्सृजेनममेति** ॥ ततःप्रायश्चि-त्तीद्विजान्वदेत् ॥ **तद्यथा—अमुकस्यमे जन्मप्रभृतिअद्ययावत्ज्ञाताज्ञातकामाकामसकृदसकृत्कायिकवाचिकमानासिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकल-घुपातकसंकरीकरणमलिनीकरणापात्रीकरजातीभ्रंशकरप्रकीर्णपातकानांमध्येसंभावितानांपापा**

नांनिरासार्थममानुग्रहंकृत्वाप्रायश्चित्तमुपदिशन्तुभवन्तः ॥ अथ स्त्रीविषयेविशेषः ॥ ( देशकालौसंकीर्त्य) पाणिग्रहणमारभ्यस्वकर्मापरिपालनेकृतानाचारइन्द्रियाभिरतिपतिसुश्रूषाभावपाकसमयकृमिकीटादिदहनपंक्तिभेदादिदोषाणांनिरासार्थंअनुग्रहंकृत्वाप्रायश्चित्तमुपदिशन्तुभवन्तः॥-आब्रह्मस्तम्बपर्यन्तंभवद्वशमिदंजगत् ॥ यक्षरक्षःपिशाचादिसदेवासुरमानुषम् ॥ १ ॥ सर्वेधर्मविवेक्तारोगोप्तारःशासकाद्विजाः ॥ ममदेहस्यसंशुद्धिंकुर्वन्तुद्विजसत्तमाः ॥ २ ॥ मयाकृतंमहाघोरंज्ञातमज्ञातकिल्मिषं ॥ प्रसादःक्रियतांमह्यंशुभानुज्ञांप्रयच्छथ ॥ पूज्यैः कृतःपवित्रोहंभवेयंद्विजसत्तमैः ॥ ३ ॥ एवंवारत्रयं पठित्वामामनुगृह्णन्तुभवन्तइतिप्रणमेत् ॥ पुत्रादिश्चेत्प्रायश्चित्तकर्तातदास्मच्छब्दस्थानेतन्नामनिर्दिशेत् ॥ ममदेहस्येत्यस्यस्थानेअस्यदेहस्येति, मयाकृतमित्यत्रअनेनकृतमितिप्रयोगः ॥ ततस्तेतमुत्थाप्यतस्यशरीरद्रव्यादिशक्तिमुत्तममध्यमादिपक्षांश्चविचार्यअस्मिन्पक्षेऽयंशक्तइतिनिश्चित्यपुस्तकवाचनपूर्वकंकथयेयुः॥ अनुवादकस्याग्रेप्रत्याम्नायांश्चशक्त्याकल्पयेयुः ॥ अस्मिन्कालेप्रायश्चित्ती चन्दनपुष्पादिभिः पुस्तकपूजांसभ्यानुवादकपूजांचविधायनिबंधपूजात्वेनचकिंचिद्यथाशक्तिद्रव्यंनिधायकृतांजलिर्नम्रस्तिष्ठेत् ॥ अनुवादकायचस्वपापानुसारेणभृतिरूपांदक्षिणांदद्यात् ॥ ततोनुवादकःपूर्वोक्तविशेषणविशिष्टानांपूर्वोक्तानांमहापातकव्यतिरिक्तानांपातकानांक्षयःपर्षदुपदिष्टेनसर्वप्रायश्चित्तेनामुकप्रत्याम्नायद्वाराप्राच्योदीच्याङ्गसहितेनानेनाचीर्णेनतवशुद्धिर्भविष्यति ॥ तेनत्वंकृतार्थोभविष्यसी-

त्युपादिशेत्रिः ॥ इत्यङ्गीकृत्यसंमानपूर्वकंप्रणम्यपर्षदंविसर्जयेत् ॥ अस्मिन्नहनिशक्तेनोपवासःकार्यः ॥ इतरेणहवि-ष्याशनम् ॥ मुख्यपक्षस्तुप्राजापत्याचरणं ॥ तदशक्तौ, एकभुक्तेननक्तेन तथैवायाचितेनच ॥ उपवासेनचैकेनपादकृच्छ्र उदाहृतः ॥ ततस्तस्यामेवान्यस्यांवारिक्तायांतिथौकृतमाध्याह्निकः गंगादितीर्थेगत्वादेशकालौसंकीर्त्य अमुकशर्मणो-ममजन्मप्रभृतिअद्ययावत्ज्ञाताज्ञातकामाकामसकृदसकृत्कायिकवाचिकमानसिकसांसर्गिक-स्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकलघुपातकसंकरीकरणमलिनीकर-णापात्रीकरजातीभृंशकरप्रकीर्णपातकानांमध्येसंभावितानांपापानांनिरासेन ( मरणकाले ) शुद्ध्यर्थंश्रीपरमेश्वरप्रीत्यर्थंचपर्षदुपदिष्टममुकप्रायश्चित्तमब्दं साद्धाब्दादिवाप्रायश्चित्तंअमुकप्र-त्याम्नायेनप्राच्योदीच्यांगसहितमहमाचरिष्ये ॥ अद्यपूर्वो० देशकालौसंकीर्त्यप्रायश्चित्तांग-त्वेनप्राच्यांगानिकरिष्ये ॥ ततोवपनं—यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रि-त्यतिष्ठन्तितस्मात्केशान्वपाम्यहम् ॥ १ ॥ इतिमन्त्रेणशिखाकक्षोपस्थवर्जं केशश्मश्रुनखानांवपनंउदक्संस्थं ॥ ततोप्राङ्मुखउपविश्यद्वादशाङ्गुलमितमौदुम्बरकाष्टग्रहणम् ॥ तत्रमन्त्रः—आयुर्बलंयशोवर्चःप्रजाःपशुवसू-

१ शिखांछिन्दन्तियेमोहाद्वेषादज्ञानतोपिवा ॥ पुनःसंस्कारमर्हन्तित्रयोवर्णाद्विजातय; इतिसंग्रहे ॥

निच ॥ ब्रह्मप्रज्ञांचमेधांचतन्नोदेहिवनस्पते ॥ १ ॥ इति मन्त्रेणदन्तकाष्ठंगृहीत्वादन्तान्धावयेत् ॥ तत्र मंत्रः—ॐअन्नाद्यायव्यूहध्वꣳसोमोराजायमागमत् ॥ समेमुखंप्रमाक्ष्यतेयशसाचभगेनच ॥ इति मन्त्रेणदन्तधावनम् ॥ ततोद्वादशगण्डूषाँस्त्यक्त्वातूष्णींस्नायात् ॥

अथदशविधः स्नानप्रयोगः ॥ आचम्यप्राणानायम्य ॥ कुशपवित्रधारणम्—ॐपवित्रेस्थो० ॥ १ ॥ हस्तेजलमादाय—अद्यपूर्वो० तिथौममजन्मप्रभृतिअद्यदिनंयावज्ज्ञाताज्ञातकामाकामसकृदसकृत्कायिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकगुरुलघुपातकसंकरीकरणमलिनीकरणापात्रीकरजातिभ्रंशकरप्रकीर्णपातकानांमध्येसंभावितानांपातकानांनिरासार्थंगङ्गादितीर्थेगृहेवास्नानार्थेस्नानविधिनास्नानमहंकरिष्ये ॥

" तीर्थप्राथना—नमामिगङ्गेतवपादपङ्कजंसुरासुरैर्वन्दितदिव्यरूपम् ॥ भुक्तिंचमुक्तिंचददासिनित्यंभावानुसारेणसदानराणाम् ॥ १ ॥ इति मन्त्रेणतीर्थानिप्रार्थयेत् ॥ शुद्धपात्रेजलपूरणम् ॥ तन्मध्येगन्धाक्षतपुष्पाणिप्रक्षिप्यउत्तिष्ठन्तुमहद्भूतायेभूताभूमिपालकाः ॥ भूतानामवरोधेनस्नानकर्मसमारभेत् ॥ श्रीतीर्थदेवतायैएषतेऽर्घः ॥ १ ॥ पुष्कराद्यानितीर्थानिगङ्गाद्याः

सरितस्तथा ॥ आगच्छन्तुपवित्राणिस्नानकालेसदामम ॥ श्रीपुष्करदेवते, एषतेऽर्घः ॥ २ ॥ ॐकारेचभृगुक्षेत्रेनर्मदाओरसंगमे ॥ सर्वत्रदुर्लभारेवात्रिषुस्थानेविशेषतः ॥ रेवे, एषतेऽर्घः ॥ ३ ॥ विष्णुपादाग्रसंभूतेगङ्गेत्रिपथगामिनि ॥ धर्मद्रवेतिविख्यातापापंमेहरजाह्नवि ॥ श्रीजाह्नविएषतेऽर्घः ॥ ४ ॥ असीवरणयोर्मध्येपञ्चक्रोशीमहत्फलम् ॥ अमरामृत्युमिच्छान्ति-इतरेषांतुकाकथा ॥ श्रीवाराणसि, एषतेऽर्घः ॥ ५ ॥ अथदशविधस्नानप्रयोगः ॥ भस्मस्नानम्—( यथा-ग्निर्दहतेभस्मतृणकाष्ठादिसंचयम् ॥ तथामेदह्यतांपापंकुरुभस्मशुचेशुचिम् ॥ ) ॐनमस्तेरुद्र-मन्यवऽउतोतऽइषवेनमः ॥ बाहुभ्यामुततेनमः ॥ १ ॥ मृत्तिकास्नानम् ( अश्वक्रान्तेरथक्रा-न्तेविष्णुक्रान्तेवसुन्धरे ॥ उद्धृतासिवराहेणकृष्णेनशतबाहुना ॥ मृत्तिकेब्रह्मपूतासिकाश्यपेना-भिवन्दिता ॥ त्वयाहतेनपापेनगच्छामिपरमांगतिम् ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥) ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरेस्वाहा ॥ २ ॥ गोमयस्नानम् ( गोमयेवसतेलक्ष्मीः पवित्रंसर्वमङ्गलम् ॥ स्नानार्थंसंस्कृतंदेवपापंमेहरगोमय ॥ अग्रमग्रंचर-न्तीनामौषधीनांरसंवने ॥ तासामृषभपत्नीनांपवित्रंकायशोधनम् ॥ यन्मेरोगंचशोकंचतन्मेद-

अ० क० हतुगोमय॥) ॐमानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्वेषुरीरिषः ॥ मानोव्वीरान्नु- प्रदीपः
द्रभामिनोव्वधीर्हविष्मन्तः सदमित्वाहवामहे ॥ ३ ॥ पञ्चगव्यस्नानम् ( पञ्चगव्यमेकत्रकृत्वा-
॥ ४ ॥ स्नानंकार्यम् ) ( गोमूत्रं गोमयंक्षीरंदधिसर्पिःकुशोदकम् ॥ सर्वपापविशुद्ध्यर्थंपञ्चगव्यंपुना-
तुमाम् ॥ ) ॐसहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ सभूमिंसर्वतस्पृत्वात्यतिष्ठद्द-
शाङ्गुलम् ॥ ४ ॥ गोरजः स्नानम् ( गवांक्षुरेणनिर्धूतंयद्रजोगगनेगतम् ॥ शिरसातेनसंह्लेपो-
महापातकनाशनः ॥ ) ॐआयङ्गौपृश्निरक्रमीदसदन्मातरम्पुरः ॥ पितरञ्चप्प्रयन्त्स्वः ॥ ५ ॥
धान्यस्नानम्—( धान्यौषधीमनुष्याणांजीवनं प्रमंस्मृतम् ॥ तेनस्नानेनदेवेशममपापंव्यपो-
हतु ॥ ॐ धान्यमसिधिनुहिदेवान्प्राणायत्वोदानायत्वोव्यानायत्वा ॥ दीर्घामनुप्रसितिमा-
युषेधान्देवोवः सविताहिरण्यपाणिः प्प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि
॥ ६ ॥ फलस्नानम् ( वनस्पतिरसोदिव्यः फलपुष्पसमन्वितः ॥ तेनस्नानेनमेदेवफलव्रतम- ॥ ४ ॥
नन्तकम् ॥ ॐ याःफलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥ बृहस्पतिप्रसूतास्तानोमु-
ञ्चन्त्वंहसः ॥ ७ ॥ सर्वौषधीस्नानम् ( औषध्यःसर्ववृक्षाणांतृणगुल्मलतास्तुयाः ॥ दूर्वा-

सर्षपसंयुक्ताः सर्वौषध्यः पुनन्तुमाम् ॥ ) ॐ ओषधयःसमवदन्तसोमेनसहराज्ञा ॥ यस्मै-कृणोतिब्राह्मणस्तꣳराजन्पारयामसि ॥ ८ ॥ कुशोदकस्नानम् ( कुशमूलेस्थितोब्रह्माकुशमध्ये-जनार्दनः ॥ कुशाग्रेशङ्करोदेवस्तेननश्यतुपातकम् ॥ ॐ देवस्यत्वासवितुःप्रसवेऽश्विनोर्बा-हुभ्याम्पूष्णोहस्ताभ्याम् ॥९॥ हिरण्यस्नानम् ( हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥ अनन्त पुण्यफलदमतःशान्तिंप्रयच्छमे ॥ ) ॐ हिरण्यगर्भःसमवर्त्तताग्रेभूतस्यजातःपतिरेकऽ-आसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ १० ॥ गङ्गास्नानम् ( विष्णुपा-दाग्रसम्भूतेगङ्गेत्रिपथगामिनि ॥ धर्मद्रवेतिविख्यातापापंमेहरजाह्नवि ॥ ) ॐ तत्सवितु० ॥११॥

इतिदशविधस्नानप्रयोगः–( अत्रावसरेकेचिद्धेमाद्रिप्रयोगंपठन्ति ॥ एतत्तुकृताकृतमेव ॥ ) किन्तुसमयमालोच्यविधेयम् ॥

अथहेमाद्रिप्रयोगः[1]–सुवर्णश्रीफलकुशतुलसीतिलयवाक्षतान्गृहीत्वाहेमाद्रिंशृणुयात्– स्वस्तिश्रीसमस्त-

---

१ अथ स्त्रीणांहेमाद्रिसंकल्पः––जन्माद्यद्यदिनंयावत्पित्रोराज्ञाविलोपनात् । स्वश्वश्रूश्वशुरादीनांपादवन्दनमर्हता ॥ १ ॥ शुश्रूषाच तयोःकार्यानतद्वाक्यविलोपनम् ॥ असमक्षंतयोःकिञ्चिद्गृहाद्भक्ष्यंनभक्षयेत् ॥ २ ॥ शयीतसुप्तेपत्यौ च भुक्तेभोजनमाचरेत् ॥ उत्थानात्पुरउत्तिष्ठेत्सदातद्व्रतमाचरेत् ॥ ३ ॥ कोपंनकर्हिचित्कुर्यात्हृष्टेतुमुदिताभवेत् ॥ दुःखितेबहुदुःखाचप्रोषितेमलिनाकृशा ॥ ४ ॥ अयमेवपरोधर्मोनारीणांपरिकीर्तितः ॥ एतद्धर्मव्यपायेनरजोगुप्ताचयाभवेत ॥ ५ ॥ धवेबुभुक्षितेपूर्वंभोजनात्कलहात्पुरा ॥-*

जगदुत्पत्तिस्थितिलयकारणस्यादिनारायणस्यप्रणतपारिजातस्याचिन्त्यापरिमितशक्त्याध्रिय-
णस्यमहाजलौघमध्येपरिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमेऽव्यक्तमहदहंकारपृथिव्य-
प्तेजोवाय्वाकाशाद्यावरणैरावृतेऽस्मिन्महति ब्रह्माण्डखण्डे आधारशक्तिकूर्मानन्तोपरिप्रतिष्ठि
तस्यातलवितलसुतलतलातलरसातलमहातलपातालसप्तपाताललोकस्योपरितनेभूर्लोकभुवर्लो
कस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकस्याधोभागेचक्रवालशैलमहावलय नागमध्यवर्ति

* परानुदर्शनाच्चैव संसर्गाज्जल्पनात्तथा ॥ ६ ॥ धवाग्रे कटुवादाच्च परबालस्य ताडनात् ॥ कालस्यातिक्रमाच्चैवउद्वाहेच पुनर्भवः ॥ ७ ॥ रौप्यकाञ्चनकांस्यादिताम्रादिधातुचौर्यतः ॥ वस्त्रचौर्यादन्यवेश्मभाण्डाद्याहरणाच्चयत् ॥ ८ ॥ घृततैलपयस्तक्र दधिकाञ्जिकचौर्यतः ॥ हिङ्ग्वादिधान्यसम्भारचौर्याच्चलावणान्नयोः ॥ ९ ॥ संमार्जनीपट्टखट्वागृहोपस्करणस्यच ॥ यस्यकस्यचिदुत्पन्नचौर्यात्परगृहादथ ॥ १० ॥ एलाकेसरकर्पूरप्रभृतिद्रव्यचौर्यतः ॥ पूगजातिनालिकेर फलादिहरणाच्चयत् ॥ ११ ॥ ताम्बूलप्लक्षपालाशरम्भादिपत्र चौर्यतः ॥ कारवल्याश्चकूष्माण्डकोशातक्यादिचौर्यतः ॥ १२ ॥ जातीचम्पकमाल्यादिपुष्पाणांचैवचौर्यतः ॥ करीषेन्धनमृल्लोष्ट चुल्लिकादेश्चचौर्यतः ॥ १३ ॥ अन्यस्माद्विविधाच्चौर्याज्जायतेपातकंचयत् ॥ परमर्मोद्घाटनात्स्वपातकस्यचगोपनात् ॥ १४ ॥ द्यूता-द्यपावनवस्तूनांदर्शनात्खेलनाच्चयत् ॥ अन्यविरुद्धप्रेक्षायामासक्त्यास्त्वप्रयोजनात् ॥ १५ ॥ स्वनाथदोषकथनात्परोद्वाहस्यभञ्जनात् ॥ वत्सानांतृणनीरादेरिच्छायामप्रदानतः ॥ १६ ॥ गणान्नगणिकान्नान्यच्छूद्रादेश्चापिभोजनात् ॥ वैश्वदेवेनकृतेचनभुक्तेचातिथौगृहे ॥ १७ ॥ नप्रदत्तेगवान्नेचनभुक्तेचैवभर्तरि ॥ बालभृत्येष्वभुक्तेषुभोजनाद्यच्चजायते ॥ १८ ॥ पङ्क्तिभेदस्यकरणाज्जलेनाग्रेश्चसेचनात् ॥ ×

नो महाकालमहाफणिराजशेषस्यसहस्त्रफणानांमणिमण्डलमण्डिते ऐरावतपुण्डरीकवामनकुमुदांजनपुष्पदन्तसार्वभौमसुप्रतीकाख्याष्टदिग्दन्तिशुण्डोत्तम्भिते अमरावत्यशोकवती भोगवतीसिद्धवतीगान्धर्ववतीकाञ्श्यवन्त्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठिते इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानादिदिक्पतिप्रातिष्ठिते लोकालोकाचलवलयिते लवणेक्षुरससुरासर्पिदधि-

---

× गृहेताम्रादिपात्राणांस्थापनादव्यवस्थितौ ॥ १९ ॥ याचकेभ्योह्यप्रदानात्सतिवित्तेचयद्भवेत् ॥ संक्रांतिग्रहपातेषुसंध्याकालेचपर्वणि ॥ २० ॥ दिवादिनिन्द्यकालेयन्मैथुनात्किल्बिषंभवेत् ॥ व्यापारकरणनिन्द्यव्रतानांकरणाच्चयत् ॥ २१ ॥ कृतव्रतानामकृते उद्यापनविधौतथा ॥ ध्वंसनात्तीर्थयात्रायाःपरगीतश्रवाच्चयत् ॥ २२ ॥ रण्डाचाण्डालगीतानांश्रवणात्पातकंचयत् ॥ सौवर्णरौप्यमुक्तानांभूषणापरिशीलनात् ॥ पतिसेवांपरित्यज्यतदाज्ञाकरणेथवा ॥ २४ ॥ पुराणादेरश्रवणात्तीर्थदेवाद्यसेवनात् ॥ स्वकीयस्तुत्याचरणान्निन्दायाश्चपरस्यच ॥ २५ ॥ देवब्राह्मणनिन्दायाः करणाद्यच्चपातकम् ॥ वाङ्मनः कायकर्मभ्योजातानांविविधात्मनाम् ॥ २६ ॥ उपपातकसंघश्चमहापातकपञ्चमः ॥ सर्वेषांपातकौघस्यविनाशार्थेविशुद्धये ॥ २७ ॥ पाणिग्रहणमारभ्यस्वकर्मापरिपालनम् ॥ इन्द्रियाभिरतिस्त्रीणांनानाजातिषुयाभवेत् ॥ २८ ॥ कृमिकीटादिदहनं पङ्क्तिभेदादिकंतथा ॥ पतिशुश्रूणाभावइतिभेदादिकंतथा ॥ २९ ॥ स्पृष्टास्पृष्टमनाचारंमनसादोषकल्पितम् ॥ तस्यसर्वस्यनाशार्थेजान्हवीयात्रयाधुना ॥ ३० ॥ अब्दमेकंकरिष्येहंयथाविभंवसारतः ॥ धनधान्यसमृध्यर्थंपुत्रपौत्रादिसन्ततेः ॥ ३१ ॥ स्वर्गादिफललाभायकुर्वेस्नानंद्विजाज्ञया ॥ ३२ ॥ हस्तेस्थितंद्रव्यंभूमौन्यसेत ॥

क्षीरोदकयुक्तसप्तार्णवपरिवृते जम्बूप्लक्षशाल्मली कुशक्रौञ्चशाकपुष्कराख्यसप्तद्वीपयुते इन्द्र-कांस्यताम्रगभस्तिनागसौम्यगन्धर्वचारणभारतेतिनवखण्डमण्डिते महेन्द्रमलयसह्याद्रि हिम-ऋक्षविन्ध्याद्रिपारियात्राह्वयसप्तकुलपर्वतविराजिते मातङ्गहिरण्मयशृङ्गमाल्यवत् किष्किन्धा-चित्रकूटादिपञ्चमहानगरसहिते हेमशैलहेमकूटसुधाचलश्वेताचलशृङ्गवताख्येमहाशैलसमधिष्ठिते सुमेरुनिषधाद्रिश्रीकूटरजतकूटअभ्रकूटचित्रकूटहेमकूटहिमविन्ध्याचलादिसहिते हरिवर्षकिंपुरुषयोर्दक्षिणतोनवसहस्रविस्तीर्णे मलयाचलादुत्तरतःस्वर्णप्रस्थादारभ्येन्द्रशुक्लावृतकृतास्थितमहारण्यशुक्लपाञ्चजन्य सिंहललङ्काख्यनवभागात्मके महासरोरुहाकारपञ्चाशत्कोटियोजन-विस्तीर्णे भारतकिंपुरुषहरीलावर्त्तकुरुभद्राश्वकरमणकहिरण्मयकेतुमालाख्येनवसहस्रयोजनाविस्तीर्णेभारतखण्डे चन्द्रप्रस्थशुक्तिकआवन्तकरमणकपाञ्चजन्यसिंहललङ्काअशोकवत्यलकावतीसिद्धवतीगान्धर्वत्यादिपुण्यपुरीविराजिते नवखण्डोपमण्डितेभूमण्डलेभरतवर्षेभरतखण्डेकर्मभूमौकुमारिकानाम्निक्षेत्रेजम्बूद्वीपेलङ्काकुरुक्षेत्रादिसमस्तभूमध्यरेखायाःपश्चिमदिग्भागे श्रीतपतीनर्मदयोर्दक्षिणदेशेऐक्षारण्यदण्डकारण्यविंध्यारण्यनैमिषारण्यगुहारण्य बदरिकारण्यचम्प

कारण्याद्वैतारण्यार्बुदारण्यदारुकारण्यकामिकारण्येत्येकादशारण्ययुतेस्वाम्यवती कुरुक्षेत्रगङ्गा-
कावेरीयमुनासरस्वत्यादिमहानदीपुण्यतीर्थविलसिते अयोध्यामथुरामायाकाशीकाञ्चीअवन्ति-
का ॥ गयाद्वारावतीख्यातामहामुक्तिप्रदस्थले॥सगरनगरवत्सनगरकूर्मनगरस्वाम्यनगरमहामा-
नसरोवराकार अमरावतीसेतुमाललोहिताक्षचकोरश्रीशैलकैलासानामुपरिसमभूमध्यरेखायाः
पूर्वदिग्भागेकृष्णागोदावर्योरुत्तरेदेशेशालग्रामाविश्वेश्वरादिसकलदेवतानांसन्निधौ ॥ अस्यश्री
मज्जलनिधिमध्यमध्यासितभुजङ्गभोगपर्यङ्कशयनस्यादिनारायणस्यलक्ष्मीपतेर्नाभिमण्डलोत्थि
तस्यसकलजगत्स्रष्टुः परार्धद्वयंजीविनोब्रह्मणोद्वितीयेपरार्द्धेएकपञ्चाशत्तमेवर्षेप्रथममासेप्रथम
पक्षेप्रथमदिवसेअह्नोद्वितीयेयामेतृतीयमुहूर्त्ते रथन्तरादिद्वात्रिंशत्कल्पानांमध्येअष्टमेश्वेतवा-
राहकल्पे स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषाख्यषण्मन्वन्तरेषुव्यतीतेषुसप्तमेवैवस्वत
२ मन्वन्तरेकृतत्रेताद्वापरकलिसंज्ञकानांचतुर्णांयुगानांमध्ये वर्त्तमानाष्टाविंशातितमे कलियुगे
प्रथमचरणेगोदावर्याउत्तरेभागे श्रीमन्नृपविक्रमार्कात् श्रीमन्नृपशालिवाहनाद्वायथासंख्यागमे
नचान्द्रसावनसौरादिमानपर्याप्तेप्रभवादिसंवत्सराणामन्यतमेव्यावहारिकसंवत्सरे अमुकायने

अमुकऋतौअमुकमासेअमुकपक्षेअमुकतिथौअमुकवासरेअमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थितेचन्द्रे अमुकराशिस्थितेश्रीसूर्ये अमुकराशिस्थिते देवगुरौशेषेषुग्रहेषुयथायथं राशिस्थानस्थितेषुसत्सुएवंगुणविशेषणविशिष्टायांशुभपुण्यतिथौ अस्मिन्महापुण्यकालेदुस्तरे संसारचक्रे नानाविधकर्मविपाकविचित्रैर्विविधादृष्टैर्विचित्रासुचतुरशीतिलक्षभेदाभिन्नासुयोनिषु प्रत्येकमनेकाविद्यापरिभ्रममाणस्यकेनापिसुकृताविर्भावविशेषेणेदानींमनुष्ययोनौद्विजादिजन्मप्राप्तवतोममानेकजन्माभ्यासादेरेतज्जन्मप्रभृत्येतत्क्षणपर्यन्तंबाल्यकौमारयौवनवार्द्धकेषुजाग्रत्स्वप्नसुषुप्त्यवस्थासुमनोवाक्कायेन्द्रियव्यापारैः कामक्रोधलोभमोहमदमत्सरकृतानांवाक्पाणिपादपायुचक्षुः श्रोत्रजिह्वानासिकाभिश्चकृतानांप्रकाशाप्रकाशज्ञानाज्ञानकृत–ब्रह्महत्यासुरापानस्वर्णस्तेयगुरुदारगमनसंसर्गेणमहापातकानां मातृपितृगुरुभ्रात्रादीनांताडन–तर्जन-ब्राह्मणमर्मदोषकथनदेवद्विजगोसम्बन्धिद्रव्यापहरणगुरुवधक्षेपण– तडागारामच्छेदन– विषमप्रयोगादिछन्दोनिन्दाकरण–अकृत्यकरण–अन्यायकरण–धरणीवित्तापहरणादिविघ्नाचरणात्मोत्कर्षपरनिन्दापरापवादानृतभाषण–पंक्तिभेदप्रतिश्रुताप्रदानादीनां ब्रह्महत्यासमानानां पलाण्डुल-

शुनशृंजनादिभक्षण–पुष्पिणीमुखास्वादनक्षालनोदकपानमुखनिसृतकपिलापयःपान-यज्ञोपवीतपरित्याग–कूटसाक्षीप्रदानादीनां मद्यपानसमानानां पितृस्वसृमातृभ्रातृभार्यातनयाभागिन्याचार्यतनयासेवन सखिभार्याप्रव्रजिताशरणागतधात्रीवर्णोत्तमांत्यजाद्यगम्यागमनजनितानां गुरुदारसमानानां पशुसेवनप्रतिपत्प्रभृत्यनध्यायाध्यापनानग्नित्वपौरोहित्यदेवालयासंरक्षणीकरणकृषिकर्मशिल्पविद्याभ्यासादिजनितानांस्वर्णस्तेयसमानानां ब्राह्मणस्त्रीगमन–साधारण स्त्रीगमन विधवागमनशूद्रस्त्रीगमनवेश्यागमनकन्यागमनवधूगमन प्रतिलोमजानुलोमजागमन स्वस्त्रीऋतावगमन पशुयोनिगमन मनसाभिलाषपरस्त्रीनिरीक्षणपरस्त्रीस्पर्शनसंभाषणागम्यागमन अभक्ष्यभक्षणअभोज्यभोजन असेव्यसेवन अलेह्यलेहन अश्राव्यश्रवण–अहिंस्यहिंसन–अचोष्यचोषण–अपेयपेय–अस्पृश्यस्पर्शन– परमर्मोद्घाटन– देवब्राह्मणवृत्तिच्छेदन–भार्याविसर्जन–मातृपितृतिरस्कारात्मस्तुति–गुरुनिन्दा–ब्राह्मणनिन्दा–यतिनिन्दा–परनिन्दा-द्विजभेद–पितृभेद–स्त्रीपुरुषभेद–स्थूलसूक्ष्मजीवहिंसन क्रूरकर्मान्वितलुब्धकपिशुनचौरपाखण्डचाण्डालशवास्थिस्पर्शन–दिवामैथुन–एकादशान्नसूतकान्नगर्हितान्नपतितान्न राजार्पिता

 न्नकांस्यपात्रभोजन–वटाश्वत्थार्ककुम्भीतिन्दुकपत्रभोजन– ऋणानपाकरण– पर्णविक्रय– पर- 
भेदनगर्भपातन–हिंसामन्त्रविधान – भ्रूणहत्यासंकरीकरणमलिनीकरणापात्रीकरणजातिभ्रंश
 करणायाज्ययाजन -ब्राह्मणस्त्रीबालगोपशुकृमिकीटादिजीववध - मिथ्याक्रमुकभक्षणासाक्षीभो-
जनताम्बूलभक्षण–अह्नःखट्वारूढतोयपान देवगुरुब्राह्मणाग्रेपादुकारोहण–गोयान–वृषभयान-
महिषीयान–गर्दभयान–उष्ट्रयान–ब्राह्मणयान–अन्त्यजयान–अजयान–भृत्याभरण स्वग्राम
त्याग–श्रोत्रियत्याग–दूरस्थनिमन्त्रण–विप्राशाभेदन अवन्दिताशीर्वादहयविक्रयरसविक्रय
गोविक्रयकन्याविक्रय दासीविक्रयराजप्रतिग्रह परद्रव्यापहरण शौचविरहितस्नानाविरहिता
पोशनविरहितवैश्वदेवविरहित ( शूद्रश्चेत्पंचभागविरहित ) भोजनसहापत्यभोजनपतितसं
भाषण क्रमुकपात्रभोजन मार्जारोच्छिष्टभोजन पतितपंक्तिभोजन परस्परस्पर्शभोजनेत्यादि
स्वप्नेंद्रियनिपाताद्यष्टमीचतुर्दशीदिवाभोजन–भानुवारपर्वदिनरात्रीभोजन–गर्भिणीस्त्रीमनोरथा 
करण–कारागृहनिवासामेध्यनिवास–नदीलंघन–समुद्रस्नानादीनां पापानांपरिहारार्थममपि
त्रादिसमस्तपितॄणां स्वस्यचापुनरावृत्तिरहितशाश्वतब्रह्मलोकफलप्राप्त्यर्थं मद्वंश्यानां दशपरेषां

दशपूर्वेषांनरकादुत्तारणार्थं मासोपवासादिमहाव्रतानांतुलापुरुषादिमहादानानां च कोटिगुणितफलप्राप्त्यर्थमैहिकसकलभोगप्राप्तये धर्मार्थकाममोक्षाणांसिद्ध्यर्थं मनसोद्दिष्टंदेहशुध्दिप्रायश्चित्तसुवर्णतन्निष्क्रयभूतंवाद्रव्यंदातुमहमुत्सृजेतेन भगवान् पापहामहाविष्णुः प्रीयताम्॥ इति हेमाद्रीप्रयोगः ॥ ततः स्वसूत्रोक्तविधिनामन्त्रतः स्नानविधिंविधाय स्नानाङ्गतर्पणंकुर्यात् ॥ अथस्नानाङ्गतर्पणम् ॥ देवतीर्थेन ॐ भूर्देवांस्तर्पयामि० ॐ भुवर्देवांस्त० ॐ स्वर्देवांस्त० ॥ ॐ भूर्भुवः स्वर्देवांस्त० ॥ ततोनिवीती ॥ मनुष्यतीर्थेन–ॐ भूर्मनुष्यांस्त०॥ ॐ भुवर्मनुष्यांस्त०॥ ॐ स्वर्मनुष्यांस्त०॥ ॐ भूर्भुवः स्वर्मनुष्यांस्त०॥प्राचीनावीती ॥ पितृतीर्थेन ॐ भूःपितृंस्त०॥ ॐ भुवःपितृंस्त० ॥ ॐ स्वःपितृंस्त० ॥ ॐ भूर्भुवःस्वःपितृंस्त० ॥ सव्यं ॥ आचमनं ॥ शिखोदकत्यागः ॥ लतागुल्मेषुवृक्षेषुपितरोयेऽवस्थिताः ॥ तेसर्वेतृप्तिमायान्तुमयोत्सृष्टैः शिखोदकैः॥ १ ॥ इतिमन्त्रेण शिखांनिष्पीड्य ॥ यक्ष्मतर्पणम् ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तस्यपापस्यशुध्यर्थं यक्ष्माणंतर्पयाम्यहम् ॥ १ ॥ इतिमन्त्रेणतीर्थतटेऽञ्जलिप्रक्षेपः धौतेवाससीपरिधाय ॥ इतिहेमाद्रिश्रवणपूर्वकदशविधस्नानप्रयोगः

अथ प्रायश्चित्ताङ्गभूतं अष्टशाक्तिसहितसत्येश पूजनम् ॥ भस्मनात्रिपुण्ड्रंकृत्वानूतनयज्ञोपवीत धारणम् ॥ तद्यथाआचम्यप्राणानायम्य ॥ अद्यपूर्वो० तिथौ ममश्रौतस्मार्तकर्मानुष्ठानसिध्यर्थं देहशुद्धिप्रायश्चित्ताङ्गत्वेनयज्ञोपवीतधारणमहंकरिष्ये ॥ आपोहिष्ठेतिप्रक्षाल्य दशधागायत्र्याभिमन्त्र्यतन्तुदेवानावाहयेत् ॐ प्रथमतन्तौ ॐकारं आवाहयामि ॥ द्वि०अग्निंआ० ॥ तृ० सर्पान्आ० ॥ च०सोमं आ० ॥ पं० पितॄन् आ० ॥ ष०प्रजापतिंआ० ॥ स०अनिलंआ० ॥ अ०यमम् आ० ॥ न०विश्वान्देवान् आ० ॥ ९ ॥ ग्रन्थिमध्ये ॐ ब्रह्माणंआ० ॥ विष्णुंआ०॥ रुद्रंआ० ॥ इत्यावाह्य गन्धपुष्पैरभ्यर्च्यसूर्यायप्रदर्श्यधारयेत्–ॐ यज्ञोपवीतं० ॥ आचम्यजीर्णं विसृज्य यथाशक्तिगायत्रींजपेत् ॥ अनेनयज्ञोपवीतधारणेनकर्माधीशः प्री० ॥ ततः श्वेतवस्त्रोपरितण्डुलैरष्टदलंविरच्यसत्येशपूजनम् ॥ अद्य पूर्वो० तिथौ ममसर्वपातकनिवृत्त्यर्थंसत्येशस्यअष्टशक्तिसहितस्याविष्णोश्चस्थापनप्रतिष्ठापूजनमहंक० ॥ महीद्यौरिति भूमींस्पृष्ट्वा–ॐ म॒ही द्यौःपृ॑थि॒वी च॑नऽइ॒मंय॒ज्ञम्मि॑मिक्षताम् ॥ पि॒पृ॒तान्नो॒भरी॑मभिः ॥ १ ॥ यवान्क्षिप्त्वा–ॐ ओष॑धयः॒सम॑वदन्त॒सोमे॑नस॒हरा॒ज्ञा ॥ यस्मै॑कृ॒णोति॑ब्राह्म॒णस्तꣳरा॑जन्पारयामसि ॥ २ ॥ कलशंस्थापयेत्

ॐ आजिघ्रकलशंमह्यात्वाविशन्त्विन्दवः ॥ पुनरूर्ज्जानिवर्तस्वसानःसहस्रंधुक्ष्वोरुधारा पयस्वतीपुनर्म्माविशताद्रयिः ॥ ३ ॥ जलंपूरयेत् ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्य ऋतसदन्यसिवरुणस्य ऋतसदनमसिवरुणस्य ऋतसदनमासीद ॥ ४ ॥ त्वांगन्धर्वेतिगन्धप्रक्षेपः ॐत्वांगन्धर्वाऽअखनँस्त्वामिन्द्रस्त्वाम्बृहस्पतिः ॥ त्वामोषधेसोमोराजाविद्वान्न्यक्ष्मादमुच्यत ॥ ५ ॥ धान्यप्रक्षेपः धान्यमसिधिनुहिदेवान्प्राणायत्त्वोदानायत्वाव्यानायत्वा ॥ दीर्घामनुप्प्रसितिमायुषेधान्देवोवःसविताहिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥ ६ ॥ याओषधीरितिसर्वौषधीप्रक्षेपः ॐ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पुरा ॥ मनैनुबभ्रूणामहःशतन्धामानिसप्तच ॥ ७ ॥ काण्डात्काण्डादितिदूर्वाप्रक्षेपः ॐ काण्डात्काण्डात्प्ररोहन्तिपरुषःपरुषस्प्परि ॥ एवानोदूर्वेप्प्रतनुसहस्रेणशतेनच ॥ ८ ॥ अश्वत्थेवेतिपञ्चपल्लवप्रक्षेपः—ॐ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥ गोभाजइत्किलासथयत्सनवथपूरुषम् ॥ ९ ॥ स्योनापृथिवीतिसप्तमृत्प्रक्षेपः—ॐ स्योनापृथिविनोभवान्नृक्षरानिवेशनि ॥ यच्छानःशर्म्मसप्प्रथाः ॥ १० ॥ याःफलीतिफलप्रक्षेपः—ॐयाःफलिनीर्य्याऽअफलाऽअपुष्पायाश्चपुष्पिणीः ॥

बृहस्पतिप्प्रसूतास्तानोमुञ्चन्त्वꣳहसः ॥ ११ ॥ परिवाजपतिरितिपञ्चरत्नप्रक्षेपः—ॐ परिवाजपतिꣳकविरग्निर्हव्यान्यक्रमीत् ॥ दधद्रत्नानिदाशुषे ॥१२॥ हिरण्यगर्भेतिहिरण्यप्रक्षेपः—ॐ हिरण्यगर्ब्भःसमवर्त्तताग्ग्रेभूतस्यजातःपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ १३ ॥ युवासुवासेतिरक्तसूत्रेणवेष्टयेत्—ॐ युवासुवासाः परिवीतआगात्सउश्श्रेयान्भवतिजायमानः॥ तन्धीरासःकवयउन्नयन्तिस्वाध्योमनसादेवयन्तः ॥ पा० गृ० ॥ पूर्णादर्वीतिपूर्णपात्रमुपरिन्यसेत्—ॐ पूर्णादर्व्विपरापतसुपूर्ण्णापुनरापत ॥ वस्नेवव्विक्क्रीणावहाऽइषमूर्ज्जꣳशतक्रतो ॥ १४ ॥ तत्त्वायामीतिवरुणमावाहयेत्—ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्ब्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳसमानऽआयुः प्प्रमोषीः ॥ १५ ॥ ॐ भूर्भुवःस्वःअस्मिन्कलशे वरुणंसाङ्गं सपरिवारंसायुधं सशक्तिकमावाहयामिस्थापयामि ॥ मनोजूतिरितिप्रतिष्ठापयेत् ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोꣳप्रतिष्ठ ॥ १६ ॥ ॐ भूर्भुवःस्वःवरुणायनमः सुप्रतिष्ठितोवरदोभव ॥ वरुणायनमइत्यनेनमन्त्रेण पञ्चोपचारैः सम्पूज्य ॥ हस्तेजलमादाय अनयापूजयावरुणः साङ्गःसपरिवारःप्रीयतांनमम ॥

ईशानादिष्वष्टशक्तीनांस्थापनम् ॥ अक्षतान्गृहीत्वाऐशान्यां रुक्मिणिइहागच्छइहतिष्ठरुक्मिण्यैनमःरुक्मिणी मावाहयामि स्थापयामि ॥ १ ॥ पूर्वे–सत्यभामे इ० सत्यभामायै० सत्यभामां० ॥ २ ॥ आग्नेय्याम्–जाम्बवति इ० जाम्बवत्यै० जाम्बवतीं० ॥ ३ ॥ दक्षिणे–सत्ये इ० सत्यायै० सत्यां० ॥ ४ ॥ नैरृत्याम्–कालिन्दि इ० कालिन्द्यै० कालिन्दीं० ॥ ५ ॥ पश्चिमे–मित्रवृन्दे इ० मित्रवृन्दायै० मित्रवृन्दां० ॥ ६ ॥ वायव्याम्–लक्ष्मणे इ० लक्ष्मणायै० लक्ष्मणां० ॥ ७ ॥ उत्तरे–चारुहासिनि इ० चारुहासिन्यै० चारुहासिनीं० ॥ ८ ॥ (सुवर्णमूर्त्यभावे कुशचटंकृत्वाकलशोपरिस्थापयेत्) मध्ये–उर्व्यांक्षीरसमुद्रेऽस्मिन्सितचन्द्रे सकर्णिके ॥ तत्रत्वंसत्ययासार्द्धंसत्येशभवसन्निधौ ॥ ९ ॥ मध्ये सत्येश इ० सत्येशाय० सत्येशं० ॥ ९ ॥ मनोजूतिरिति प्रतिष्ठाप्य–ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्यबृहस्प्पतिर्य्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳ समिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामोꣳप्रतिष्ठ ॥ १ ॥ अष्टशक्तिसहितसत्येशसुप्रतिष्ठितो वरदोभव ॥ इदमत्रचन्दनं पुष्पं समर्पयामि ॥ (शालिग्रामशिलायुक्तंसत्येशंकलशोपरिस्थापयित्वा, ततः पूजामुपचारैः समाचरेत् ॥) शरीरशुद्ध्यर्थंदेहन्यासांश्चकरिष्ये ॐ सहस्रशीर्षा०–वामकरे ॥ १ ॥ ॐ पुरुष ऽ एवेद०–

दक्षिणकरे ॥ २ ॥ ॐ एतावानस्य०—वामपादे ॥ ३ ॥ ॐ त्रिपादूर्ध्व०—दक्षिणपादे ॥ ४ ॥ ततोविराट्० वामजानौ ॥ ५ ॥ ॐ तस्माद्यज्ञात्०— दक्षिणजानौ ॥ ६ ॥ ॐ तस्माद्यज्ञात्सर्व० वामकट्यां ॥ ७ ॥ ॐ तस्मादश्वा०—दक्षिणकट्यां ॥ ८ ॥ ॐ तंयज्ञं०—नाभौ ॥ ९ ॥ ॐ यत्पुरुषं०—हृदये ॥ १० ॥ ॐ ब्राह्मणोस्य०—कण्ठे ॥ ११ ॥ ॐ चन्द्रमामनसो० वामबाहौ ॥ १२ ॥ ॐ नाभ्याआसीत्० दक्षिणबाहौ ॥ १३ ॥ ॐ यत्पुरुषेण० मुखे ॥ १४ ॥ ॐ सप्तास्यासन्० नेत्रयोः ॥ १५ ॥ ॐ यज्ञेनयज्ञं० शिरसि ॥ १६ ॥ ॐ अद्भ्यःसम्० हृदयायनमः ॥ १७ ॥ ॐ वेदाहमेतम्० शिरसेस्वाहा ॥ १८ ॥ ॐ प्रजापतिश्चरति० शिखायैवषट् ॥ १९ ॥ ॐ योदेवेभ्य० कवचायहुं ॥ २० ॥ ऋचंब्राह्मन्० नेत्रत्रयायवौषट् ॥ २१ ॥ ॐ श्रीश्चतेलक्ष्मीः० अस्त्रायफट् ॥ २२ ॥ देहन्यासंसमर्पयामि ॥ यथादेहेतथादेवेइतिदेवन्यासान्कृत्वाध्यायेत् ॥ ध्यानम्—शान्ताकारं भुजगशयनंपद्मनाभंसुरेशं विश्वाधारं गगनसदृशंमेघवर्णं शुभाङ्गम् ॥ लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वन्देविष्णुंभवभयहरं सर्वलोकैकनाथम् ॥ १ ॥ ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपांसुरेस्वाहा ॥ १ ॥ सत्ये

शाय सत्यासहिताय पापहन्त्रेविष्णवेनमः ध्यायामि ॥ आवाहनम्—ऊँयाँक्षीरसमुद्रेस्मिन्सितपद्मे संकर्णिके ॥ तत्रत्वंसत्ययासार्द्धंसत्येश भवसन्निधौ ॥ १ ॥ ॐ सहस्त्रशीर्षा० ॥ १ ॥ सत्येशाय सत्यास० पा० वि० आवाहयामि ॥ आसनम्—आसनं प्रवरंदेव सिताक्षतसमन्वितम् ॥ पद्म कुम्भान्वितंशुभ्रंतत्रत्वं च समाविश ॥ २ ॥ ॐ पुरुषऽएवे० ॥ २ ॥ सत्ये० सत्यास० पा० वि० आसनंसमर्पयामि ॥ पाद्यम्—गन्धोदकं तीर्थंजलंनिर्मलं सर्वपावनं ॥ ददामिपादयोरग्रेगृहाणत्वंप्रसीदमे ॥ ३ ॥ ॐ एतावानस्य० ॥ ३ ॥ सत्ये० सत्यास० पा० वि० पाद्यंस० ॥ अर्घ्यम्—पुष्पाक्षतसमायुक्तं सिद्धार्थदधिसंयुतम् ॥ पूजायाःप्रथमार्घ्यंहिगृहाणार्घ्यंमहाप्रभो ॥ ४ ॥ ॐ त्रिपादूर्ध्व० ॥४॥ सत्ये० सत्यास० पा० वि० हस्तयोः अर्घ्यं स० ॥ आचमनीयम्—आचमनीयकंदेवपवित्रंनिर्मलंजलं ॥ सत्याष्टशक्तिभिर्युक्तोगृहाणपरमामृतम् ॥ ५ ॥ ॐ ततोविराट्० ॥ ५ ॥ सत्ये० सत्यास० पा० वि० आचमनीयं स० ॥ स्नानम्—अनेकतीर्थसंभूतं पवित्रं कायशोधनं ॥ स्नानार्थं मदूहृतंसम्यक्गृहीत्वात्वंपुनीहिमाम् ॥ ६ ॥ ॐ तस्माद्यज्ञात्० ॥ ६ ॥ सत्ये० सत्यास० पा० वि० ॥ स्नानं स० ॥ वस्त्रम्—हरत्वमघमीशान येनाहंवेष्टितोहरे ॥

 वस्त्रदानेनशुभ्रेण सत्येशाकुरुवांछितम् ॥ ७ ॥ ॐ तस्माद्यज्ञात्सर्व ॥ ७ ॥ सत्ये० सत्यास० 
पा० वि० वस्त्रंस० ॥ यज्ञोपवीतम्—यज्ञेयोगेतथासांख्ये पवित्रस्त्वंसदोच्यते ॥ यज्ञोपवीतदानेन
 कुरुमां सर्वपावनम् ॥ ८ ॥ ॐतस्मादश्वा० ॥ सत्ये० सत्यास० पा० वि० यज्ञोपवीतं सं० ॥
चन्दनम्—विलिप्तं कर्मणासर्वत्वंसत्येशनकेनचित् ॥ मयाचन्दनालिप्ताङ्गो ह्यमलः पापहाभव
॥९॥ ॐ तंयज्ञम्ब० ॥९॥ सत्ये० सत्यास० पा० वि० चन्दनं स० ॥ अक्षताःपुष्पम्—लक्ष्मीकान्त
जगन्नाथ संसारार्णवतारक ॥ पुष्पंगृहाणहेदेवकुरुमेवांछितंप्रभो ॥ १० ॥ ॐ यत्पुरुषं
व्यदधुः० ॥ १० ॥ सत्ये० सत्यास० पा० वि० पुष्पंस० ॥ सौभाग्यद्रव्यम्—श्वेतचूर्णरक्तचूर्णं
हरिद्राकुङ्कुमंतथा ॥ सिन्दूरेणप्रदास्यामि सौभाग्यं प्रतिगृह्यताम् ॥ १ ॥ ॐ अहिरिवभोगैः ॥
सत्ये० सत्यास० पा० वि० सौभा० ॥ धूपः—सत्येशकृपयादेवइमंधूपंमहेश्वर ॥ गुग्गुलागरु
लोबानैर्युक्तं गृहाणरक्षमाम् ॥ ११ ॥ ॐ ब्राह्मणोस्य० ॥ ११ ॥ सत्ये० सत्यास० पा० वि० ॥१२॥
धूपंस० ॥ दीपः—ज्योतिरूपमरूपं वा वदन्ति मुनिपुंगवाः ॥ ज्योतिर्मध्येस्थितो देवगृहाणत्वं

१ अक्षतैर्नार्चयेद्विष्णुं न तुलस्यागणाधिपम् ॥ न दूर्वयायजेद्देवीं बिल्वपत्रैश्च भास्करम् ॥ १ ॥

सुदीपकम् ॥ १२ ॥ ॐ चन्द्रमामनसो० ॥१२॥ सत्ये०सत्यास०पा०वि०दीपंस० ॥ नैवेद्यम्—
अन्नंचतुर्विधंस्वादुभूतानांजीवनंपरम् ॥ षड्रसैश्चसमायुक्तंनैवेद्यंप्रतिगृह्यताम् ॥१३॥ ॐनाभ्याऽ
आसीत्० ॥ १३ ॥ सत्ये०सत्यास०पा०वि०नैवेद्यंस० ॥ तुलसीदलेनसम्प्रोक्ष्य ॥ धेनुमुद्रांप्र-
दर्श्य ॥ ग्रासमुद्रयापञ्चप्राणाहुतीर्दद्यात्—ॐप्राणायस्वाहा ॥ १ ॥ ॐअपानाय० ॥ २ ॥ ॐ
व्यानाय० ॥ ३ ॥ ॐउदानाय० ॥ ४ ॥ ॐसमानाय० ॥ ५ ॥ ॐब्रह्मणेनमः पूर्वापोशानं
स० ॥ मध्येपानीयंस० ॥ आचमनंस० ॥ उत्तरापोशानंस० ॥ हस्तप्रक्षालनंस० ॥ मुखप्रक्षा-
लनार्थेजलंस० ॥ करोद्वर्तनार्थेगन्धंस० ॥ मुखवासार्थपूगीफलताम्बूलसहितहिरण्यदक्षिणा—पूगीफलंसप-
त्रंचसहिरण्यंमनोरमम् ॥ सत्येशसत्ययासार्द्धंगृहाणसन्मुखोभव ॥ १४ ॥ ॐयत्पुरुषेणह-
३ विषा० ॥ १४ ॥ सत्ये० सत्यास० पा० वि० मुखवासार्थपूगीफलताम्बूलसहितहिरण्यदक्षि
णांस० ॥ आरार्तिक्यम्—आरार्तिकंसकर्पूरंमयादत्तंसुरेश्वर ॥ गृहाणसत्ययासार्द्धंनैर्मल्यंदेहिशा-
श्वतम् ॥ ॐयेदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमाहिनैकादशस्थते
देवासोयज्ञमिमंजुषध्वम् ॥ सत्ये०सत्यास०पा०वि०निराजनंस० ॥ पुष्पेणदेववन्दनम् ॥ स्वय-

मात्माभिवन्दनम् ॥ हस्तंप्रक्षाल्य ॥ मन्त्रपुष्पाञ्जलिः–हस्तेपुष्पाण्यादाय–प्रभोसत्येशदेवेशकृष्णाविष्णो सुरेश्वर ॥ हरदुःखंचरोगंचपापंजन्मशतोद्भवम् ॥१५॥ ॐयज्ञेनयज्ञमयजन्त० ॥ १५ ॥ सत्ये० सत्यास०पा०वि०मन्त्रपुष्पाञ्जलिंस० ॥ प्रदक्षिणा–ॐसप्तास्यासन्प० ॥ नमस्तेदेवदेवेशपुराण-पुरुषोत्तम ॥ पापौघशमनार्थायप्रीत्यर्थंप्रतिगृह्यताम् ॥ सत्ये०सत्या०वि०प्रदक्षिणांस० ॥जपः–ॐनमोभगवतेवासुदेवाय ॥ इतिमन्त्रेणयथाशक्तिजपंकुर्यात् ॥ अनेनयथाशक्तिकृतजपकर्मणा श्रीभगवान्सत्येशःप्रीयतांनमम ॥ राजोपचाराः ॥ छत्रम्–ॐअद्ध्यश्सं० ॥ ॐसत्ये०सत्या० पा०वि०छत्रंस० ॥ चामरम्–ॐवेदाहमेतम्० ॥ सत्ये०सत्या०पा०वि०चामरंस० ॥ द्वितीयचामरम्–ॐप्रजापति० ॥ सत्ये०सत्या०पा०वि०द्वितीयचामरंस०॥ आदर्शः–ॐयोदेवेभ्य० ॥ सत्ये०सत्या० पा०वि०आदर्शंस० ॥ तालवृन्तम्–ॐऋचंब्राह्मन्० ॥ सत्ये०सत्या०पा०वि० तालवृन्तकंस० ॥ स्तुतिपाठः–ॐश्रीश्चते० ॥ सत्ये०सत्या०पा० वि० स्तुतिपाठंस० ॥ प्रार्थना–अनिरुद्धेशगोविन्द विष्णोचक्रिन्नमोस्तुते ॥ पूजांगृहाणदेवेशप्रीयतांगरुडध्वज ॥ १ ॥ नारायणनमस्तेस्तुवासु-देवनमोनमः ॥ त्रैलोक्यजगदाधारत्राहिमांमधुसूदन ॥ २ ॥ अपराधसहस्राणिक्रियन्तेऽहर्नि-

शंमया ॥ दासोयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ ३ ॥ सत्ये०सत्या०पा०वि०प्रार्थनापूर्वक नमस्कारान्स० ॥ विशेषार्घ्यः—हस्तेगन्धपुष्पहिरण्यजलसहितनालिकेरंगृहीत्वा—सत्यनाथनमस्तुभ्यंमूर्तामूर्तस्वरूपिणे ॥ वासुदेवनृसिंहाख्यकपिलादित्यभूधर ॥ १ ॥ वामनाच्युतयज्ञेशलक्ष्मीकान्तसुरेश्वर ॥ शार्ङ्गचक्रगदाधारिन्सत्येशायनमोस्तुते ॥ २ ॥ अनेकजन्मसम्भूतपापहन्पर मेश्वर ॥ मयादत्तार्घ्यदानेनप्रसीदपरमेश्वर ॥ ३ ॥ सत्ये०सत्या०पा०वि०विशेषार्घ्यंसमर्पयामि ॥ अर्पणम् — अनेनावाहनासनपाद्यार्घ्याचमनीयस्नानवस्त्रोपवीतगन्धपुष्पधूपदीपनैवेद्यताम्बूलदाक्षिणाप्रदक्षिणामन्त्रपुष्परूपैः षोडशोपचारैरन्योपचारैश्चयथाज्ञानेनयथामिलितोपचारद्रव्यैः पूजनेनश्रीसत्येशोभगवान् महाविष्णुःप्रीयतांनमम ॥ शङ्खंभ्रामयेत्—शङ्खमध्येस्थितंतोयंभ्रामितंकेशवोपरि ॥ अङ्गलग्नंमनुष्याणांब्रह्महत्यांव्यपोहति ॥१॥ ततोगायत्र्याचरणामृतमभिमन्त्र्याकिञ्चित्पात्रान्तरेकृत्वा "एतावानस्य१" इतिमन्त्रेणसत्येशायपापहन्त्रेविष्णवेनमःइतिपठित्वाविष्णोरुपरिचरणामृतंनिधाय ॥ बालिर्विभीषणोभीष्मःकपिलोनारदोर्जुनः ॥ प्रह्लादश्चाम्बरीषश्चवसुर्वायुसुतःशिवः ॥ विष्वक्सेनोद्धवाक्रूराः सनकाद्यामहर्षयः ॥ नारायणप्रसादोऽयंसर्वेगृह्णन्तुवैष्णवाः ॥ इत्युक्त्वाईशान्यांकिंचित्यजेत् ॥ ततः

स्वयंपिबेत्–असंचितानिपापानिसंचितानिबहून्यपि ॥ तानिसर्वाणिनश्यन्तिपीतेपादोदकेहरेः ॥ ततःपात्रान्तरेकृतस्यचरणोदकस्यस्वशिरसिवंदनं॥ तत्रमन्त्रः–अकालमृत्युहरणंसर्वव्याधिविनाशनं ॥ विष्णोः पादोदकंपुण्यंशिरसिधारयाम्यहम् ॥ कृतेनानेनचरणामृतग्रहणवन्दनेनसत्येशःपापहन्तामहाविष्णुःप्रीयताम् ॥

अथप्रायश्चित्ताङ्गंवैष्णवश्राद्धम् ॥ विष्णोएतत्तेपाद्यंपादावनेजनंपादप्रक्षालनंएषवोर्घः ॥ इदमन्त्रचन्दनंपुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादौप्रक्षाल्य ॥ आचम्य ॥ दिग्बन्धः–ऐन्द्र्यांनारायणोरक्षेदाग्नेय्यांचजनार्दनः ॥ दक्षिणेपुण्डरीकाक्षोनैर्ऋत्यांमधुसूदनः ॥ १ ॥ प्रतीच्यांचैवगोविन्दोवायव्यांपुरुषोत्तमः ॥ उदीच्यांमाधवोरक्षेदीशान्यांकमलापतिः ॥ २ ॥ ऊर्ध्वंगोवर्धनोरक्षेदधस्ताच्चत्रिविक्रमः ॥ एवंदशदिशोरक्षेत्केशवःसर्वरक्षकः ॥ ३ ॥ इतिदिग्बंधः ॥ यद्देवेति

१ शालिग्रामशंखचक्रतुलसीताम्रपत्रकैः ॥ एतैःपञ्चपदार्थैश्चपादोदकमुदाहृतम् ॥ शालिग्रामशिलायत्रयत्रद्वारावतीशिला ॥ उभयोःसङ्गमोयत्रमुक्तिस्तत्रनसंशयः ॥ २ एतावानस्यमन्त्रेणविष्णोरुपरिधारया ॥ शङ्खोदकंन्यसेत्तच्चपावनंहिपिबेन्नरः ॥ पादोदंप्रथमंपीत्वापश्चाच्छिरसिधारयेत् ॥ धृत्वाशीर्षेपिबेत्पश्चात्तदासौदोषभाग्भवेत् ॥

तिलोदकम् ॥ यद्देवोतितिसृणांकूष्माण्डऋषिःगायत्र्युष्णिगनुष्टुप्छन्दांसिअग्निवायुसूर्यादेवताःति-
लोदककरणेवि० ॥ ॐयद्देवा० ॥ १ ॥ यदिदिवा० ॥ २ ॥ यदिजाग्रद्य० ॥ ३ ॥ इतिमन्त्रैस्ति-
लोदककरणम् ॥ अपवित्रःपवित्रोवेतिमन्त्रेणपवित्रीकरणम् ॥ अपवित्रःपवित्रोवा० ॥ १ ॥ सांकल्पिकविष्णु-
श्राद्धोपहाराणांपवित्रतास्तु ॥ अद्यपूर्वो०तिथौप्रायश्चित्ताङ्गंविष्णुश्राद्धंकरिष्ये ॥ पापहन्त्रेविष्ण-
वेइदमासनम् सुस्वासनम् ॥ पापहन्त्रेवि०गन्धं० ॥ पुष्पंधूपंदीपंनैवेद्यं ॥ यथादत्तंगन्धाद्यर्चनं
स्वाहा ॥ इदंवोज्योतिःसुज्योतिःसूर्यायपुष्पं ॥ फलताम्बूलंहिरण्यं ॥ शेषोपचाराःसंपूर्णा
विधिवद्भवन्तु ॥ विष्णुप्रीतयेत्रिभ्योधिकान्ब्राह्मणान्भोजयेत् ॥ अशक्तश्चेदामान्नंहिरण्यंवाद-
द्यात् ॥ विष्णुश्राद्धप्रतिष्ठासिद्ध्यर्थंफलमुखवासताम्बूलंसहिरण्यं ॥ अनेनविष्णुश्राद्धस्यार्चन-
विधेःपरिपूर्णतास्तु ॥ इतिविष्णुश्राद्धं ॥ ततःप्रायश्चित्ताङ्गभूतंपूर्वाङ्गगोदानम् ॥ तच्चगोरभावेनिष्क्रयद्वाराकुर्यात् ॥
तद्यथा—अद्यपूर्वो०तिथौ०प्रायश्चित्तपूर्वाङ्गतयाविहितगोदानप्रत्याम्नायत्वेनयथाशक्तिगोमूल्यनि-
ष्क्रयद्रव्यमहंदास्ये ॥ तेनपापहाविष्णुःप्रीयतांनमम ॥ ततःस्वगृह्योक्तविधिनास्थण्डिलेपञ्च-
भूसंस्कारान्कृत्वाग्निस्थापनाद्याज्यभागान्तंविधायाज्येनमहाव्याहृतीरष्टोत्तरशतमष्टाविंशतिर्वा

श्रुवेणजुहुयात् ॥ अथपञ्चगव्यकरणम् ॥ गायत्रीमन्त्रेणगोमूत्रम्–ॐतत्सवितु० ॥ १ ॥ गन्धद्वारेतिगोमयम्–
ॐगन्धद्वारान्दुराधर्षांनित्यपुष्टांकरिषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् ॥ २ ॥
आप्यायस्वेतिक्षीरम् –ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसंगथे ॥ ३ ॥
दधिक्राव्णोतिर्दधि–ॐदधिक्राव्णो० ॥ ४ ॥ तेजोसीत्याज्यम्–ॐतेजोसिशुक्रमस्यमृतमसिधामनामा-
सिप्रियन्देवानामनाधृष्टन्देवयजनमसि ॥ ५ ॥ देवस्यत्वेतिकुशोदकम् –ॐदेवस्यत्वासवितुःप्रस
वेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ ६ ॥ प्रणवेनालोड्य ॥ यज्ञीयकाष्ठेननिर्मथ्य ॥ प्रणवेनाभिमन्त्र्य ॥
हरितैःसप्तपत्रैरच्छिन्नाग्रैःकुशैःश्रुवस्थानभूतैःपञ्चगव्याहुतीर्जुहुयाद्वक्ष्यमाणमन्त्रैः ॥ ॐइरावतीधेनुमतीहिभूतꣳसू-
यवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतदाधर्थपृथिवीमाभितोमयूखैःस्वाहाइदंपृथि-
व्यैनमम ॥ १ ॥ ॐइदंविष्णुर्वि०सुरेस्वाहाइदंविष्णवे० ॥ २ ॥ ॐमानस्तोके० महेस्वाहाइदंरु-
द्राय० ॥ ३ ॥ उदकोपस्पर्शः ॥ ॐब्रह्मयज्ञानं०विवःस्वाहाइदंब्रह्मणे० ॥ ४ ॥ ॐअग्नयेस्वाहाइद-



१ ताम्रायाःगोस्त्रिपलंगोमूत्रं ॥ २ श्वेतायाअंगुष्ठपरिमितंगोमयम् ॥ ३ कपिलायाःसप्तपलंक्षीरम् ॥ ४ नीलायाःसप्तपलंदधि ॥
५ कृष्णायाःएकपलंघृतं ॥ ६ एकपलंकुशोदकं ॥ सर्वंकापीलमेवेतिलैङ्गे ॥

मग्नये० ॥५॥ ॐसोमायस्वाहाइदंसोमाय० ॥६॥ ॐतत्सवितु०दयात्स्वाहाइदंसवित्रेनमम ॥७॥ ततःप्रणवेन ॥ ॐस्वाहाइदंप्रजापतये० ॥८॥ ॐभूर्भुवःस्वः स्वाहाइदंप्रजापतये० ॥ ९ ॥ ॐ अग्नयेस्विष्टकृतेस्वाहाइदमग्नयेस्विष्टकृतेनमम ॥ १० ॥ एवंदशाहुतीर्हुत्वा ॥ ततोनवाहुत्यादिप्रणीताविमोकान्तंकृत्वाव्रतग्रहणंकरिष्येइतिब्राह्मणान्पृष्ट्वाकुरुष्वेतितैरनुज्ञातः प्रणवेनसर्वंपिबेत् ॥ अथपञ्चगव्यप्राशनविधिः ॥ तत्रमन्त्रः—यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनात्पञ्चगव्यस्यदहत्यग्निरिवेन्धनम् ॥१॥ इतिमन्त्रेणपिबेत् ॥ अशक्तौतुगोमूत्रादिस्वल्पंग्राह्यम् ॥ सर्वस्यपेयत्वात् ॥ अस्मिन्दिनेउपवासः ॥ अशक्तस्यहविष्याशनम् ॥ स्त्रीशूद्रश्चविशुद्ध्यर्थंप्राजापत्यंचरेत् ॥ ततोगृहमागत्यविष्णुंस्मरन्मौनीनिशामतिवाह्यप्रक्रान्तंप्रायश्चित्तंसंकल्पानुसारेणप्रत्याम्नायद्वाराकृत्वोत्तराङ्गानिकुर्यात् ॥ तत्रअग्निस्थापनादिव्याहृतिभिरा

---

१. तथाचपराशरः—पञ्चगव्यंचकुर्वीतस्नात्वापीत्वाशुचिर्भवेदिति ॥ आरंभेसर्वकृच्छ्राणांसमाप्तौचविशेषतः ॥ आज्येनैवहिशालाग्नौजुहुयाद्व्याहृतीःपृथक् ॥ श्राद्धंकुर्याद्धुतान्तेचगोहिरण्यादिदक्षिणाम् ॥ स्त्रीणांहोमोनकर्तव्यःपञ्चगव्यंतथैवचेतिवचनात्स्त्रीशूद्राणांपञ्चगव्यहोमप्राशनयोर्विकल्पः ॥ होमकरणपक्षेलौकिकेग्नौब्राह्मणद्वाराकार्यः ॥ प्रायश्चित्तंप्रदातव्यंजपहोमविवर्जितमितिवचनाच्छूद्रस्यब्राह्मणद्वारापिहोमोनभवत्येव ॥ २ पूर्वोत्तराङ्गहोमएकस्मिन्नेवाग्नौकार्यः यदातुपूर्वाङ्गहोममग्नौकृत्वाप्रायश्चित्तंयात्राप्रत्याम्नायेनस्वयमेवकरोतितदा-अग्न्यन्तरे उत्तराङ्गहोमःकार्यः ॥ पूर्वाग्नेश्चिरकालधारणासंभवात् ॥

ज्यहोमंचपूर्ववदुदीच्याङ्गंवैष्णवश्राद्धंसमाप्योत्तरगोदानञ्चपूर्ववच्चरेत् ॥ ( प्रायश्चित्तस्योत्तराङ्गतयाविहितगो- दानप्रत्याम्नायत्वेनयथाशक्तिगोनिष्क्रयद्रव्यमहंदास्यइत्यूहः कार्यः ॥ ) अथप्रायश्चित्तद्रव्यसंकल्पः ॥ अद्यपूर्वो०तिथौममजन्मप्रभृतिअद्यदिनंयावज्ज्ञाताज्ञातकामाकामसकृद्सकृत्कायिकवाचिक- मानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकगुरुलघुपातकस ङ्करीकरणमलिनीकरणापात्रीकरणजातिभ्रंशकरप्रकीर्णपातकानांमध्येसंभावितानांमहापातक- व्यतिरिक्तानांपातकानांनिरासार्थंअमुकसंख्याकान्प्राजापत्यानष्टोत्तरशतगोनिष्क्रयद्रव्यद्वारा- अहमाचरिष्ये ॥ तेनपापहामहाविष्णुःप्रीयतांनमम ॥ कृतेनानेनपूर्वोत्तराङ्गप्रायश्चित्तेनअमुक- गोत्रोत्पन्नोहंअमुकनामाहंनिष्पापोभवेयमितित्रिर्वाच्यम् ॥ त्वंनिष्पापोभूयाःएवंवारत्रयंद्विज- मुखाच्छ्रुत्वासभोपविष्टब्राह्मणानांपादाभिवंदनंकुर्यात् ॥एवंप्रायश्चित्तंकृत्वाशक्तौसत्यांदशदानानिकुर्यात् ॥ अथगवादिदशदानसंकल्पः ॥ अद्यपूर्वो०तिथौमयाआचरितप्रायश्चित्तस्यसाद्गुण्यकामःश्रीमहाविष्णु- प्रीत्यर्थंगवादिदशदानानिकरिष्ये ॥ तत्रप्रथमंगोदानम् ॥ अद्यपूर्वो०तिथौप्रायश्चित्ताङ्गभूतंब्राह्मणाय गोदानंकरिष्ये ॥ तदङ्गत्वेनब्राह्मणपूजनंगोपूजनंचकरिष्ये ॥ यथाविभवंब्राह्मणंसम्पूज्यगांपूजयेत् ॥

१ गोभूतिलहिरण्याज्यवासोधान्यगुडानिच ॥ रौप्यंलवणमित्याहुर्दशदानान्यनुक्रमात् ॥

गवामंगेषुतिष्ठन्तिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ १ ॥ इतिमन्त्रेण गांषोडशोपचारैःसम्पूज्य ॥ गोरभावेपूगीफलंगृहीत्वावक्ष्यमाणपौराणिकमन्त्रान्पठेत् ॥ तत्रमन्त्रः–गावोममाग्रतःसन्तु गावोमेसन्तुपृष्ठतः॥ गावोमेहृदयेसन्तुगवांमध्येवसाम्यहम् ॥ १ ॥ पञ्चगावःसमुत्पन्नामथ्यमाने महोदधौ ॥ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः ॥ २ ॥ यालक्ष्मीसर्वभूतानांयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ ३ ॥ अदितिर्देवमाताचवेदमाताह्यधीश्वरी ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ ४ ॥ इतिपठित्वाद्विजस्याग्रेनिधायगांविभाव्यप्रार्थयेत्–यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥ १ ॥ हस्तेजलमादाय–देशकालौसंकीर्त्य० दशदानान्तर्गतामिमांरुद्रदैवत्यांगन्धपुष्पाद्यर्चितांगांगोनिष्क्रयीभूतंद्रव्यंवा तुभ्यमहंसम्प्रददे ॥ दानसाङ्गतासिद्ध्यर्थंदक्षिणासुदक्षिणा ॥ प्रार्थना–विष्णुरूपद्विजश्रेष्ठभूदेव पंक्तिपावन ॥ सदक्षिणामयादत्तातुभ्यंविप्रायवैनमः ॥ १ ॥ कृतेनानेनगोदानेनवातन्निष्क्रय द्रव्यदानेनकर्माधीशः प्रीयतांनमम ॥ इतिगोदानं ॥ अथभूदानम्–अद्यपूर्वो०ममजन्मप्रभृतिअद्ययावत्कृतानेकविधपापक्षयार्थंभूदानंकरिष्ये ॥ ब्राह्मणंसम्पूज्यभूमिंप्रार्थयेत् ॥ सर्वभूताश्रयाभूमिर्व-

राहेणसमुद्धृता ॥ अनन्तसस्यफलदाअतःशान्तिंप्रयच्छमे ॥ २ ॥ दशदानान्तर्गतामिमांभूमिं-
विष्णुदैवत्यांतुभ्यमहंसम्प्रददे ॥ एतद्दानप्र०दक्षिणा०सु० ॥ अथतिलदानम्–अद्यपूर्वो०ममजन्म-
प्रभृति०तिलदा०॥ महर्षेर्गोत्रसंभूताःकाश्यपस्यातिलाःस्मृताः॥ तस्मादेषांप्रदानेनममपापंव्यपो-
हतु ॥३॥ दशदानान्तर्गतंतिलदानंसोमदैवत्यंगन्धपुष्पाद्यर्चितंतुभ्यं०एतद्दानप्र०दक्षिणासु० ॥
हिरण्यदानम्–अद्यपूर्वो०ममजन्मप्रभृति०हिरण्यदा० ॥ हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः ॥
अनन्तपुण्यफलदमतःशान्तिंप्रयच्छमे ॥ ४ ॥ दशदानान्तर्गतंहिरण्यमग्निदैवत्यंगन्ध० तुभ्य० ॥
एतद्दानप्र०दक्षिणासु० ॥ अथाज्यदानम्–अद्यपूर्वो०ममजन्मप्रभृति०आज्यदा० ॥ कामधेनोः
समुद्भूतंसर्वक्रतुषुसंस्थितं ॥ देवानामाज्यमाहारमतःशा० ॥५॥ दशदानान्तर्गतमाज्यंविष्णुदै-
वत्यंगन्ध०तुभ्य० ॥ एतद्दानप्र०दक्षिणांसु०॥ अथवस्त्रदानम्–अद्यपूर्वो०ममजन्मप्रभृति०वस्त्रदा०॥
शरणंसर्वलोकानांलज्जायारक्षणंपरम् ॥ सुवेषधारिवस्त्रत्वमतःशा० ॥ ६ ॥ दशदाना०वस्त्रदानं
बृहस्पतिदैवत्यंगंध०तुभ्य० ॥ एतद्दानप्र०दक्षिणां० ॥ अथधान्यदानम्–अद्यपूर्वो०ममजन्मप्रभृति०
धान्यदा० ॥ सर्वदेवमयंधान्यंसर्वोत्पत्तिकरंमहत् ॥ प्राणीनांजीवनोपायमतःशा० ॥ ७ ॥

दशदाना०धान्यदानंप्रजापतिदैवत्यंगंधपु०तुभ्य० ॥ एतद्दानप्र०दक्षिणां० ॥ अथगुडदानम्—अद्य-पूर्वो०ममजन्मप्रभृति०गुडदा० ॥ यथादेवेषुविश्वात्माप्रवरश्चजनार्दनः ॥ सामवेदस्तुवेदानांम-हादेवश्चयोगिनां ॥ प्रणवःसर्वमन्त्राणांनारीणांपार्वतीयथा ॥ तथारसानांसर्वेषांगुडःश्रेष्ठतमो मतः ॥ ममतस्मात्परांलक्ष्मींददस्वगुडसर्वदा ॥ गुडस्यसम्प्रदानेनममपापंव्यपोहतु ॥ ८ ॥ दशदाना०गुडदानंविष्णुदैवत्यंगंध०तुभ्य० ॥ एतद्दानप्र०दक्षिणां० ॥ अथरौप्यदानम्—अद्यपूर्वो० ममजन्मप्रभृति०रौप्यदा० ॥ प्रीतिर्यतःपितॄणांचविष्णुशङ्करयोःसदा ॥ शिवनेत्रोद्भवंरौप्यमतः शा० ॥ ९ ॥ दशदाना०रौप्यदानंरुद्रदैवत्यंगंध०तुभ्य० ॥ एतद्दानप्र०दक्षिणां० ॥ अथलवणदानम्—अद्यपूर्वो०ममजन्मप्रभृति०लवणदानं०यस्मादन्नंरसाःसर्वेनोत्कृष्टालवणंविना ॥ शंभोःप्रीतिकरं नित्यमतःशा० ॥ १० ॥ दशदाना०लवणदानंयमदैवत्यंगंध०तुभ्य० ॥ एतद्दानप्र०दक्षिणां० ॥ इतिदशदानानि ॥ एवंदशमहादानानिदत्त्वाशक्तिसंभवेप्रत्यक्षगोदानपूर्वकमन्यान्यपिदानानिदेयानि ॥ ( अशक्तश्चेद्मुखाव-लोकनंसूर्यावेक्षणंवाकृत्वायस्यस्मृत्येतिविष्णुंसम्प्रार्थ्यप्रयोगंसमाप्तिंनयेत् ॥ )

अथप्रत्यक्षगोदानप्रयोगः ॥ आचम्यप्राणानायम्य ॥ हस्तेजलमादाय—विष्णुर्विष्णु०

---

१ कृतोपवासःसम्प्राश्यपञ्चगव्यंनरेश्वर ॥ घृतक्षीराभिषेकंचकृत्वाविष्णोःशिवस्यच ॥ समभ्यर्च्ययथाचार्यंपुष्पादिभिरनुक्रमात् ॥ १ ॥+

तिथौसमात्म०आयुरारोग्यैश्वर्याभिवृद्ध्यर्थंपृथ्वीदानसमफलप्राप्त्यर्थंसर्वपापक्षयार्थंचश्रीमहा-
विष्णुप्रीत्यर्थंयथाशक्तियथाज्ञानंप्रत्यक्षगोदानमहंकरिष्ये॥पुनर्जलमादायतत्रादौदिग्रक्षणंकल-
शार्चनंगणपतिस्मरणंचकरिष्ये ॥ एवंकृत्वापश्चात्हस्तेपूगीफलंगृहीत्वा–अमुकगोत्रोत्पन्नोऽमुकामुकप्र-
वरान्वितोऽमुकशर्मायजमानोहं ॥ अमुकगोत्रोत्पन्नममुकामुकप्रवरान्वितममुकशर्माणंब्राह्मणं
गोप्रतिग्रहंकर्तुंत्वामहंवृणे ॥ वृतोस्मीतिब्राह्मणोब्रूयात् ॥ ब्रह्मणोइदमासनम् ॥ हस्तप्रक्षाल-
नम् ॥ विष्टरार्थेकुशान्दत्वा ॥ शिवाआपःसन्त्वित्यादिब्राह्मणंसम्पूज्यगोपूजनमारभेत् ॥ गोमुखदेशादारभ्यपरितो
धारांदद्यात् ॥ तत्रमन्त्रः–यालक्ष्मीःसर्वलोकेषुयाचदेवेष्ववस्थिताः ॥ धेनुरूपेणसादेवीममपापंव्य-
पोहतु ॥ १ ॥ इतिमन्त्रेणधारांकृत्वा ॥ ततोयथाशक्त्यावस्त्रालंकारादिभिर्धेनुंसम्पूज्य ॥ तद्यथा–स्वर्णशृङ्गींरौप्यखु-

---

+उदङ्मुखींप्राङ्मुखींचगांचकृत्वापयस्विनीम् ॥ सवत्सांवस्त्रसंवीतांसितयज्ञोपवीतिनीम् ॥२॥ सौवर्णशृङ्गींरौप्यखुरींसुवर्णोपरिसंस्थिताम् ॥
कांस्यदोग्ध्रींमहाशुद्धांताम्रपृष्ठांतथैवच ॥ ३ ॥ सितचामरपुष्पाढ्यांमुक्ताभूषितलाङ्गुलाम् ॥ श्वेतवस्त्रपरिच्छन्नांघण्टास्वननिनादिताम् ॥४॥
पट्टदूकुलसंबद्धांकिंकिणीजालमण्डितां ॥ दिव्यवस्त्रसमायुक्तांहेमदर्पणभूषिताम् ॥ ५ ॥ सुशीलांलक्षणवतींयुवतींवत्ससंयुताम् ॥ बहुदुग्ध-
वतींस्निग्धांधेनुंदद्याद्विचक्षणे ॥ ६ ॥ गौरेकैवप्रदातव्याश्रोत्रियायकुटुम्बिने ॥ साहितारयतेपूर्वान्सप्तसप्तचसप्तच ॥ ७ ॥ ईदृशींकपिलांदद्या-
द्विष्णोरग्रेविधानतः ॥ यथाशक्तिदक्षिणांगांपूजयेद्विधिपूर्वकम् ॥ ८ ॥

रांताम्रपृष्ठींघण्टाग्रैवेयांमुक्तालाङ्गूलांकांस्योपदोहिनींसर्वाभरणभूषितांसितवस्त्रादिभिर्भूषयित्वातांपूजयेत् ॥ ध्यानम्—क्षीरा-
ब्धिसम्भवेदेविमुक्तादामविराजिते ॥ सुधारूपेहव्यदोग्ध्रिनमोस्तुसुरवन्दिते ॥ १ ॥ गवेनमः
हृदिध्यायामि ॥ आसनम्—धेनुकेसर्वभूतानांतारकेविश्ववन्दिते ॥ पवित्रेनिर्मलेदेविआसनंप्रति-
गृह्यताम् ॥ २ ॥ गवेनमःआसनंसमर्पयामि ॥ पाद्यम्—सौरभेयिसर्वहितेपवित्रेपापनाशिनि ॥
गृहाणेतन्मयादत्तंपाद्यंत्रैलोक्यवन्दिते ॥ ३ ॥ गवे०पाद्यंस० ॥ अर्घ्यम्—सर्वदेवमयेदेविसर्वतीर्थ-
मयेशुभे ॥ गृहाणार्घ्यंमयादत्तंसौरभेयिनमोस्तुते ॥ ४ ॥ गवे०अर्घ्यंस० ॥ आचमनम्—देहेस्थिता-
सिरुद्राणिशङ्करस्यसदाप्रिये ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥५॥ गवे०आचमनीयंस० ॥
स्नानम्—यालक्ष्मीःसर्वलोकेषुयाचदेवेष्ववस्थिता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥६॥ गवे०
स्नानंस० ॥ पञ्चामृतम्—पयोदधिघृतंचैवमधुचशर्करायुतम् ॥ पञ्चामृतंमयानीतंस्नानार्थंप्रतिगृह्य-
ताम् ॥ ७ ॥ गवे०पञ्चामृतस्नानंस० ॥ शुद्धोदकस्नानम्—सर्वशक्तिप्रदेदेविसर्वसंपत्प्रदायिनि ।
गृहाणेदंमयादत्तंस्नानंत्वप्रतिगृह्यताम् ॥ ८ ॥ गवे०शुद्धोदकस्नानंस० ॥ वस्त्रम्—आच्छादनंगवेद-
त्तंसम्यक्शुभ्रंसुशोभनम् ॥ सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी ॥९॥ गवे०वस्त्रं० ॥ततोऽलङ्कारान्—

शृङ्गभूषणार्थंसुवर्णं ॥ चरणभूषणार्थंरजतं ॥ भालभूषणार्थमादर्शनम् ॥ नेत्रभूषणार्थंरत्नद्वयम् ॥ कण्ठभूषणार्थंघण्टांपुष्पस्त्रजंच ॥ सर्वावयवभूषार्थंपट्टदुकूले ॥ पृष्ठभूषार्थंताम्रम् ॥ पुच्छभूषार्थं मुक्ताफलस्त्रजम् ॥ १० ॥ गवे०अलङ्कारान्स० ॥ चन्दनम्–श्रीखण्डंचन्दनंदिव्यंगन्धाढ्यंसुमनो-हरम् ॥ विलेपनंसुरश्रेष्ठेचन्दनंप्रतिगृह्यताम् ॥ ११ ॥ गवे०चंदनंस० ॥ अक्षताः–अक्षताश्चसुरश्रे-ष्ठाःकुङ्कुमाक्ताःसुशोभिताः ॥ मयानिवेदिताभक्त्यागृहाणपरमेश्वरि ॥ १२ ॥ गवे०अक्षतान्स० ॥ पुष्पाणि–माल्यादीनिसुगन्धीनिमालत्यादीनिभक्तितः ॥ मयानीतानिपुष्पाणिगृहाणपरमेश्वरि ॥ गवे०पुष्पाणिस०॥१३॥ अथाङ्गपूजा ॥ हस्तेगन्धाक्षतपुष्पाण्यादाय–गवेनमःपादौपूजयामि ॥ जगन्मात्रे० गुल्फौपू० ॥ अघापहन्त्र्यै०जानुनीपू० ॥ सुरभ्यै०ऊरूपू० ॥ विष्णुपदास्थितायै०कटीपू० ॥ नन्दि-न्यै०उदरंपू० ॥ पञ्चगव्यप्रसूत्यै०हृदयंपू० ॥ वसिष्ठपूजितायै०मुखंपू० ॥ दिलीपसेवितायै० नासिकांपू० ॥ पृथ्वीरूपधारिण्यै०नेत्रेपू० ॥ जगत्पाविन्यै०भ्रूमध्यंपू० ॥ कपिलायै० भालंपू० ॥ यमुनायै०शिरःपू० ॥ विष्णुरूपिण्यै०सर्वाङ्गंपू० ॥ अथगोशृङ्गमूलादिस्तनान्तस्थानेषुदेवताआवाह्यप्रपूजयेत् ॥ तद्यथा–शृङ्गमूले–ब्रह्मविष्णुभ्यांनमःब्रह्मविष्णूआवाहयामिपूजयामि ॥ शृङ्गाग्रे–सर्वतीर्थेभ्यो०सर्व-

तीर्थानिआ०पू०॥ एवंसर्वत्र ॥ शिरोमध्ये–शिवाय० ॥ ललाटे–पार्वत्यै० ॥ नासिकायां–षण्मुखाय०॥ नासापुटयोः–कम्बलाश्वतरनागाभ्यां० ॥ कर्णयोः–अश्विभ्यां० ॥ चक्षुषोः–शशिभास्कराभ्यां० ॥ दन्तेषु–वायवे० ॥ जिह्वायां–वरुणाय०॥ हुंकारे–सरस्वत्यै० ॥ गण्डयोः–पक्षमासाभ्यां० ॥ ओष्ठयोः–सन्ध्याद्वयाय०॥ ग्रीवायां–इन्द्राय० ॥ कुक्षिदेशे–रक्षोभ्यो०॥ उरसि–साध्येभ्यो० ॥ पादेषु–धर्माय० ॥ जङ्घासु–अधर्माय०॥ खुरमध्ये–गन्धर्वेभ्यो० ॥ खुराग्रे–पन्नगेभ्यो०॥ खुरपश्चिमाग्रे–अप्सरोभ्यो०॥ पृष्ठे–एकादशरुद्रेभ्यो०॥ सर्वसन्धिषु–वसुभ्यो०॥ श्रोणितटे–पितृभ्यो०॥लाङ्गले-सोमाय० ॥ गुह्ये–आदित्यरश्मिभ्यो०॥गोमूत्रे–गङ्गायै०॥गोमये–यमुनायै० ॥क्षीरे–सरस्वत्यै०॥दध्नि–नर्मदायै०॥घृते–अग्नये०॥ रोमसु–त्रयस्त्रिंशद्देवगणेभ्योनमः ॥ उदरे–पृथिव्यै० ॥ पयोधरेषु–चतुःसमुद्रेभ्यो०चतुरःसमुद्रानावाहयामिपूजयामि ॥ एतादेवताअङ्गेष्वावाह्यसम्पूजयेत् ॥ गवेनमःसौभाग्यद्रव्यंस० ॥ १४ ॥ गवे० धूपंस० ॥१५॥ गवे०दीपंस० ॥ १६ ॥ गोग्रासनैवेद्यम्–सुरभित्वंजगन्मातादेविविष्णुपदेस्थिता ॥ सर्वदेवमयिग्रासंमयादत्तमिमंग्रस ॥ १७ ॥ गवे०गोग्रासनैवेद्यंस० ॥ गवे०पूगीफलताम्बूलंस० ॥ १८ ॥ गवे०पूजासाङ्गतासिद्ध्यर्थंदाक्षिणांस० ॥१९॥ गवे०नीराजनंस० ॥२०॥ गवे०मन्त्र-

पुष्पाञ्जलिंस० ॥२१॥ हस्तेश्रीफलंगृहीत्वागोप्रदक्षिणांकुर्यात् ॥ गावोमेचाग्रतःसन्तुगावोमेसन्तुपृष्ठतः ॥ गावोमेहृदयेनित्यंगवांमध्येवसाम्यहम् ॥१॥ यानिकानिच० ॥२॥ इतिमन्त्राभ्यांप्रदक्षिणांकृत्वाश्रीफलं-गोदक्षिणपदेदद्यात् ॥ ततःप्रार्थयेत्—पञ्चगावःसमुत्पन्नामथ्यमानेमहार्णवे ॥ तासांमध्येतुयानन्दात-स्यैधेन्वैनमोनमः ॥ १ ॥ गवेनमःप्रार्थनापूर्वकनमस्कारान्स० ॥ ततोयजमानःसजलातिलकुशाक्षतंतिलपात्रे घृताक्तंगोपुच्छंगृहीत्वासंकल्पः — अद्यपूर्वो० तिथौअमुकगोत्रोत्पन्नायअमुकामुकप्रवरान्वितायअमुक-शर्मणेसुपूजितायपृथ्वीदानफलकामःसर्वपापक्षयकामोविष्णुप्रीतिकामोवाइमांप्रत्यक्षधेनुंसुवर्ण-शृङ्गींरौप्यखुरांताम्रपृष्ठींघण्टाग्रैवेयांमुक्तालाङ्गूलांकांस्योपदोहिनींसितवस्त्रद्वयोपेतांसर्वाभरण-भूषितांसोपस्करांरुद्रदैवत्यांतुभ्यमहंसंप्रददेनममेतितिलपात्रेघृताक्तगोपुच्छंकृत्वाविप्रहस्तेसतिलकुशोदकंद

१ पुण्यौषधौउतच्चवैतरणीनद्युत्तरणार्थंवैतरणीधेनुदानमीप्सितंचेत्तर्हिउपरिनिर्दिष्टप्रयोगानुसारेणसर्वंकार्यंसंकल्पेतुसर्वपापक्षयकामः—पूयशोणितयुतवैतरणीसंज्ञकनद्युत्तारणपूर्वकसुखेनवैकुण्ठभुवनप्राप्तिकामः इमांवैतरणीसंज्ञकांगांसुवर्णशृंगीत्यादिद्विजहस्तेदद्यादित्यन्तंपूर्ववत् ॥ मन्त्रस्तु—यमद्वारेपथेघोरेघोरावैतरणीनदी । तांततुंकामोयच्छामिकृष्णांवैतरणींतुगाम् ॥ दानप्र०दक्षिणां ॥ प्रार्थयेत्—विष्णुरूपद्विजश्रेष्ठ भूदेवपङ्क्तिपावन । तर्तुंवैतरणीमेनांकृष्णांगांप्रददाम्यहम् ॥ ततःपुच्छंस्वकरेधृत्वानुव्रजेत्सप्तपदानि ॥ धेनुप्रार्थना—धेनुकेत्वंप्रतीक्षस्वयमद्वारे महापथे । उत्तितीर्षुरहंदेविवैतरण्यैनमोस्तुतेइतिप्रणम्य ॥ पित्रादेरशक्तौपुत्रादिर्दद्यात् ॥ इतिवैतरणीधेनुदानेविशेषः

द्यात् ॥ तत्रमन्त्रः—यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी ॥ विश्वरूपधरोदेवःप्रीयतामनयागवा ॥१॥ इतिपठित्वाप्रतिगृह्यतामितियजमानोवदेत् ॥ देवस्यत्वेतिमन्त्रेणप्रतिगृह्णामीतिब्राह्मणोब्रूयात् ॥ ततोदाताकोदात्कस्मादादितिकामस्तुतिंपठेत् ॥ द्यौस्त्वाददातुपृथिवीत्वाप्रतिगृह्णात्विति प्रतिगृहीतावदेत् ॥ ततोदातादानप्रतिष्ठासिद्ध्यर्थमेतावतींसुवर्णनिष्क्रयभूतांदक्षिणांतुभ्यमहंसंप्रददे ॥ प्रार्थना—गवामङ्गेषुतिष्ठन्तिभुवनानिचतुर्दश ॥ यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच ॥ घृतक्षीरप्रदागावोघृतयोन्योघृतोद्भवाः ॥ घृतनद्योघृतावर्तास्तामेसन्तुसदागृहे ॥ घृतंमेहृदयेनित्यंघृतंनाभ्यांप्रतिष्ठितम् ॥ घृतंमेसर्वतश्चैवघृतंमनसिवैघृतम् ॥ पूजितासिवसिष्ठेनाविश्वामित्रेणधीमता ॥ सुरभेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ धन्योस्मिकृतकृत्योस्मितवदानप्रसादतः ॥ सर्वपापविनिर्मुक्तोयास्यामितवसन्निधौ ॥ ५ ॥ ततोयजमानःधेनुंद्विजंचप्रदक्षिणीकृत्यपुच्छंगृहीत्वासप्तपदान्यनुव्रजेदिति ॥ अनेनप्रत्यक्षगोदानाख्येनकर्मणाश्रीभगवान्पापहामहाविष्णुःप्रीयतांनमम ॥ पुनर्जलमादाय—कृतस्यप्रत्यक्षगोदानाख्यस्यकर्मणःसाङ्गतासिद्ध्यर्थंब्राह्मणपूजनंकरिष्ये ॥ ब्राह्मणान्संपूज्यदक्षिणांदत्त्वा ॥ तेभ्यआशिषोगृहीत्वा ॥ ॐविष्णवेनमःइतित्रिःपठेत् ॥ इतिप्रत्यक्षगोदानप्रयोगः ॥ अथ

वैतरणीनद्युत्तरणार्थंगोदानविधिः ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो०तिथौममसमस्त
पापक्षयार्थंयमद्वारस्थितवैतरण्याख्यनद्युत्तरणार्थंगोदानंकरिष्ये ॥ तदङ्गत्वेनाविष्णुपूजन-
पूर्वकंब्राह्मणपूजनंगोपूजनंचकरिष्ये ॥ यथासंभवंपञ्चोपचारैर्विष्णुपूजनंविधायगोत्रोच्चारपूर्वकंब्राह्मणंवृत्वापूज-
यित्वाप्रार्थयेत् ॥ विष्णुरूपाद्विजश्रेष्ठभूदेवपङ्क्तिपावन ॥ तर्त्तुकामःप्रदास्यामितुभ्यंवैतरणींतुगा-
मिति ॥ १ ॥ देहीतिप्रतिवचनम् ॥ पुत्रःकर्त्ताचेत्तर्तुमस्येतिप्रयोगः ॥ ततोधेनुंसम्पूज्यकृष्णवस्त्ररक्तमाल्यादिसुवर्णशृ-
ङ्गादिनाचालंकृत्यप्रार्थयेत् ॥ धेनुकेत्वंप्रतीक्षस्वयमद्वारेमहापथि ॥ उत्तितीर्षुरहंदेविवैतरण्यैनमो-
स्तुते ॥ १ ॥ पुत्रादौकर्तरिचेदुत्तितीर्षुरयमितिवदेत् ॥ हस्तेसजलतिलकुशगोपुच्छमादाय—यमद्वारपथेघोरेकृ-
ष्णावैतरणीनदी ॥ तर्तुकामःप्रदास्यामितुभ्यंवैतरणींतुगाम् ॥ इमांवैतरणीसंज्ञिकांसवत्सांगां
विष्णुदैवत्यांसुवर्णशृङ्गींरौप्यखुरींताम्रपृष्ठांकांस्यदोहनांकृष्णवस्त्रगन्धपुष्पाद्यार्चितांघण्टोपवीत-
संयुक्तांयथोक्तफलावाप्त्यर्थंअमुकगोत्रायअमुकशर्मणेब्राह्मणायविष्णुरूपायतुभ्यमहंसम्प्रददे



इत्युक्त्वाविप्रहस्तेजलंक्षिपेत् ॥ प्रतिगृह्णामीतिब्राह्मणोवदेत् ॥ एतद्दानप्रतिष्ठासिद्ध्यर्थंसुवर्णदक्षिणांतुभ्यमहं
सम्प्रददे ॥ प्रार्थना—विष्णुरूपाद्विजश्रेष्ठभूदेवपंक्तिपावन ॥ सदक्षिणामयादत्तातुभ्यंवैतरणीतुगौः

॥२१॥

॥ १ ॥ अथधेनुप्रार्थना—धेनुकेत्वंप्रतीक्षस्वयावदागमनंमम ॥ वैतरणींनदींघोरांपुच्छलग्नस्तराम्यं[2]-
हम् ॥ १ ॥ संयामिन्यांदक्षिणेद्वारेघोरावैतरणीनदी ॥ सुखेनोत्तरणार्थायगृहाणार्घ्यंनमोस्तुते ॥
॥ २ ॥ नमोवैतरणिदेविकृपांकुरुममोपरि ॥ दुर्गमंचैवयन्मार्गंतरिष्येत्वत्प्रसादतः ॥ ३ ॥ यम-
द्वारेमहाघोरेकृष्णावैतरणीनदी ॥ तर्तुकामःप्रयच्छामिकृष्णांवैतरणींतुगाम् ॥ ४ ॥ उष्णतोय-
महामार्गांतप्तांवैतरणींनदीं ॥ तर्तुकामःप्रयच्छामि० ॥ ५ ॥ यासावैतरणीप्रोक्तापूयशोणितसं-
युता ॥ तर्तुकामःप्रयच्छामि० ॥ ६ ॥ गवामङ्गेषुतिष्ठन्ति० ॥ ७ ॥ प्रदक्षिणानमस्कारमन्त्राः—
गावोममाग्रतःसन्तु० ॥ १ ॥ पञ्चगावःसमुत्पन्ना० ॥ २ ॥ अनुव्रज्यचतांधेनुंब्राह्मणेनसमान्वि-
ताम् ॥ इतिप्रदक्षिणीकृत्यविसर्जयेत् ॥ यथाशक्तिभूयसीदक्षिणादानम् ॥ कृतेनानेनवैतरणीनद्युत्तारणार्थंधेनु-
दानेनपापहाविष्णुःप्रीयतांनमम ॥ स्वयंदानाशक्तौपुत्रेणदत्त्वातस्मैश्रेयोदद्यात् ॥ कृष्णायागोरभावेऽन्यवर्णापि
देया, गोरभावेद्रव्यंदेयम् ॥ इतिवैतरणीगोदानविधिः ॥ ॥ अथसप्तधान्यदानानि[3] ॥
आदौव्रीहिदानम् ॥ अद्यपूर्वो०तिथौममजन्मप्रभृतिअद्ययावत्सर्वपापक्षयार्थंसप्तधान्यान्तर्गतंव्रीहि-

१ पुत्रेकर्तरिआगमनंभवेदित्यूहः ॥ २ पुत्रादिःकर्ताचेत्पुच्छलग्नस्तरत्वयमित्यूहः ॥ ३ व्रीहयोयवगोधूमामुद्गामाषाःप्रियंगवः ॥
तिलाश्चऋषिभिःप्रोक्तासप्तधान्यमितिस्मृतम् ॥

दानंकरिष्ये ॥ ब्राह्मणपूजनं ॥ ब्रह्मणानिर्मिताःपूर्वंव्रीहयोयज्ञसाधनाः ॥ अनेनव्रीहि
दानेनपूर्णाःसन्तुमनोरथाः ॥ १ ॥ इदंव्रीहिदानंप्रजापतिदैवत्यंगन्धपुष्पाद्यर्चितंसदक्षिणा-
कममुकशर्मणेतुभ्यमहंसंप्रददे ॥ एतद्दानप्र०द०सु० ॥ १ ॥ अथयवदानम् ॥ संकल्पादि-
कंपूर्ववत्कृत्वा ॥ संकल्पेतत्तद्द्रव्याणामूहःकार्यः ॥ यवाःशुद्धाःसदापूज्यायज्ञेहविषिसंस्थिताः ॥
दानेनानेनवैयस्माच्छान्तिरस्तुसदामम ॥ १ ॥ इदंयवदानंप्रजापतिदैवत्यंगंधपु०सदक्षिणा०
अमुकश० ॥ एतद्दानप्र० ॥ २ ॥ अथगोधूमदानम् ॥ धान्याग्रेसरकाजम्बुद्वीपेगोधूमसंज्ञकाः ॥
पुष्टिवृद्धिकराःसौख्याअतःशान्तिं० ॥ १ ॥ इदंगोधूमदानंप्रजापतिदैवत्यं० ॥ एतद्दानप्र०
॥ ३ ॥ अथमुद्गदानम्—धान्यानामुत्तमामुद्गादेवानांप्रीतिदायकाः ॥ अतस्तेषांप्रदानेनाविष्णु-
लोकेमहीयते ॥ १ ॥ इदंमुद्गदानंप्रजापतिदै० ॥ एतद्दानप्र० ॥ ४ ॥ अथमाषदानम्—येचदेह-
हितार्थायविष्णोर्देहसमुद्भवाः ॥ पितृतृप्तिकरामाषाःप्रयच्छन्तुशुभांगतिम् ॥ १ ॥ इदंमाष-
दानंपितृदैवत्यं० ॥ एतद्दानप्र० ॥ ५ ॥ अथप्रियंगुदानम्—प्रियंगवःसदाश्रेष्ठाऋषीणांप्रीतिदायकाः ॥
अतस्तेषांप्रदानेनमुनिलोकेमहीयते ॥ इदंप्रियंगुदानंऋषीदैवत्यं० ॥ एतद्दानप्र० ॥ ६ ॥ अथति-

लदानम्—तिलाश्वेतास्तिलाकृष्णास्तिलागोमूत्रसन्निभाः ॥ तेमेदहन्तुपापानिशरीरादिकृतानिच॥ इदंतिलपात्रंसोमदैवत्यं०॥ एतद्दानप्र० ॥ ७ ॥ इतिसप्तधान्यदानानि ॥ ॥ अथाष्टमहा[1]दानानि ॥ अथतिलपात्रदानम्—ताम्रपात्रेतिलान्सुवर्णंचक्षिप्त्वा ॥ अद्यपूर्वो०ममजन्मप्रभृतिमरणान्तंकृतनानाविधंपापशमनार्थंतिलपात्रदानंक० ॥ ब्राह्मणंसम्पूज्य ॥ दानमन्त्रः—तिलाःपुण्यापवित्राश्चातिलाःसर्वकराःस्मृताः ॥ शुक्लावायदिवाकृष्णाऋषिगोत्रसमुद्भवाः ॥ १ ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेननश्यन्तुपातकानिमे ॥ २ ॥ पुत्रादिश्चेत्कर्त्तामेइत्यस्यस्थानेऽस्येतिनिर्देशः ॥ इदंतिलपात्रंतिलपूरितंसोमदैवत्यंगन्धपुष्पाद्यार्चितंसदक्षिणाकंअमुकशर्मणेब्राह्मणायतुभ्यमहंसम्प्रददे ॥ एतद्दानप्र० ॥१॥ अथलोहदानम् ॥ संकल्पेतत्तद्द्रव्याणामूहः ॥ दानमन्त्रः—यस्मादायसकर्माणितवाधीनानिनित्यशः ॥ लांगलाद्यायुधादीनिततःशान्तिं० ॥ इदंलोहदानंयमदैवत्यं० ॥ एतद्दानप्र० ॥ २ ॥ अथहिरण्यदानम्—हिरण्यगर्भ० ॥ इदंसुवर्णअग्निदैवत्यं० ॥ एतद्दानप्र०॥ ३ ॥ अथकार्पासदानम्—येनदत्तेनप्रीयन्तेभूर्भुवःस्वरितिक्रमात् ॥ ब्रह्माद्यादेवताःसर्वे

[1] तिलालोहंहिरण्यंचकार्पासंलवणंतथा ॥ सप्तधान्यंक्षितिर्गावःइदंदानाष्टकंस्मृतम् ॥

कार्पासेनतुतोषिताः ॥ इदंकार्पासंबृहस्पतिदैवत्यं०॥ एतद्दानप्र० ॥४॥ अथलवणदानम् ॥ यस्मा-
दन्नरसाःसर्वेनोत्कृष्टालवणंविना ॥ पितॄणांचाप्रियंनित्यंतस्मात्स्वर्गप्रदंभवेत् ॥ इदंलवणंविष्णु
दैवत्यं०॥ एतद्दानप्र०॥५॥ अथसप्तधान्यम्–अन्नंप्रजापतिःसाक्षादन्नमेवजनार्दनः ॥ अन्नाद्भवन्ति
भूतानिजगदेतेनवर्धते ॥ इदंसप्तधान्यंप्रजापतिदैवत्यंयमदूतानांप्रीत्यर्थं०॥ एतद्दानप्र० ॥ ६ ॥
भूमिदानम्–समुद्रवसनादेवीभूतधात्रीचवैष्णवी ॥ सामेदहतुपापानिजन्मान्तरकृतान्यपि ॥ इदं
भूमिदानंविष्णुदैवत्यंगं०॥ एतद्दानप्र०॥ ७ ॥ अथप्रायश्चित्तधेनुदानम्–गावोममाग्रतःसन्तु० ॥१॥
मातात्वंसर्वभूतानामसित्वंपापनाशिनी ॥ पापार्णवेनिमग्नानांसमुद्धरनमोस्तुते ॥ इमांप्राय-
श्चित्तधेनुसंज्ञिकांगांविष्णुदैवत्यांगंध०॥ एतद्दानप्र० ॥ ८ ॥ इत्यष्टदानानि ॥ कर्मपरिपूर्णार्थंछायापात्र-
दानम्–आज्यंतेजःसमुद्दिष्टमाज्यंपापहरंपरम् ॥ आज्यंसुराणामाहारःसर्वमाज्येप्रतिष्ठितम् ॥ इदं
कांस्यपात्रंआज्यपूरितंसूर्यदैवत्यंसदक्षिणाकंगंधपुष्पाद्यर्चितंछायादोषनिवारणार्थंतुभ्यं०॥ एत-
द्दानप्र० ॥ इत्यादिदानानिदत्त्वायन्मयाकृतंअमुकप्रायश्चित्तंतदच्छिद्रमस्तु इतिकर्त्रोक्तेऽच्छिद्रमस्त्वितिब्राह्मणाब्रूयुः ॥

१ एतानिदानानिसभ्येभ्यएवदद्यात् ॥ तदसंभवेऽन्येभ्योपिवा ॥ २ एतत्प्रायश्चित्तमकृत्वैवयदिपित्रादिर्मृतःस्तदातत्पातकसत्तानिश्चयेः।

यद्वावृताच्छिद्रंतपच्छिद्रंयाच्छिद्रंयज्ञकर्मणि॥सर्वंभवतुतेऽच्छिद्रंयस्यचेच्छंतिवैद्विजाः॥ इतिप्रतिवचनम् ॥ अथचरणोदकग्रहणम् ॥ गायत्र्याचरणामृतमभिमन्त्र्यकिञ्चित्पात्रान्तरेकृत्वा ॐएतावानस्य०॥ इतिमन्त्रेणाविष्णोरुपरिचरणामृतबिन्दुंनिधायकिञ्चिदीशान्यांत्यक्त्वास्वयंपिबेत्तत्रमन्त्रः-असाश्चितानिपापानिसाश्चितानिबहून्यपि ॥ तानिसर्वाणिनश्यन्तिपीतेपादोदकेहरेः ॥ १ ॥ ततःकिञ्चिच्चरणोदकंगृहीत्वाशिरसिधारयेत् ॥ तत्रमन्त्रः-अकालमृत्युहरणंसर्वव्याधिविनाशनम् ॥ विष्णोःपादोदकंपुण्यंशिरसिधारयाम्यहम् ॥ १ ॥ हस्तेतुलसीदलंगृहीत्वाविष्णुंप्रार्थयेत्-मन्त्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर ॥ यन्मयाचरितंदेवपरिपूर्णंतदस्तुमे ॥१॥ यस्यस्मृत्या०॥ २ ॥ इतिवदन्विष्णुंस्मरेत् ॥ ॐविष्णवेनम इतित्रिःपठेत् ॥ अद्यपूर्वो० कृतेनानेनप्राच्योदीच्याङ्गसहितप्रायश्चित्तेनपापहामहाविष्णुःप्रीयतांनमम ॥ प्रायश्चित्तेयोन्यूनातिरिक्तविधिःसउपविष्टब्राह्मणानांवचनाच्छ्रीमहाविष्णोः प्रसादात्सर्वः परिपूर्णोऽस्तु ॥ अस्तुपरिपूर्णइतिप्रतिवचनम् ॥ इतिदेहशुद्धिप्रायश्चित्तप्रयोगः ॥

---

१ पुत्रादिनापीदमवश्यंकार्यम् ॥ अनिश्चयेनावश्यकम् ॥ पुत्रादिनाकरणेपञ्चगव्यप्राशनाभावः ॥ दत्त्वादानंतुविप्रेभ्योदीनानाथेभ्यएवच ॥ बन्धौमित्रेकलत्रेचक्षेत्रधान्यधनादिषु ॥ मित्रवर्गेचसर्वत्रममत्वंविनिवर्तयेदिति ॥

अथसंक्षेपतःपुण्यौषाधिप्रयोगः ॥ गृहेगङ्गादितीर्थेअश्वत्थसमीपेवागत्वामृद्गोमयकुशतिलसुमनसादिसंभा-



रानाहृत्यकर्मार्थंशुद्धभूमिंप्रकल्प्यपाणिपादंप्रक्षाल्यबद्धशिखःकुशोपग्रहःपूर्वाभिमुखउपविश्य ॥ आचम्यप्राणानायम्य ॥ कुश-
पवित्रधारणम्—ॐपवित्रेस्त्थोवैष्णव्व्यौसवितुर्व्वःप्प्रसवऽउत्पुनाम्म्यच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मि-
भिः ॥ तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ १ ॥ हस्तेजलमादाय—विष्णुर्विष्णु-
र्विष्णुःश्रीमद्भगवतो० तिथौममजन्मप्रभृतिअद्यदिनंयावत्ज्ञाताज्ञातकामाकामसकृदसकृत्का-
यिकवाचिकमानसिकसांसर्गिकस्पृष्टास्पृष्टभुक्ताभुक्तपीतापीतसकलपातकातिपातकोपपातकगु-
रुलघुपातकसंकरीकरणमलिनीकरणापात्रीकरजातिभ्रंशकरप्रकीर्णपातकानांमध्येसंभावितानां
पातकानांनिरासार्थं ( अमुकतीर्थेगृहेवा ) विष्णुपूजनपूर्वकंप्राच्योदीच्यांगसहितंदेहशुद्धिप्राय-
श्चित्तंकरिष्ये ॥ तीर्थप्रार्थना—आपोनारायणोद्भूताःस्तानेवास्यायनंमम ॥ तस्मान्नारायणंदेवंस्नान-
कालेस्मराम्यहम् ॥ १ ॥ त्वंराजासर्वतीर्थानांत्वमेवजगतःपिता ॥ याचितंदेहिमेतीर्थसर्वपापैः



प्रमुच्यते ॥ २ ॥ नमामिगङ्गे०॥ ३ ॥ यागतिर्योगयुक्तानांमुनीनामूर्ध्वरेतसाम्॥ सागतिःसर्व-
जन्तूनांगौतमीतीरवासिनाम् ॥ ४ ॥ पुष्करााद्यानितीर्थानिगङ्गाद्याःसरितस्तथा ॥ आगच्छन्तुप-

वित्राणिस्नानकालेसदाममम ॥ ५ ॥ गङ्गेचयमुनेचैवगोदावरिसरस्वति ॥ नर्मदेसिन्धोकावेरिज-लेस्मिन्सान्निधिंकुरु ॥ ६ ॥ नन्दिनीनलिनीसीतामालतीचमलापहा ॥ विष्णुपादाब्जसम्भूता गङ्गात्रिपथगामिनी ॥ ७ ॥ भागीरथीभोगवतीजाह्नवीत्रिदशेश्वरी ॥ द्वादशैतानिनामानियत्र यत्रजलाशये ॥ ८ ॥ स्नानोद्यतःपठेद्यत्रतत्रैवनिवसाम्यहम् ॥ इति ॥ अथतीर्थप्रयोगः ॥ तीर्थेताम्र-पात्रेवातुलसीतिलयवगन्धाक्षतपुष्पाणिप्रक्षिप्यप्रयोगंकुर्यात् ॥ पुष्करादयानि० ॥ १ ॥ श्रीपुष्करदेवतेएषतेऽर्घः ॥ तीक्ष्णदंष्ट्रमहाकायकल्पान्तदहनोपम ॥ भैरवायनमस्तुभ्यंस्नानानुज्ञांप्रयच्छमे ॥ २ ॥ श्रीभै-रवदेवतेएषतेऽर्घः ॥ गङ्गागङ्गेतियोब्रूयाद्योजनानांशतैरपि ॥ मुच्यतेसर्वपापेभ्योविष्णुलोकं सगच्छति ॥३॥ श्रीगङ्गेएष० ॥ प्रभातेवहतिगङ्गामध्याह्नेतुसरस्वती ॥ अपराह्णेसर्वतीर्थानि रात्रौवहतिनर्मदा ॥ ४ ॥ श्रीनर्मदेएष० ॥ अयोध्यामथुरामायाकाशीकाञ्चीह्यवन्तिका ॥ पुरीद्वारावतीज्ञेयासप्तैतामोक्षदायिकाः ॥ ५ ॥ श्रीअयोध्येएष० ॥ गोमतीगोमयस्नानंगो-दानंगोपीचन्दनम् ॥ दर्शनंगोपीनाथस्यगकाराःपञ्चदुर्लभाः ॥ ६ ॥ श्रीगोमतिएष० ॥ षष्टीवर्ष-सहस्राणिभागिरथ्यावगाहने ॥ सकृद्गोदावरीस्नानंसिंहस्थेचबृहस्पतौ ॥ ७ ॥ श्रीगोदावरिएष० ॥

असीवरणयोर्मध्येपञ्चक्रोशीमहत्फलम् ॥ अमरामरणमिच्छन्तिइतरेषांतुकाकथा ॥ ८ ॥ श्रीवा-
राणसिएष० ॥ इतितीर्थप्रयोगंकृत्वा ॥ हस्तेजलमादाय—अद्यपूर्वो० तिथौममात्मनःश्रु० कायिकवाचिक-
मानसिकसांसर्गिकचतुर्विधपापक्षयार्थंदेहशुद्ध्यर्थं (गृहेतीर्थेवा) स्नानविधिनास्नानमहंकरिष्ये ॥
तदङ्गत्वेनभस्मादिदशविधिनास्नानमहंकरिष्ये ॥ तत्रादौभस्मस्नानम्—ईशानायनम इतिशिरसि ॥ तत्पु-
रुषायनम इतिमुखे ॥ अघोरायनम इतिहृदये ॥ वामदेवायनम इतिगुह्ये ॥ सद्योजातायनम इतिपादयोः ॥
प्रणवेन सर्वाङ्गे ॥ अथगोमयस्नानम्—ॐमानस्तोके० ॥ १ ॥ अग्रमग्रंचरंतीनामोषधीनांवनेवने ॥
तासामृषभपत्नीनांपवित्रंकायशोधनम् ॥ तन्मेरोगांश्चशोकांश्चपापंचहरगोमय ॥ इतिगोमयस्नानम् ॥
अथमृत्तिकास्नानम्—ॐइदंविष्णुर्वि०॥ अश्वक्रान्तेरथक्रान्तेविष्णुक्रान्तेवसुन्धरे ॥ उद्धृतासिवरा-
हेणकृष्णेनशतबाहुना ॥ मृत्तिकेब्रह्मपूतासिकाश्यपेनाभिवन्दिता ॥ त्वयाहतेनपापेनगच्छामि
परमांगतिम् ॥ मृत्तिकेहरमेपापंयन्मयादुष्कृतंकृतम् ॥ मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वंप्रतिष्ठितम् ॥
इतिमृत्तिकास्नानम् ॥ आपोहिष्ठेतिशुद्धोदकस्नानम्—ॐआपोहिष्ठा० ॥ अथपृथक्पृथक्पञ्चगव्यस्नानम्—गायत्री-

१ दक्षिणहस्तस्थमृदामुखप्रभृतिनाभ्यंतानिउत्तमाङ्गानिलेपयेत् ॥ वामहस्तस्थमृदानाभ्यादिपादपर्यन्तानिलेपयेत् ॥

मन्त्रेणगोमूत्रस्नानम्—ॐतत्सवितु०॥ गन्धद्वारेतिगोमयम्—ॐगन्धद्वारां ० ॥ आप्यायस्वेतिक्षीरम्—ॐआ-प्यायस्व० ॥ दधिक्राव्णोतिदधि—ॐदधिक्राव्णो० ॥ तेजोसीत्याज्यं—ॐतेजोसि० ॥ देवस्यत्वेतिकुशोद-कम्—ॐदेवस्यत्वा० ॥ एवंदशस्नानानिविधायस्वसूत्रोक्तविधिनामन्त्रस्नानंकुर्यात् ॥ (स्त्रीशूद्राणाममन्त्रकानिस्ना-नानिपौराणमन्त्रैर्वा) ॐउरुंहीतिमन्त्रेण जलाभिमन्त्रणम्—ॐउरुंहिराजावरुणश्चकारसूर्य्यायपन्थामन्वेत-वाउ ॥ अपदेपादाप्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् ॥ नमोवरुणायाभिष्ठितोवरुणस्य-पाशः॥ इत्यभिमन्त्र्य ॥ जलावर्तनम्—ॐयेतेशतंवरुणंयेसहस्रंयज्ञियाःपाशावितताम्महान्तः॥ तेभिर्नो अद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्काः॥ सुमित्रियानइत्यपोञ्जलीनादाय—ॐसुमित्रियानऽआपऽ ओषधयःसन्तुदुर्मित्रियास्तस्मैसन्तुयोस्मान्द्वेष्टियंचवयंद्विष्मः॥ कामक्रोधलोभमोहमदमत्सरए-तेषांउत्तरेत्यागः॥मृत्तिकाग्रहणम् ॐइदंविष्णुर्वि० ॥ अश्वक्रान्ते०॥ सूर्याभिमुखोनिमज्य—ॐआपोऽअ-स्मान्मातरःशुंधयन्तुघृतेननोघृतप्वःपुनन्तु॥ विश्वंहिरिप्रम्प्रवहन्तिदेवीरुदिदाभ्यःशुचिरापूत-ऽएमि ॥ तूर्ष्णींस्नात्वानिमज्योन्मज्याचम्य ॥ ॥ मानस्तोकेतिगोमयस्नानम्—ॐमानस्तोके०॥ अग्रमग्रं०॥ तत

---

१ तथाचोक्तं भविष्ये—श्रोतव्यमेवशूद्रेणनाध्येतव्यंकदाचनेति ॥

इमम्मेइत्यादिवक्ष्यमाणमन्त्रैरभिषिञ्चेत् ॥ ॐ इमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥१॥
तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशꣳससमा-
नऽआयुःप्रमोषीः ॥२॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठो-
वह्नितमःशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥३॥ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽ
अस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनऽएधि ॥४॥ मापोमौ-
षधीर्हिꣳसीर्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्याऽइतिवरुणेतिशपामहेततोवरु-
णनोमुञ्च ॥५॥ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥ अथावयमादित्यव्रते-
तवानागसोऽअदितयेस्याम ॥६॥ मुञ्चन्तुमाशपथ्यादथोवरुण्यादुत ॥ अथोयमस्यपड्वीशा-
त्सर्वस्माद्देवकिल्बिषात् ॥७॥ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवैर्देवकृतमे-
नोयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥८॥ इति निमज्योन्मज्याचम्य ॥ दर्भैःपावयेत् ॥
ॐ भूःपुनातु ॥ ॐ भुवःपु० ॥ ॐ स्वःपु० ॥ ॐ महःपु० ॥ ॐ जनःपु० ॥ ॐ तपःपु० ॥ ॐ सत्यंपु० ॥
गायत्रीमन्त्रेणसर्वंपुनातु ॥ ॐ आपोहिष्ठा० ॥ ॐ योवःशि० ॥ तस्माऽअ० ॥ इदमापःप्रवहतावद्यञ्च-

॥२६॥

मलेश्वघत् ॥ यच्चाभिदुद्रोहान्नृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातरःसादेनसःपवमानश्चमुञ्चतु
॥१॥ हविष्मतीरिमाऽआपोहविष्माँ२आविवासति ॥हविष्मान्देवोऽअध्वरोहविष्माँ२अस्तुसूर्यः
॥२॥ देवीरापोऽअपान्नपाद्योवऽऊर्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ॥ तन्देवेभ्योदेवत्रादत्तशुक्र-
पेभ्योयेषाम्भागस्थस्वाहा ॥३॥ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मत-
समोषधीभिरोषधीः ॥४॥ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः । याभिर्म्मित्रावरु-
णावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥५॥ द्रुपदादिव०॥६॥ शन्नोदेवी०॥ ७॥अपाꣳरसमु०
॥८॥अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ॥तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः
॥ ९ ॥ पुनन्तुमापितरःसोम्यासः पुनन्तुमापितामहाःपुनन्तुप्रपितामहाःपवित्रेणशतायुषा ॥
पुनन्तुमापितामहाःपुनंतुप्रपितामहाः ॥ पवित्रेणशतायुषा विश्वमायुर्व्यश्नवै ॥ १० ॥ अग्नऽ-
आयूꣳषिपवसऽआसुवोर्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम् ॥ ११ ॥ पुनन्तुमादेवजनाःपुन-
न्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥ १२ ॥ पवित्रेणपुनीहिमाशुक्रे-
णदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूँ२रनु ॥ १३ ॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेन-

पुनातुमा ॥ १४ ॥ पवमानःसोऽअद्यनंःपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥ १५ ॥
उभाभ्यान्देवसवितःपवित्रेणसवेनच ॥ माम्पुनीहिविश्वतंः ॥१६॥ वैश्वदेवीपुनतीदेव्यागाद्य-
स्यामिमाबह्व्यस्तन्न्वोवीतपृष्ठाः ॥ तयामदन्तःसधमादेषुवयᳪस्यामपतयोरयीणाम् ॥ १७॥
चित्पतिर्म्मापुनातुवाक्पतिर्म्मापुनातुदेवोमासवितापुनात्वच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥
तस्यतेपवित्रपतेपवित्रपूतस्ययत्कामःपुनेतच्छकेयम् ॥ १८ ॥ ॐभूःपुनातु ॥ ॐभुवःपु० ॥
ॐस्वःपु० ॥ ॐमहःपु० ॥ ॐजनःपु० ॥ ॐतपःपु० ॥ ॐसत्यंपु० ॥ ॐतत्सवितु० सर्वंपुनातु ॥
ततःस्नात्वा[1] ॥ ततोजलेऽघमर्षणं ॥ त्रिरावर्तयेद्द्रुपदादिवायज्ञौरितिवात्र्यृचंप्राणायामंसाशिरसमोमितिवाविष्णोर्वास्मरणम् ॥
एतेषांमध्येएकेनाघमर्षणं ॥ ॐद्रुपदादिव० ॥ इतित्रिः ॥ अथस्नानाङ्गतर्पणम्–ॐभूर्देवांस्तर्पयामि ॥
ॐभुवर्देवांस्त० ॥ ॐस्वर्देवांस्त० ॥ ॐभूर्भुवःस्वर्देवांस्त० ॥ ततोनिवीती[2] ॥ ॐभूर्मनुष्यां-
स्त० ॥ ॐभुवर्मनुष्यांस्त० ॥ ॐस्वर्मनुष्यांस्त० ॥ ॐभूर्भुवःस्वर्मनुष्यांस्त० ॥ प्राचीनावी[3]-
ति ॥ ॐभूःपितॄंस्तर्पयामि ॥ ॐभुवःपितॄंस्त० ॥ ॐस्वःपितॄंस्त० ॥ ॐभूर्भुवःस्वःपि० ॥

---

१ स्वगृहेस्नानविधिःक्रियतेचेत्तर्हितर्पणंअन्तराचमनंअघमर्षणंचनकार्यमितिप्रायश्चित्तमयूखे ॥ २ कंठयंकृत्वा ॥ ३ अपसव्यंकृत्वा ॥

सव्यं ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तद्दोषपरिहारार्थंयक्ष्माणंतर्पयाम्यहम् ॥
इतिमन्त्रेणजलाञ्जलिंतटेनिक्षिपेत् ॥ शरीरशुद्ध्यर्थंपुरुषसूक्तंपठित्वामाषमात्रंपञ्चगव्यंपिबेत् ॥ धौतेवाससीपरिधायभस्मना-
त्रिपुण्ड्रंकृत्वा ॥ आचम्यप्राणानायम्य ॥ कुशपवित्रधारणम् ॥—ॐपवित्रेस्थो० ॥ तन्तुदेवतानावाह्ययज्ञोपवीतधारणं
अद्यपूर्वो० तिथौ प्रायश्चित्ताङ्गभूतंविष्णोःषोडशोपचारैःपञ्चोपचारैर्वापूजनमहंकरिष्ये ॥ तदङ्ग-
त्वेनकलशाराधनपूर्वकंशंखघण्टापूजनमहंक० ॥ इतिसंकल्प्यविष्णुपूजनंविधाय ॥ प्रायश्चित्ताङ्गवैष्णव
श्राद्धंकुर्यात् ॥ तद्यथा—प्रायश्चित्ताङ्गंविष्णोएतत्तेपाद्यंपादावनेजनंपादप्रक्षालनंएषवोर्घः ॥ इदम-
त्रचन्दनंपुष्पं ॥ पादार्घोदकनिक्षेपःस्वपादौप्रक्षाल्याचम्य ॥ तिलान्गृहीत्वादिग्बन्धः—ऐन्द्र्यां-
नारायणोरक्षे० ॥ अपवित्रःपवित्रोतिजलप्रक्षेपः ॥ ताम्रपात्रेसतिलयवगन्धाक्षतजलंपूरयित्वातिलोदककरणम् ॥
यद्देवेतितिसृणां० ॥ ॐयद्देवा० ॥ यदिदिवा० ॥ यदिजाग्र० ॥ ३ ॥ इतिमन्त्रेणतिलोदकंविधाय ॥
विष्णुश्राद्धोपहाराणांपवित्रतास्तु ॥ अद्यपूर्वो०तिथौप्रायश्चित्ताङ्गंवैष्णवश्राद्धंकरिष्ये ॥ विष्णवे-
आसनंइदमासनं ॥ विष्णवेअर्चनं ॥ अर्चनविधेःसर्वंपरिपूर्णमस्तु ॥ विष्णवेधूपंइदमार्चितंवो-
ज्योतिःसुज्योतिःसूर्यायपुष्पंशेषोपचाराःसंपूर्णाविधिवद्भवन्तु ॥ प्रायश्चित्ताङ्गंविष्णवेभोजनं

( विष्णूद्देशेनत्रिभ्योधिकान्ब्राह्मणान्भोजयेत् असक्तश्चेदामान्नंहिरण्यंवादद्यात् ) विष्णवेमुखवासताम्बूलंसहिरण्यं ॥ कृतेनानेनप्रायश्चित्ताङ्गवैष्णवश्राद्धेनपापहामहाविष्णुःप्रीयतांनमम ॥ प्रायश्चित्तादौआद्यगोमिथुनं अद्यपूर्वो० तिथौ प्रायश्चित्तपूर्वाङ्गतयाविहीतामिदंगोमिथुनंतन्निष्क्रयभूतंद्रव्यंरुद्रदैवत्यंगन्धपुष्पाद्यर्चितंअहंदास्ये ॥ तेनपापहाविष्णुःप्रीयताम् ॥ शक्तिश्चेत्प्रायश्चित्तद्रव्यसंकल्पंकुर्यात्—यथा—अद्यपूर्वो०तिथौममअद्यादिनंयावत्कृतकायिक०पापानांनिरासार्थमष्टोत्तरशतगोनिष्क्रयभूतंद्रव्यंगन्धपुष्पाद्यर्चितंनानानामगोत्रेभ्योब्राह्मणेभ्योविभज्याहंदास्ये ॥ तेनपापहामहावि० ॥ शक्तश्चेत्तिलपात्रादिदानानिकुर्यात् ॥ तिलपात्रादिदानेषुहिरण्यंदक्षिणापृथक्पृथक् ॥ विस्तारेणपृथक्दानकालासंभवेसमुदितानांसंकल्पः—इमानितिलादीन्यष्टौमहादानानिनानादैवतानिगंधपुष्पाद्यर्चितानिसदक्षिणानितत्तद्दानफलावाप्तयेश्रीविष्णुप्रीत्यर्थंनानानामगोत्रेभ्योब्राह्मणेभ्योविभज्याहंदास्ये ॥ तेनपापहावि० ॥ ( इच्छाचेत्दश[1]महादानानिसप्तधान्यदानानिवादद्यात् ) ततउदीच्याङ्गंवैष्णवश्राद्धंतुलसीदर्भाक्षतान्गृहीत्वा ॥ अद्यपूर्वो० तिथौ ममजन्मप्रभृतिअद्यादिनंयावत्० इत्यादिपूर्वोक्तप्रयोगोच्चारणंकृत्वाउदीच्याङ्गंवैष्णवश्राद्धं

१ दशदानानिसप्तधान्यदानानिचप्रायश्चित्तप्रकरणेऽस्माभिर्लिखितानि ॥

करिष्य इतिसंकल्प्यविष्णुश्राद्धंकुर्यात् ॥ ततःपूर्ववदुत्तरगोदानं ॥ अद्यपूर्वो०तिथौप्रायश्चित्तोत्तराङ्गतयाविहि-
तमिदंद्वितीयंगोमिथुनंतन्निष्क्रयद्रव्यंवारुद्रदैवत्यंगंधपुष्पाद्यर्चितमहंदास्ये ॥ तेनपापहाविष्णुः
प्रीयतांनमम ॥ कृतेनानेनप्राच्योदीच्याङ्गसहितप्रायश्चित्तेनअमुकगोत्रःअमुकशर्माहंनिष्पापो-
भूयासम् ॥ इतित्रिर्वाच्यम् ॥ ॐनिष्पापोभूयाइतिब्राह्मणावदेयुः ॥ मुखावलोकनम्–अद्यपूर्वो०तिथौ ( आज्यपात्रं
गृहीत्वा ) देहशुद्धिप्रायश्चित्ताङ्गतयाविहितमिदमाज्यपात्रंसूर्यदैवत्यंगन्धपुष्पाद्यर्चितंसदक्षिणा-
कंब्राह्मणायदास्ये ॥ तेनपापहाविष्णुःप्रीयताम् ॥ ततस्तीर्थग्रहणम्–अकथितानिपापानिसंचितानि-
बहून्यपि ॥ तानिसर्वाणिनश्यन्तिपीत्वापादोदकंहरेः ॥ १ ॥ तीर्थवंदनम्–अकालमृत्युहरणंसर्व
व्याधिविनाशनं ॥ विष्णोःपादोदकंपुण्यंशिरसिधारयाम्यहम् ॥ तुलसीदलंगृहीत्वायस्यस्मृत्येतिविष्णुं-
नमस्कृत्य यस्यस्मृत्या–॥ कृतेनानेनविष्णुपूजनपूर्वकप्राच्योदीच्याङ्गसहितप्रायश्चित्तेनपापहामहा
विष्णुःप्रीयताम्॥ ॐविष्णवेनम इतित्रिः-पठेत् ॥ इतिसंक्षेपतःपुण्यौषधीप्रयोगः ॥ इतिश्रीद्विवे-
द्युपाह्वलीलाधरात्मज " चुन्नीलालशर्मणा " तथाचज्योतिर्विदुपनामकभानुशङ्करतनुजनूष
" सूर्यरामशर्मणा " संशोध्यसंवर्ध्यसंकलितेदाल्भ्योक्तेअशुभकर्मप्रदीपेप्रथमोविभागः ॥

## ॥ अथ दाल्भ्योक्तअशुभकर्मप्रदीपस्य द्वितीयो विभागः ॥

आसन्नमरणसमयकृत्यम् ॥ प्राणोत्क्रमणसमयेपुत्राद्यधिकारीगङ्गादिपुण्यतीर्थेऽश्वत्थसमीपेतुलसीशालिग्रामसन्निधौ स्वगृहेवागोमयोपलिप्तायांबर्हिष्मत्यांसतिलगङ्गादिपुण्यजलप्रोक्षितायांभूमौदक्षिणशिरसमुदक्शिरसंवाआतुरंस्थापयित्वागोपीचन्दनंगङ्गादिमृत्तिकावामुखेशिरसिकर्णेचधृत्वाकण्ठेगङ्गोदकंधारयेत् ॥ श्रीविष्णुंस्मरन्पुत्रोत्सङ्गेधारितशिराईशावास्यंपुरुषसूक्तंगीतांसहस्रनामादिस्तोत्राणिपठेत् ॥ अन्योवाश्रावयेत् ॥ श्रावयिता अस्यामुकशर्मणोऽमृतत्वप्राप्तयेईशावास्याद्युपनिषद्भागान्स्तोत्राणिरामकृष्णनारायणादिनामानिवाश्रावयिष्ये ॥ जप्त्वाचैवपरंस्थानममृतत्वंसगच्छतीतियजुर्विधानात् ॥ ततउत्क्रान्तिधेनुदानम्—पुत्रादिर्देशकालौसंकीर्त्यामुकगोत्र-

---

१ एवंकृतेयदापुंसांकालःस्यादवसानकः । तदोपलिप्तायांभूमौप्रक्षिपेत्तीर्थवालुका ॥ कुशतिलाक्षतास्तत्रह्यास्तीर्यतदनन्तरं । आतुरंपञ्चगव्यैश्चतिलामलमृदोदकैः ॥ स्थापयित्वायाम्यपादमुदकशीर्षंतुतत्रवै । स्थापयित्वातुरंपश्चाच्चन्दनैस्तंविलेपयेत् ॥ भालेचतिलकंकृत्वामुखेचतुलसीदलं । पञ्चरत्नंचनिक्षिप्यग्रीवायांतुलसीस्रजम् ॥ तत्पार्श्ववर्तिनःसर्वेपुत्रादिबान्धवादयः । तस्योपदेशयेत्पुत्रोविष्णुस्मरणकीर्तनं ॥ विष्णुध्यानपरःसोपिगतासुश्चयदाभवेत् । तदापुत्रःक्रमेणैवषट्पिण्डान्कारयेत्सुधीः ॥ यवतण्डुलपिष्टेनतिलाज्यसहितेनच । शवहस्तेयथास्थानेसकुशेनाप्सव्यतः ॥ निर्णिज्यदत्वापिण्डंचकुर्यात्प्रत्यवनेजनम् । दक्षिणाकल्पनंकुर्यादेकोद्दिष्टविधानतः ॥

स्यामुकशर्मणःअस्यसुखेनप्राणोत्क्रमणप्रतिबन्धकोक्तनिष्कृत्यनुक्तनिष्कृतिसकलपातकक्षयद्वा-
रासुखेनप्राणोत्क्रमणार्थंयथाशक्त्यालंकृतामिमामुत्क्रान्तिसंज्ञिकांगांरुद्रदैवत्यांगन्धपुष्पाद्य-
र्चितांअमुकशर्मणेब्राह्मणायतुभ्यमहंसम्प्रददे ॥ ( गोरभावेद्रव्यंवादेयं ) ब्राह्मणंवृत्वागांसम्पूज्य ॥ गवा-
मंगेष्वितिमन्त्रमुक्त्वा इमामुत्क्रान्तिसंज्ञिकांगांरुद्रदै०संकल्पोक्तफलावाप्तयेऽमुकशर्मणेब्राह्मणायतु-
भ्यमहंसम्प्रददे ॥ दानप्र०द० ॥ अथवपनम् ॥ मातापित्रोर्मरणेसंस्कारकर्ता—हस्तेजलमादाय—अद्यपूर्वो०
तिथौअमुकगोत्रस्यामुकप्रेतस्य ( स्त्रीविषयेगोत्रायाःप्रेतायाः ) प्रेतत्वनिवृत्याउत्तमलोकफल-
प्राप्त्यर्थंऔर्ध्वदेहिककर्मकर्तृत्वाधिकारसिद्ध्यर्थंवपनंकरिष्ये ॥ यानिकानिचपापानिब्रह्महत्या-
समानिच ॥ केशानाश्रित्यतिष्ठन्तितस्मात्केशान्वपाम्यहम् ॥ आत्मकायविशुद्ध्यर्थंपितॄणांतृ-
प्तिहेतवे ॥ वपनंच करिष्यामितीरेहंतवनर्मदे ॥ दक्षिणमुखउपविश्यवपनंकारयेत् ॥ ततःकर्तावपनानन्तरं
स्नात्वाऽहतेवाससीपरिधायमृतस्यशरीरंप्रक्षाल्याहतवस्त्रंपरीधाप्यचन्दनेनसर्वाङ्गंप्रोक्ष्यभस्मनात्रिपुण्ड्रंकृत्वापुष्पैरलंकृत्यमुखे-
६ पञ्चरत्नानिप्रक्षिपेत् ॥ ततःकर्तालौकिकाग्नौचरुंश्रपयित्वाषट्पिण्डान्दद्यात् ॥ अथ प्रयोगः ॥ कर्तादक्षिणाभिमुखउप-

---

१ ततःकर्ताअन्येचपुत्राःकक्षोपस्थवर्जंकेशश्मश्रुलोमनखानिवापयेयुः ॥ भर्तरिमृतेपत्न्याआचेदशमेह्निवायथाचारंवपनंकार्यम् ॥ कर्तृव्यतिरिक्तानांदशमेहनिवावपनं ॥ २ यत्रस्थानेभवेन्मृत्युस्तत्रश्राद्धंप्रकल्पयेत् ॥ मृतस्थानेशवोनामद्वारेपान्थःसउच्यते ॥ चत्वरे खेचरोनामविश्रामेभूतसंज्ञकः ॥ चितायांसाधकोनामदाहान्तेप्रेतउच्यते ॥ ३ मरणस्थानेएकोद्दिष्टविधिनाश्राद्धंसर्वंअमन्त्रकमप्रयोगरूपम् ॥

विश्य ॥ आचम्यतूष्णींप्राणानायम्य ॥ देशकालौस्मृत्वा अपसव्यंअमुकगोत्रस्य अ० प्रेतस्यप्रेतत्वविमुक्तयेउत्तमलोकावाप्तयेदाहादियोग्यतासिध्यर्थंएकोद्दिष्टविधिनामृतिस्थानेशवनाम्नाश्राद्धंकरिष्ये ॥ इमंलोकंपरित्यज्यगतोसिपरमांगतिम् ॥ मनसावायुरूपेणकुशेत्वांयोजयाम्यहम् ॥ कुशोसिब्रह्मपूतोसिब्रह्मणानिर्मितःपुरा ॥ त्वयिस्नातेससुस्नातोयस्यैतद्ग्रन्थिबन्धनम् इति ॥ मन्त्रेणविप्रार्थेकुशवटुंकुर्यात् ॥ अ०गोत्र अ०मृतपाद्यंपादावनेजनंपादप्रक्षालनंएषोर्घः ॥ इदमत्रगंधंपुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादप्रक्षालनं ॥ आचमनम् ॥ उपहारप्रोक्षणम् ॥ शेषोपचाराविधिवद्भवन्तु ॥ अद्यपूर्वो० तिथौ अ० गो० अ०प्रेतस्यमृतस्यमृतस्थानेतदधिष्ठातृदेवतातुष्ट्यर्थंशवनाम्नापिण्डप्रदानंकरिष्ये ॥ अवनेजनम्–अ० गोत्रस्य अ०मृ०पिण्डस्थानेदर्भावनेजनमिदन्ते ॥ दक्षिणाग्रंकुशास्तरणं ॥ पिण्डदानम्–अ०गोत्र अ०मृतशवनामाएषतेपिण्डोमयादीयतेअयन्ते ॥ पिण्डेप्रत्यवनेजनं ॥ पिण्डेऊर्णासूत्रंगंधंपुष्पंधूपंदीपंमाषान्नंनैवेद्यम् ॥ दास्यमान-

१ब्राह्मणाभावेएकंदर्भवटुमुपवेश्यसर्वंकुर्यात् ॥ १ आवाहनार्घ्यार्चनपात्रालंभनावगाहनानामभावः ॥ विकिरावनेजनगन्धाद्यर्चनाक्षय्योदकदानाशीःस्वधावाचनापातान्निषेकाभावः ॥

लोहनिष्क्रयींदक्षिणां ॥ अनेनपिण्डदानेनप्रेतस्यसद्गतिरुत्तमलोकप्राप्तिः ॥ पिण्डोद्धरणम् ॥ सव्यं ॥ इति ॥ अग्रेतनद्वारदेशीयपान्थपिण्डयोग्यतावाप्तिः ॥ अद्यपूर्वो० तिथौ अपसव्यं अ० गोत्रस्य अ० प्रे० द्वारदेशेगृहवास्त्वधिष्ठानदेवतातुष्ट्यर्थंपान्थनाम्नापिंडदानंक० ॥ पिंडस्थानेदर्भोवनेजनं– अ० गोत्र० अ० प्रे० द्वारदेशेपान्थनिमित्तंअवनेजनमिदन्ते ॥ पिंडदानम्–अ० गो० अ० प्रेत० द्वारदेशेपान्थनिमित्तंएषपिण्डोमयादीयते ॥ प्रत्यवनेजनादिकंसर्वंपूर्ववत् ॥ अनेनपिण्डदानेनप्रेतस्यसद्गतिरुत्तमलोकप्राप्तिः ॥ पिण्डोद्धरणम् ॥ सव्यं ॥ इति ॥ अग्रेतनचत्वरदेशीयखेचरपिण्डयो० ॥ अद्यपूर्वो० तिथौ अपसव्यं अ० गोत्रस्य अ० प्रेतस्यचत्वरेउपघातभूतकोटिपलायनार्थंखेचरनाम्नापिण्डदानं क० ॥ अवनेजनम्–अ० गोत्र० अ० प्रेत० चत्वरेखेचरनिमित्तंपिण्डस्थानेअवनेजनमिदन्ते ॥ पिण्डदानम्–अ० गोत्र अ० प्रेतचत्वरेखेचरनिमित्तंएषपिण्डोमयादीयतेअयन्ते ॥ प्रत्यवनेजनादिकंपूर्ववत् अनेनपिण्डदानेनप्रेतस्यसद्गतिरुत्तमलोकप्राप्तिः ॥ पिण्डोद्धरणं ॥ सव्यं ॥ इति ॥ अग्रेतनअर्धपथेविश्रान्तीभूतपिण्डयोग्यतावाप्तिः ॥ अथानन्तरंसजातीयाः ब्राह्मणाः अतरुणामुक्तकेशाःपुत्रादिभिःसह श्रीरामस्मरणपूर्वकंशवंप्रच्छादितमुखंप्राक्शिरसमूर्ध्वमुखंदाहदेशं प्रतिनयेयुः॥ ततोयवपिष्टघृतकुशतिलाक्षतशुद्धोदकजलपात्रं

मृन्मयस्थालिस्थलौकिकाग्निकुम्भादिदाहसामग्रींगृहीत्वाशवसहितंगृहान्निष्क्रम्यस्मशानंप्रतिगच्छेयुः ॥ शवाग्न्योरन्तरालेन-गन्तव्यं ॥ ततअपेताध्यायः (यमसूक्तं) जपंतोगच्छेयुः ॥ अथग्रामस्मशानयोर्मध्येअर्धपथेविश्रान्तौभूतनाम्नापिण्डदानम् ॥ अद्यपूर्वो०तिथौ अपसव्यं अ०गोत्रस्य अ०प्रेतस्यविश्रान्तौपिशाचराक्षसयक्षभूताधिपतितुष्ट्यर्थं भूतनाम्नापिण्डदानंक० ॥ अवनेजनम्–अ०गोत्र अ०प्रेतविश्रामेभूतसंज्ञिकपिण्डस्थानेअवने-जनमिदन्ते ॥ पिण्डदानम्–अ०गोत्र अ०प्रेतविश्रामेभूतनिमित्तंएषपिण्डोमयादीयतेअयन्ते ॥ शेषंपूर्ववत् ॥ (ततःपूर्ववच्छवंगृहीत्वास्मशानदेशंप्राप्यभूमौशनैःशवंदक्षिणशिरसंस्थापयेत् ॥) दाहदेशात्कण्टकादीनि-समूलान्यपास्यदाहस्थले इदमापःप्रवेतिमन्त्रेणप्रोक्षयेत् ॥ ॐइदमाप० ॥ ततः कर्तास्नानंकृत्वासर्वाणितीर्थानिमन-साध्यात्वाशवस्यआपोहिष्ठेतित्रिभिर्मंत्रैःस्नपनं ॥ ततःसमिद्धोअंजन्नितिमन्त्रेणयज्ञियकाष्ठैरन्यकाष्ठैर्वादहनपर्याप्तांचितिंकार-येत् ॥ ॐसमिद्धोऽअञ्जन्कृदरम्मतीनाङ्घृतमग्नेमधुमत्पिन्वमानः॥ वाजीवहन्वाजिनञ्जातवेदोदेवानांवक्षिप्रियमासधस्थम् ॥ १ ॥ अपेतोयन्त्वितिचितिंप्रोक्षयेत् ॥ ॐअपेतोयन्तुपणयोसुम्नादेवपीयवः ॥ अस्यलोकःसुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तंयमोददात्ववसानमस्मै ॥ १ ॥ इतिप्रोक्ष्यतदुपरिकुशतिलानास्तीर्यशवंदक्षिणशिरसंचितौनिदध्यात् ॥ ततःकर्ताप्रेतस्यमुखेनासिकारन्ध्रेचक्षुद्वये-

१ यदिगृहेमृतस्तर्हिब्राह्मणोनगरपश्चिमद्वारेणनेयः ॥ क्षत्रियउत्तरेणवैश्यःपूर्वेणशूद्रोदक्षिणेन ॥

श्रोत्रद्वयेषघृतेनाभ्यंजनंकुर्यात् ॥ हिरण्यशकलानिप्रक्षिपेत् ॥ तदभावेआज्यबिन्दूनि ॥ अथचितायांसाधकनाम्नापिण्डदानम् ॥

अद्यपूर्वो०तिथौ अ०गोत्रस्य अ०प्रेतस्यचितायांयमदूतानांतुष्ट्यर्थंशवस्यदक्षिणहस्तेसाधकनाम्नापिण्डदानंकरिष्ये ॥ अवनेजनम्—अ०गोत्र अ०प्रेतचितायांपिण्डस्थानेअवनेजनमिदन्ते ॥ पिण्डदानम्—अ०गोत्र अ० प्रेतचितायांसाधकनाम्नाएषपिण्डोमयादीयतेअयन्ते ॥ प्रत्यवनेजनादिकंपूर्ववत् ॥ अग्नेर्दाहयोग्यताकाप्तिः ॥ ततःपुरुषस्यशिरोदेशेस्त्रियाःपादाग्रेअग्न्यागारकरणं ॥ दक्षिणाभिमुखउपविश्यत्रिकोणाकारंस्थण्डिलंकृत्वापञ्चभूसंस्कारपूर्वकंक्रव्यादाग्निंप्रतिष्ठाप्य ॥ अग्निपूजनम्—हस्तेतिलान्गृहीत्वा—ॐक्रव्याद-

---

१ रात्रौदाहनिर्णयोदेवजातीये—रात्रौवारात्रिशेषेवाम्रियन्तेचेद्विजातयः ॥ दाहंकृत्वायथान्यायंद्वौपिण्डौनिर्वपेत्सुतः ॥ निगमः—सन्ध्यायांवोत्तररात्रौदाहःपाथेयकर्मच ॥ नवश्राद्धंचनोकुर्यात्कृतंनिष्फलतांव्रजेत् ॥ रात्रिमृतस्यरात्रावेवदाहः ॥ वपनंतुप्रातः ॥ तथाचस्मृतिसंग्रहे—रात्रौदग्ध्वातुपिण्डान्तंकृत्वावपनवर्जितम् ॥ वपनंनेष्यतेरात्रौश्वस्तनीवपनाक्रिया ॥ निगमवचस्तुदिनमृतस्यालस्यादिनारात्रौदाहनिषेधार्थं ॥ तथाचशवेरात्र्युषितंचेत्त्रीन्कृच्छ्रान्कृत्वादहेत्सुतइतिस्मृतिरत्नावल्याम् ॥ २ क्रव्यादमग्निमन्त्रेणस्थापयेद्विधिपूर्वकम् ॥ घृताभ्यक्तंमृतंतत्रजुहुयात्तदनन्तरम् ॥ वह्निंप्रज्वालयेत्पुत्रोभ्रातावागोत्रजोऽनघ ॥ पश्चाद्दाहादिकंकर्मपुत्रःकुर्यात्समाहितः ॥ दहेत्संस्कारविधिनाननग्नंचशवंदहेत् ॥ निःशेषस्तुनदग्धव्यः शेषंकिञ्चिज्जलेक्षिपेत् ॥ आदिपुराणे—निश्शेषस्तुनदग्धव्यःशेषंकिञ्चित्त्यजेत्ततः ॥ गच्छेत्प्रदक्षिणाःसप्तसमिद्भिःसप्तभिःसह ॥ देयाःप्रहाराःसप्तैवकुठारेणोल्मुकोपरि ॥ क्रव्यादायनमस्तुभ्यमितिजप्यंसमाहितैः ॥ नावेक्षितव्यःक्रव्यादोगन्तव्योचसतोनदी ॥ इति ॥

मग्निंप्रहिणोमिदूरंयमराज्यंगच्छतुरीप्रवाहः॥ इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ॥ १ ॥ क्रव्यादाग्नयेनमः सर्वोपचारार्थे तिलाक्षतान्समर्पयामि ॥ तत्रपुटेनाग्नौघृताहुतिः—ॐ अस्मात्वमधिजातोसित्वदयंजायताम्पुनः ॥ असौस्वर्गायलोकायस्वाहाइदमग्नयेनमम ॥ इत्येकाहुतिंजुहुयात् ॥ ततः तुलसीकाष्ठादिसहितबहुलतृणपूलिकांगृहीत्वाऽग्नौप्रज्वाल्यवैपरीत्येनप्रदक्षिणीकृत्य ॥ मुखेऽग्निदानम्—कृत्वासुदुष्करंकर्मजानतावाप्यजानता ॥ मृत्युकालवशंज्ञात्वानरं ( स्त्रियं ) पञ्चत्वमागतम् ॥ १ ॥ धर्माधर्मसमायुक्तंलोभमोहसमावृतम् ॥ दहेयंसर्वगात्राणिदिव्यान्लोकान्स-



१ असौस्थानेप्रेतनामनिर्देशःप्रथमान्तः ॥ स्त्रियामस्यमन्त्रस्यानूहः ॥ स्त्रियांतुअस्मात्वमितिमन्त्रोनप्रयोक्तव्यः, अनयैवाव्रतानारीदग्धव्यायाव्यवस्थिता ॥ अग्निप्रदानमन्त्रोस्यांनप्रयोज्यइतिस्थितिः ॥ इतिछंदोगपरिशिष्टवचनात् ॥ किन्तु—“कृत्वासुदुष्करंकर्म ” इतिपूर्ववराहपुराणोक्तोमन्त्रएवप्रयोज्यः, तस्यसर्वसाधारणत्वात् ॥ केचित्तुस्त्रीणामिवाग्निदानंस्यादथातोऽनुक्तमुच्यते ॥ इतिछन्दोगपरिशिष्टवचनेनव्रतघ्नःपुंसोऽपि अमन्त्रकमेवअग्निदानंकार्यं ॥ अतएवत्र०का०पा०गृह्ये “ तूर्णीमग्निमाग्निनेतरं ” इतितूष्णीमेवाग्निदानंविहितमित्याहुः ॥ वाराहमन्त्रस्तुसर्वत्रप्रयोज्यएव तस्यसर्वसाधारणत्वादितिसर्वसंमतम् ॥ कातीयश्रौतसूत्रेतु ( अ० २५।७।३८ ) “ अग्निभिरादीपयन्ति ” इत्यग्निदानानन्तरंआहुतिंजुहोतिपुत्रोभ्रातावाऽन्योब्राह्मणः ( अस्मात्वमितिमन्त्रेण ) घृताहुतिर्विहिता ॥ सकलपाठःपत्न्यामप्यनूहःप्राप्त्यर्थइतिचतत्रभाष्यकारेणोक्तम् ॥ तेनचस्त्रियामपिएतन्मन्त्रपाठोलभ्यते ॥ परंतुघृताहुतावेवपत्नीविषयेनत्वग्निदाने ॥ अग्निप्रदानमन्त्रोऽस्यांनप्रयोज्यइतिस्थितिरितिछन्दोगपरिशिष्टेनिषेधात् ॥

गच्छतु ॥ इतिमन्त्रद्वयंपठित्वामुखेऽग्निदानंकृत्वागाढंरोदनंकुर्यात् ॥ ततः ' अर्धदग्धेतथादेहेदद्यादाज्याहुतिंततः ' पूर्वोक्त–ॐअस्मात्वमधि० स्वाहा ॥ इतिमन्त्रेणघृताहुतिंमुखेदद्यात् ॥ दाहेजातेकिञ्चित्परिशेषणीयं ॥ निःशेषस्तुनदग्धव्यइतिवचनात् ॥ कुठारेणोल्मुकस्योपरिसप्तप्रहारदानम् ॥ दाहानन्तरंचितोपशमनार्थमुदकाञ्जलिः ॥ अथदाहाञ्जलिः–अद्यपूर्वो० तिथौअपसव्यं अ०गोत्रस्य अ० प्रेतस्यचितादाहोपशमनार्थंएषतिलतोयाञ्जलिर्मयादीयतेअयंते ॥ इतितिलमिश्रितजलेनत्रीनञ्जलीन्दद्यात् ॥ सव्यं ॥ इतिचिताशमनम् ॥ अग्रेतनप्रेतपिण्डयोग्यतावाप्तिः ॥ अथचितास्थानेप्रेतपिण्डदानम्—अद्यपूर्वो०तिथौ अपसव्यं अ०गोत्रस्य अ०प्रेतस्यदाहान्तेश्मशानभूमिनिवासिदेवानांतुष्ट्यर्थंप्रेतनाम्नापिण्डदानंकरिष्ये ॥ अवनेजनम्–अ०गोत्र०अ० प्रेत०प्रेतनामकपिण्डस्थानेअवनेजनमिदन्ते ॥ दक्षिणाग्रान्कुशानास्तीर्य ॥ पिण्डदानम्–अ०

---

१ अर्धदग्धेऽथवापूर्णेस्फोटयेत्तस्यमस्तकम् ॥ गृहस्थानांतुकाष्ठेनयतीनांश्रीफलेनच ॥ ( यतीनांश्रीफलेनपूर्वमेवभित्वागंगायांनिक्षिपेत् ) इत्यादिनाकाष्ठेनमस्तकभेदनंकृत्वा " अस्मात्वमितिमन्त्रेणाज्याहुतिंनिधायततोरोदनमुक्तंगारुडे ॥ २ दाहस्यानन्तरंतत्रचितांदुग्धेनसिञ्चयेत् ॥ भस्मविसर्जनंकृत्वादाहान्तेपिण्डमाचरेत् ॥ अस्थिसंचयनंकृत्वाकुंभमेकंतुकल्पयेत् ॥ ततःश्वार्कसटाःसप्तआदायात्रप्रदक्षिणा ॥ गच्छेत्प्रदक्षिणाःसप्तसमिद्भिःसप्तभिःसह ॥ देयाःप्रहाराःसप्तैवकुठारेणोल्मुकोपरि ॥ क्रव्यादायनमस्तुभ्यमितिजप्त्वासमाहितः ॥ पाषाणंतत्रचादायविपरीतकरेणच ॥ हत्वाकुंभंसकृद्घातेगन्तव्यंस्नानकारणात् ॥ दक्षिणाभिमुखंपूर्वंस्नानंदद्याज्जलं तथा ॥ अपसव्यंततःकृत्वाप्रेतस्यनामगोत्रकम् ॥ उच्चार्यांजलयोदेयावामांगुष्ठप्रहारतः ॥ पाषाणपृष्ठदेशेतुसर्वैर्देयंतिलोदकम् ॥ सगोत्रैःसमानोदकैः सपिण्डैश्चापितृबन्धुभिः ॥ एकैकेनचविप्रेणदेयास्त्वंजलयोदश ॥ स्नात्वान्तःकनिष्ठपूर्वंगच्छेयुस्तेगृहंप्रति ॥ इति ॥

गोत्रअ०प्रेतदाहान्तेप्रेतनामाएषपिण्डोमयादीयतेअर्यते ॥ पिण्डोपरिप्रत्यवनेजनं० ॥ शेषंपूर्वे- वत्पूजनंकृत्वा ॥ अनेनपिण्डदानेनप्रेतस्यप्रेतत्वनिवृत्तिः ॥ सव्यं ॥ सद्गतिरुत्तमलोकप्राप्तिः ॥ पिण्डोद्धरणम् ॥ पिण्डानांजलेप्रक्षेपः ॥ अग्रेऽस्थिसंचयनयोग्यतावाप्तिः ॥ इतिषट्पिण्डदानप्रयोगः ॥

अथघटस्फोटनविधिः ॥ हस्तेजलमादाय–अद्यपूर्वो०तिथौ अपसव्यं अ०गोत्रस्य अ०प्रेतस्य कालापकर्षेणाद्याहनिअस्थिसंचयनकर्मण्यधिकारार्थंप्राजापत्यत्रयंसूतकान्तेयेनकेनप्रत्याम्नाये- नाहमाचरिष्ये ॥ सव्यं ॥ तेनास्थिसंचयनकर्मण्यधिकारसिद्धिरस्तु ॥ ततोभस्मगुप्तास्थीनिघृतेना-

---

१ चितास्थानपिण्डस्य चितामध्येप्रक्षेपः ॥ शवहस्तस्थपिण्डस्यशवहस्तेनिधानं॥अन्यपिण्डानांजलेप्रक्षेपः ॥ २ ततश्चद्वितीयेतृतीये चतुर्थेवातद्दिनेपिकार्यं ॥ तत्रकेचित्द्वितीयेचतुर्थेकुर्वंतितत्रदेशाचारतोव्यवस्था ॥ सद्यःकरणपक्षेतुघटस्फोटनविधौनिर्दिष्टप्रकारेणकार्यम् ॥ तथाहसंवर्तकः–प्रथमेह्नितृतीयेवासप्तमेनवमेतथा ॥ अस्थिसंचयनंकार्यं तद्दिनेगोत्रजैःसह ॥ क्वचिद्द्वितीयेत्वस्थिसंचयइत्युक्तम् ॥ वैष्णवे- तुचतुर्थेदिवसेऽस्थिसंचयनंकुर्यात्तेषांचगङ्गाम्भसिप्रक्षेपः ॥ अतोऽन्यतमस्मिन्दिनेस्वगृह्योक्तविधिनास्थिसंचयनंकार्यम् ॥ ३ आचारप्राप्तं घटस्फोटनंयथा–सकुशतिलमुदकुंभमपसव्येनसव्यांसेकृत्वाश्मनापृष्ठभागेछिद्रंकारयित्वाप्रेतपादप्रदेशादारभ्य, आपोहिष्ठेतित्र्यृचजपन्प्राचीतपि- रितोऽप्रदक्षिणंत्रिःप्रदक्षिणीकृत्यशिरोदेशेऽश्मोपरिकुंभस्फोटनमितिकेशवभट्टपद्धतौ ॥ इदंपरिक्रमणंगोत्रजैःसहकार्यं ॥ विश्वनाथादयस्तु, " अग्न्युपशमनानन्तरंश्मशानभूमौजलपूरितघटस्थापनंकृत्वा हस्तेपाषाणखण्डंगृहीत्वा चितामूमिमप्रदक्षिणंकृत्वातूष्णींघटस्फोटनंकार्यम् ॥+

भ्युज्य ॥ अश्वत्थपत्रपुटेनिधायभूमिंखात्वातत्र "वाक्" इतिमन्त्रेणक्षिप्त्वापांसुभिःपूरयेत् ॥ तदुपरिअक्षतैःस्वस्तिकं विरच्यतदुपरिमलपूर्णकुंभंनिधायतत्रसतिलकुशदुग्धाक्षतान्निक्षिप्यचताभूमिमप्रदक्षिणंकृत्वापाषाणखण्डेन (कुठारेणवा) पृष्ठतःघटस्यस्फोटनंकार्यम् ॥ घटस्फोटनमित्याचारात् ॥ ततःसंस्कारकर्तासजातीयैःसहपश्चादनवलोकयन्स्नानार्थंनद्यादौ गच्छेदिति ॥ स्नात्वाचनद्यादौअपसव्यंदक्षिणाग्रान्कुशान्कृत्वाहस्तेजलंगृहीत्वा– **दक्षिणाभिमुखःपितृतीर्थेन अ० गोत्र अ० प्रेतएषदाहाञ्जलिस्तेप्रतिष्ठताम्** ॥ इतित्रीनञ्जलीन्भूमौपाषाणेवादद्यात् ॥ सव्यं ॥ ततःसजातीयाः

---

+पश्चाचानवलोकयन्तःकनिष्ठपूर्वाःस्नानार्थंनद्यादौगच्छेयुः ॥ गत्वाचोदकसमीपेपरिहितवस्त्रंप्रक्षाल्यतदेवपरिधायउत्तरदानादिकं पुरुषस्यालकंवा उदकंकरिष्यामइतिउदकंयाचन्तोमाचैवंकुरुध्वमिति (यदिशतवर्षोदर्वाक्प्रेतोभवतितदा) प्रतिवचनंलब्ध्वासपिण्डाः समानोदका यथावृद्धपूर्वंउदकंप्रविश्यस्नानंकृत्वैकवस्त्राआर्द्रशिखाः प्राचीनावीतिनःसव्यपाणेरनामिकयानद्यादिस्थंजलंतूष्णीमपनोद्यदक्षिणमुखानिमज्जंति ॥ अङ्गोद्वर्षणनकुर्यात् ॥ ततस्तीरमागत्याचम्यदक्षिणाग्रान्कुशान्कृत्वाऽश्मोपरिदाहाञ्जलिंरेकैकातिस्त्रोवानिषिञ्चेयुः ॥

१ दाहाञ्जलिस्तुसगोत्राअपिप्रदद्युः ॥ विषमदिनेसपिण्डाएकैकामञ्जलिंदद्युः पुत्राश्चप्रत्यहम् ॥ ब्रह्मचारीनदद्यात् पितृमातृगुर्वाचार्य मातामहमातामहीभ्यः सोऽपिदद्यात् ॥ शवंवाहकैश्चदेयाः ॥ अन्यसुहृदोदद्युर्नवा ॥ शूद्रब्राह्मणयोर्दक्षिणाभिमुखाः ॥ क्षत्रियायउदङ्मुखाः ॥ वैश्यायप्राङ्मुखाःदद्युः ॥ २ केचिद्देशीयाः कुठारोपरिक्षिप्त्वादिशतिदेशाचारस्तत्रप्रतिभाति ॥

संस्कारकर्तीचस्नात्वापश्चादनवलोकयन्तोऽधोमुखाःकनिष्ठानग्रेकृत्वासर्वेपंक्तिभूताएवगृहंप्रत्यागच्छेयुः ॥ गृहद्वारसमीपेस्थित्वानिम्बपत्राणिदन्तैर्विदश्याचम्याग्निंस्पृष्ट्वापादेनपाषाणमाक्रम्यगृहंप्रविशेयुर्गोदरोदनंचकुर्युः ॥ इति घटस्फोटनविधिः ॥ अथ दुग्धोदकदानविधिः ॥ तच्चसूर्यास्तसमयादूर्ध्वंरात्रौअन्तरिक्षेकार्यम् ॥ रात्रौत्रिकाष्टिकायांशरावादीवाएकस्मिन्नपक्वेमृन्मयेपात्रेउदकंद्वितीयेक्षीरंकृत्वाचत्वरेआकाशेकपालयोःवास्थापनम् ॥ तद्यथा—दक्षिणाभिमुखउपविश्य ॥ हस्तेजलमादाय—अद्यपूर्वो०तिथौ अपसव्यं अमुकगोत्रस्य अ०प्रेतस्यचितादाहोपशमनार्थंआप्या-

---

१ दिवामृतेऽस्तमयादूर्ध्वंग्रामप्रवेशःरात्रौमृतेसूर्योदयानन्तरमिति, तथाचशुद्धितत्त्वे—हारीतवचनात्ब्राह्मणानुज्ञयातदानिमेवप्रविशेयुः॥ अथपुत्रादीनांनियमः—ब्रह्मचारिणः ॥ अधःशायिनः ॥ अधउपवेशिनः ॥ परस्परंअसंस्पृष्टाः ॥ दानाध्ययनवर्जितामलिनादीनांअधोमुखाःसर्वभोगवर्जिताः ॥ अङ्गसंवाहनंकेशसंमार्जनंचाकुर्वन्तोनकिञ्चनकर्मकुर्युर्नवाकारयेयुः ॥ खड्गादिपाणयःशक्त्यात्रिरात्रमेकरात्रंवोपवसेयुः ॥ अशक्तौएकान्नव्रीहियवादिअक्षारलवणमाषान्नापूपपायसवर्जितमेकवारंक्रीत्वाकुतश्चनलब्ध्वावादिनात्ययेदिवैवाल्पमश्नीयुर्वारात्रौ ॥ भोजनकालेभोजनान्नमुष्टिमादायप्रेतस्यनामगोत्रेउच्चार्यप्रेतोद्देशेनभूमौक्षिपेत् ॥ त्रिरात्रपर्यन्तंसपिण्डानामेतेनियमाःपुत्रादीनांदशरात्रं ॥ महागुरुनिपातनेद्वादशरात्रमेतेनियमाः ॥ इच्छयाप्रथमदिनमारभ्यदशाहपर्यन्तंकुटुम्बैःसहभोजनम् ॥ प्रथमतृतीयपञ्चमसप्तमनवमदिनेषुसर्वेसपिण्डाःस्नानपूर्वकंप्रथमदिनवदुदकाञ्जलिदानंभोजनंचकुर्युः ॥ अञ्जलिदानंत्वावश्यकम् ॥ इच्छयाभोजनम् ॥ पुत्रादयस्तुआदशाहंदशरात्रंप्रेतोपकारार्थमहर्निशमखण्डदीपज्वालनंकुर्युः ॥ तत्रप्रेतोपकृतयेदशरात्रमखण्डितम् ॥ कुर्यात्प्रदीपंतैलेनवारिपात्रंचमार्तिकं ॥ इति दैवज्ञानीये॥

२ इदं दुग्धोदकदानमेकदिनंदिनत्रयंदशाहंवायावत्सूतकंसायंकालेप्रत्यहंकार्यम् ॥ ३ अपक्वमृन्मयंपात्रंक्षीरनीरप्रपूरितं ॥ काष्ठत्रयगुणैर्बद्धंधृत्वामन्त्रंपठेदिमम् ॥ श्मशानानलदग्धोसि० ॥ इति गारुडे ॥

यनार्थंचाकाशेमृन्मयपात्रेदुग्धोदकमहंकरिष्ये ॥ कुशानास्तीर्यतदुपरिमृन्मयपात्रद्वयंनिधायस्वदक्षिणभागेमृन्मयपात्रेजलंवामभागस्थमृन्मयपात्रेदुग्धंचपूरयेत् ॥ तत्रमन्त्रः—श्मशानानलदग्धोसिपरित्यक्तोसिबान्धवैः ॥ इदंनीरमिदंक्षीरमत्रस्नाहिपयःपिब ॥ १ ॥ अ०गोत्र अ०प्रेतअनेनजलेनस्नाहि ॥ अ०गोत्र अ० प्रे०इदंक्षीरंपिब ॥ अनेनदुग्धोदकदानेन अ०गोत्रस्य अ०प्रेतस्याप्यायनमस्तु ॥ सव्यं ॥ सूतकान्तेगवाह्निकमुपतिष्ठतु ॥ इतिदुग्धोदकदानविधिः ॥

**अथ पञ्चकमरणेदाहविधिः** ॥ हस्तेजलमादाय—अद्यपूर्वो० तिथौअपसव्यंअमुकगोत्रस्यअ०

---

१, ब्राह्मे—कुंभमीनस्थितेचन्द्रेमरणंयस्यजायते । नतस्योर्ध्वगतिर्दृष्टासंततौनशुभंभजेत् ॥ नतस्यदाहःकर्तव्योविनशास्त्वेजन्तुषु । पञ्चकानन्तरंकार्योसर्वत्रशुभमिच्छता ॥ पुत्राणांतस्यसन्तापोगतिस्तस्यनजायते । अथवातद्दिनेकार्योदाहस्तुविधिपूर्वकः ॥ तदाशवसमीपेतुकर्तव्याःपञ्चपुत्तलाः । दर्भमयाःशवमुखामन्त्रयेन्नामभिःक्रमात् ॥ धनिष्ठापञ्चकेजीवोमृतोयदिकथंचन । त्रिपुष्करेयाम्यभेवाकुलजान्मारयेध्रुवम् ॥ तत्रानिष्टविनाशार्थंविधानंसमुदीर्यते । दर्भाणांप्रतिमाःकार्यापञ्चोर्णासूत्रवेष्टिताः ॥ यवपिष्टेनानुलिप्तास्ताभिःसहशवंदहेत् । प्रेतवाहःप्रेतसखःप्रेतपः प्रेतभूमिपः ॥ प्रेतहन्तापञ्चमस्तुनामान्येतानिचक्रमात् । पञ्चमंपादयोर्मध्येतेभ्योदद्याद्घृताहुतिः । उदकंचततोदद्यान्नाभिस्तैःपृथक्पृथक् ॥ रात्रौविहायसिपय उदकंनामभिःक्रमात् । सूतकान्तेततःकुर्याद्विधानंपञ्चकस्यतु । अन्यथाकुगतिंयातिप्रेतपुत्रेषुचाशुभम् ॥ तथाचगारुडे—आदौकृत्वाधनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम् । रेवत्यन्तंसदापुष्यमशुभंसर्वदाभवेत् ॥ बालस्यनाथवृद्धस्यपञ्चकेतुमृतस्यच । विधानंयोनकुर्वीततस्यविघ्नंप्रजायते ॥ दाहस्तत्रनकर्तव्योविषादःसर्वजातिषु । नजलंदीयतेतेषुस्वशुभंसर्वदाभवेत् ॥ पञ्चकानन्तरंकार्यंप्रेतदाहादिकंखलु । अथवातद्दिनेकार्योदाहस्तुविधिपूर्वकः ॥ सूतकान्तेततःपुत्रःकुर्याच्छान्तिकपौष्टिकम् । ( तत्प्रकारश्चाग्रेवक्ष्यते )

प्रेतस्यधनिष्ठादिपञ्चनक्षत्रमध्येमरणजनितवंशानिष्टनिवृत्तयेपञ्चपुत्तलविधिंकरिष्ये ॥ ततोदर्भमयान् पञ्चपुत्तलान्कृत्वाऽऊर्णासूत्रेणवेष्टयित्वायवपिष्टैरनुलिप्य ॐ वसुभ्योनमः ॥ ॐ वरुणायनमः ॥ ॐ अजैकपदेनमः ॥ ॐ अहिर्बुध्न्यायनमः ॥ ॐ पूष्णेनमः ॥ ५ ॥ इति नक्षत्रस्वामिनाममन्त्रैरभिमन्त्र्यगंधपुष्पैः संपूज्यदाहसमयेशवोपरियथाङ्गंन्यसेत् ॥ प्रथमंशिरसि ॥ द्वितीयंदक्षिणकुक्षौ ॥ तृतीयंवामकुक्षौ ॥ चतुर्थंनाभौ ॥ पंचमंपादयोर्मध्ये ॥ तदुपरितेभ्योनाममन्त्रैर्घृताहुतीर्दत्वा—ॐ प्रेतवाहायस्वाहा ॥ शिरसि ॥ ॐ प्रेतसखायस्वाहा दक्षिणकुक्षौ ॥ ॐ प्रेतपायस्वाहा वामकुक्षौ ॥ ॐ प्रेतभूमिपायस्वाहा नाभौ ॥ ॐ प्रेतहर्त्रेस्वाहा पादयोर्मध्ये ॥ ५ ॥ इतिपञ्चाहुतयोहुत्वा ॥ उदकधारांदत्वाविधिनाशवंदहेत् ॥

इति पञ्चकमरणेदाहविधिः ॥

अथ त्रिपुष्करयोगमध्येमरणेदाहविधिः ॥ हस्तेजलमादाय—अद्यपूर्वो० तिथौ० अपसव्यं अ०

१ रविभौममंदवाराणां, द्वितीयासप्तमीद्वादशीनां, कृत्तिकापुनर्वसूत्तराफाल्गुन्युत्तराषाढाविशाखापूर्वभाद्रपद्राख्यत्रिपादनक्षत्राणांयोगः त्रिपुष्करः ॥ तत्रकैश्चित्रविस्थानेगुरुवारउक्तः ॥ एतेष्वेवतिथिवारेषुमृगचित्राधनिष्ठायोगेद्विपुष्करः ॥ २ अपरार्के–त्रिपादक्षमृतेतद्वद्धिरण्यशकलमुखे ॥ यस्यपिष्टमयंकुर्यात्पुरुषत्रितयंततः ॥ होमंप्रतिमुखंकुर्यात्तथावहवपामिति ॥ सुवर्णस्याप्यभावेतुआज्यंज्ञेयंविचक्षणैः ॥ इति ॥

गोत्रस्य अ० प्रेतस्यत्रिपादनक्षत्रेदुर्मरणजनितदोषोपशान्त्यर्थंत्रिपादशान्तिंकरिष्ये ततःपिष्टमयी-
स्तिस्रःप्रतिमाःकृत्वा मृतितिथ्यधिष्ठातृदेवतायैनमः ॥१॥ मृतिवाराधीशायनमः ॥२॥ मृतित्रिपा-
न्नक्षत्राधिपतयेनमः ॥ ३ ॥ इतिनामभिःतत्तदावाहनपूर्वकंगन्धादिनासम्पूज्य ॥ मृतस्याशिरसि—प्रथमां ॥
द्वितीयां नेत्रयोः ॥ तृतीयां वामकुक्षौनिधायमृतस्यमुखेहिरण्यशकलंघृतंवाप्रक्षिप्यवहवपामितिमन्त्रेणतिस्रोघृताहुत-
योदद्यात् ॥ तत्रमन्त्रः—ॐ वहवपाञ्जातवेदःपितृभ्योयत्रैनान्वेत्थनिहितान्पराके ॥ मेदसःकुल्याऽ-
उपतान्स्रवन्तुसत्याऽएषामाशिषःसन्नमन्ताꣳस्वाहा ॥१॥ इतिमन्त्रेणनाममन्त्रैर्वाहुत्वोदकधारांदत्वाशवं-
दहेत् ॥ इति त्रिपुष्करयोगमध्येमरणेदाहविधिः ॥

अथ कुष्ठीमरणेदाहविधिः ॥ हस्तेजलमादाय—अद्यपूर्वो०तिथौ अमुकस्यकुष्ठरोगावस्थायां-

---

षडब्दव्रत-
१ मृतस्यकुष्ठिनोदेहंनिखनेद्गोष्ठभूमिषु ॥ वासरत्रितयंपश्चादुद्धृत्यान्यत्रतंनयेत् ॥ गंगाजलेनसंस्नाप्यननिक्षेपोविधीयते ॥
पूर्णेनविधिनासंस्कृतंदहेत् ॥ ततोऽस्थिसंचयंतस्यगंगायांप्रक्षिपेत्सुधीः ॥ मासिमासिततःकुर्यान्मासश्राद्धानिपूर्ववत् ॥ संकल्पविधिनाकेचित्प्रव-
दन्तिमनीषिणः ॥ इत्येतत्कुष्ठिनोह्यूर्ध्वंकथितंशास्त्रकोविदैः ॥ स्मृतिविद्भिरनूचानैर्यमाद्यैःपूतविग्रहैरिति ॥ निर्णयसिन्धावपितथैवोक्तम्—
कुष्ठिमरणेतुशवंदिनत्रयंगोष्ठादिभूमिषुनिखायपश्चात्ततउद्धृत्यसातिसंभवेषडब्दप्रायश्चित्तं ( अशीत्युत्तरशतधेनुः १८० तदसंभवेनवतिधेनुः ९० )
दत्वायथाविधिदहेत् ॥ ततोऽस्थिसंचयंगंगायांप्रक्षिपेत् ॥ अनन्तरंसर्वमेवकृत्यमाचरेदिति ॥ श्राद्धरत्नावल्यांतु—" मृतस्यकुष्ठिनोदेहंनिखनेद्*

*गोष्ठभूमिषु" इति यमवचनस्यदेशाचारतोविरुद्धत्वमुक्त्वाशृणुकुष्ठगणंविप्रउत्तरोत्तरतोगुरुम्। विचर्चिकातुदुश्चर्माचञ्चरीयस्तृतीयकः ॥ विकर्चुर्व्रणताम्रौचकृष्णश्वेतस्तथाष्टकम्। इतिकुष्ठगणंप्रदर्श्य, मृतेचप्रापयेत्तीर्थमथवातरुमूलकम्। नपिण्डंनोदकंकुर्या नचदाहक्रियांचरेत् ॥ इतिभविष्योक्तप्रकारेणशवंतीर्थेकिञ्चित्कालंसंस्थाप्यततोजलेप्रक्षिप्यपुत्तलविधिंकृत्वाकर्मकुर्यात्" इत्युक्तम्। शुद्धितत्त्वेतु (२८६ पृ०) भविष्यपुराणीयमध्यतन्त्रषष्ठाध्याये। 'शृणुकुष्ठगणंविप्र' इत्यादि नचदाहक्रियांचरेत्' इत्यन्तंश्राद्धरत्नावल्युक्तंनिर्दिश्यषण्मासीयस्त्रिमासीयोमृतः कुष्ठीकदाचन। यदिस्नेहाचरेद्दाहंयतिचान्द्रायणंचरेत् ॥ यतिचान्द्रायणाशक्तौधेनुचतुष्टयंदेयं। अतिपातकशेषफलकत्वादेवमुक्तम्। यथाहविष्णुः—"अथ नरकानुभूतदुःखानांमानुष्येलक्षणानिभवन्ति, कुष्ठ्यतिपातकी, ब्रह्महायक्ष्मी, सुरापःश्यावदन्तकः, सुवर्णहारीकुनखी, गुरुतल्पगोदुश्चर्मा, इत्यादि। कुष्ठिनोदाहेभविष्योक्तमिदंयतिचान्द्रायणमकृतप्रायश्चित्तानांकुष्ठ्यादीनांदाहेबोध्यम्। अन्यथा "कुनखीश्यावदन्तश्चद्वादशरात्रंकृच्छ्रंचरित्वोध्धरेयातांतद्दन्तनखौ" इतिविष्णूक्तंद्वादशरात्रंपराकरूपंव्रतंविफलंस्यात्। तत्रबहूनामेकधर्माणामितिवचनादाकांक्षितत्वाच्चकुनखिश्यावदन्तोक्तंपराकव्रतंकुष्ठ्यादीनामपिबोध्यं। महापातकादतिपातकस्यगुरुत्वात्तच्छेषेऽपिप्रायश्चित्तंद्विगुणं (पराकद्वयात्मकं)। (पराकश्चप्राजापत्यकृच्छ्रपञ्चकतुल्यइतिपञ्चधेनवःप्रत्याम्नायः। तस्यतत्तुल्यत्वंच "षड्भिर्वर्षैः कृच्छ्रचारीब्रह्महत्यांव्यपोहति ॥ मासिमासिपराकेणत्रिभिर्वर्षैर्व्यपोहति ॥ इत्यङ्गिरोवचनेन (प्रा०तत्त्वे ५४६) सिध्यति ॥ वर्षत्रयसाध्य (३६) पराकानांवर्षषट्कसाध्य (१८०) प्राजापत्यतुल्यकत्वात्तेषाञ्चतत्पञ्चमांशत्वात्। एवंच—ऊनैकादशवर्षस्यपञ्चवर्षाधिकस्यच। चरेद्गुरुःसुहृद्वापिप्रायश्चित्तंविशुद्धये ॥ इत्यङ्गिरोवचनेन—रोगीवृद्धस्तुपौगण्डःकुर्वन्त्यन्यैर्व्रतंसदा। इतिब्रह्मपुराणीयवचनेनचअन्यपापक्षयार्थमन्यकर्तृप्रायश्चित्तदर्शनात अत्रापितुल्यन्यायतयास्वयमकृतप्रायश्चितस्यमृतस्यकुष्ठ्यादेः पुत्रादिनाप्रायश्चित्तंकृत्वादाहादिकंकार्यमिति ॥ कुष्ठीमरणविधिः ॥

ष्क्रयीभूतंप्रतिकृच्छ्रंयथासंभवद्रव्यदानेनाहमाचरिष्ये ॥ एतत्संकल्पितप्रायश्चित्तद्रव्यंसूतकान्तेब्राह्मणेभ्योदातुमहमुत्सृजे ॥ इतिसंकल्प्योक्तविधिनादाहादिकंकुर्यात् इतिकुष्ठीमरणेदाहविधिः ॥

अथ रजस्वलामरणेदाहविधिः हस्तेजलमादाय—अद्यपूर्वो०तिथौअपसव्यं अमुकगोत्रायाअमुकनाम्न्यारजस्वलावस्थामरणजनितप्रत्यवायपरिहारार्थमौर्ध्वदेहिककर्माधिकारार्थंचचान्द्रायणत्रयप्रायश्चित्तपूर्वकंकुंभोदकेनशतकृत्वःस्नानानिकारयिष्ये॥ संकल्पितचान्द्रायणत्रयप्रायश्चित्तं "पञ्चदशप्राजापत्यरूपं" सूतकान्तेयेनकेनप्रत्याम्नायेनाहमाचरिष्ये ॥इति संकल्प्ययवपिष्टेनशवमनुलिप्यस्वयंस्नात्वाकुंभेभस्ममृत्तिकागोमयकुशोदकपञ्चगव्यादीनिप्रक्षिप्यशुद्धोदकैश्चापूर्य "आपोहिष्ठेतितिसृभिः ॥३॥

---

१ रजस्वलातुयानारीयारागांसूतकीमृता। शरेन्दुप्रमितान्पूर्वंप्राजापत्यान्चरेत्तया ॥ स्नापयेत्पंचगव्येनततश्चविधिनादहेत् ॥ अन्तरिक्षेमृतायाञ्चवह्नावप्सुप्रमादतः ॥ उदक्यासूतिकानारीचरेच्चान्द्रायणत्रयम् ॥ तथाचमिताक्षरायाम्—पञ्चभिःस्नापयित्वातुगव्यैःप्रेतांरजस्वलाम्॥ वस्त्रान्तरवृतांकृत्वादाहयेद्विधिपूर्वकम् ॥ वृद्धशातातपः—रजस्वलायाःप्रेतायाःसंस्कारादीनिनाचरेत् ॥ ऊर्ध्वंत्रिरात्रात्स्नातायांशवधर्मेणदाहयेत् ॥ ततःप्रक्षाल्यकाष्ठवत्दग्ध्वात्र्यहोर्ध्वंमन्त्रवद्दहेत् ॥ अत्रदेशकालानुसारेणव्यवस्था ॥ रजस्वलायाःसूतिकायावाविदेशेमरणेतत्रप्रायश्चित्तस्नानादिकंविनैवदाहेकृतेतदस्थ्नांप्रायश्चित्तपूर्विकांपञ्चगव्यस्नापनादिभिःशुद्धिंविधायकृष्णाजिनेनिधानादियथोक्तदाहःकार्यइति ॥ २ पञ्चदशनववा धेनवः प्रत्याम्नायः ।

ॐइदमापः० ॥४॥ पुनन्तुमापितरः० ॥५॥ अग्नऽआयूᳬषि० ॥६॥ पुनन्तुमादेवजनाः ॥७॥ पवित्रेणपुनीहि० ॥८॥ यत्तेपवित्रमर्चिः० ॥९॥ पवमानासोऽअद्य० ॥१०॥ उभाभ्यान्देवसवितः० ॥११॥ वैश्वदेवीपुनती० ॥ १२ ॥ चित्पतिर्म्मा० ॥ १३ ॥ एतैर्मन्त्रैरभिमन्त्र्यतज्जलंप्रतिघटंनिक्षिप्यअन्यैर्वारुणमन्त्रैः ( इमम्मेइत्यादि ) स्तांशतकृत्वःस्नापयित्वापूर्ववस्त्रंपरित्यज्यान्यवस्त्रेणसंवेष्ट्यशवंदहेत् ॥ यद्वारजस्वलांसूतिकांचमलंप्रक्षाल्यस्नापयित्वाकाष्ठवद्दग्ध्वातदस्थीनिउक्तविधिनादहेत् ॥ इति रजस्वलामरणविधिः ॥

अथ सूतिकामरणेदाहविधिः ॥ हस्तेजलमादाय—अद्यपूर्वो०तिथौअपसव्यंअ०गोत्रायाःअ०नाम्न्याःसूतिकावस्थामरणजनितप्रत्यवायपरिहारार्थमौर्ध्वदेहिककर्माधिकारार्थंचकृच्छ्र

१ तत्रादौसूतिकामरणेदिनभेदेनविशेषप्रायश्चित्तम्—सूतिकातुयदासाध्वीविस्नातामरणंगता ॥ त्रिवर्षपूर्तिपर्यंतंशुद्धयेत्कृच्छ्रेणसर्वदा ॥ एतत्प्रथमत्र्यहविषयंत्र्यब्दप्रायश्चित्तं ( नवतिधेनवः ९० ) सूतिकातुयदानारीरजसाचपरिप्लुता ॥ म्रियतेचेत्तुसानारीद्विवर्षंकृच्छ्रमाचरेत् ॥ द्वितीयत्र्यहविषयम्—द्व्यब्दंप्रा० ( षष्ठिधेनवः ६० ) सूतिकातुयदासाध्वीविस्नातामरणंगता ॥ त्रिषण्णवदिनादर्वागेकाब्देनविशुद्ध्यति ॥ तृतीयत्र्यहविषयम्—एकाब्दंप्रा० ( त्रिंशद्धेनवः ३० ) ऊर्ध्वंतु—सूतिकातुयदानारीप्राणांश्चैवपरित्यजेत् ॥ मासमेकावधियावत्त्रिभिःकृच्छ्रैर्विशुद्ध्यति ॥ नवाहानन्तरंतुमासपर्यंतंधेनुत्रयं ) एवमूर्ध्वोच्छिष्टाधरोच्छिष्टमरणेखट्वादिमरणेशवस्य अस्पृश्यस्नानादिनास्पर्शेचधेनुत्रयं ॥ २ सूतिकायांमृतायांतुकथंकुर्वंतियाज्ञिकाः ॥ कुंभेसलिलमादायपंचगव्यंक्षिपेत्ततः ॥ पुण्यर्ग्भिरभिमन्त्र्यापोवाचाशुद्धिंलभेत्ततः ॥ तेनैवस्नापयि-

त्रयप्रायश्चित्तपूर्वकंशूर्पेणशतकृत्वःस्नानानिकारयिष्ये ॥ संकल्पितकृच्छ्रत्रयप्रायश्चित्तंसूतकान्ते अहमाचरिष्ये ॥ इति संकल्प्ययवपिष्टेनशवमनुलिप्यस्वयंस्नात्वाविष्णुसूक्तेनशतशूर्पस्नानानिकारयेत् ॥ ततःकुंभेस- लिलमादायभस्ममृत्तिकागोमयकुशोदकपञ्चगव्यादीनिप्रक्षिप्य आपोहिष्ठेतितिसृभिः ॥ इदमापः० ॥ पुनन्तु- मेति नवभिर्ऋग्भिरभिमन्त्र्यानेनकुंभोदकेनपञ्चवारंशूर्पोदकेनस्नापयेत् ॥(शूर्पस्नानंततःपश्चात्कार्यंपञ्चप्रमाणत इतिवचनात्) तद्यथा देवस्यत्वेतिमूर्ध्नि—ॐदेवस्यत्वा० ॥ इमम्मेइतिदक्षिणकुक्षौ—ॐइमम्मे०॥ अग्नेनयसुपथेतिवामकुक्षौ—ॐ अग्नेनयसुपथाराये॒ऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठा- न्तेनमऽउक्तिंविधेम ॥सहस्रशीर्षेतिचरणयोः—ॐसहस्रशीर्षा० चत्वारिशृंगेतिनाभौ—ॐचत्वारिशृङ्गा० ॥ इतिस्नापयित्वानववस्त्रेणवेष्टयित्वाविधिनादहेत् ॥ इति सूतिकामरणेदाहविधिः ॥

---

×यित्वातुदाहंकुर्याद्यथाविधि ॥ अब्लिंगाभिर्मंत्रिताभिर्वामदेव्याभिरेवच ॥ अन्यैश्चवारुणैर्मंत्रैःसंस्नाप्यविधिनादहेत् ॥ गृह्यकारिकायाम्— सूतिकामरणेप्राप्तेसर्वौषध्यनुलेपनम् ॥ असूतकीतुसंस्पृश्यशूर्पाणांतुशतंक्षिपेत् ॥ सूतिकामरणेयुगमपक्षेदाहविधिः—सूतिकायांमृतायांकुंभेउदकं कृत्वापञ्चगव्यंप्रक्षिप्य " आपोहिष्ठाइदमाप." इत्यादिपुण्याभिरभिमन्त्र्यपञ्चदशप्राजापत्यान्कृत्वातेनैवकुंभोदकेनशतकृत्वस्तांस्नापयित्वावस्त्रान्तरे णसर्वतोवेष्टयित्वादाहःकार्यः ॥ शूर्पैविकल्पेन ॥ रजस्वलामरणेप्येवम् ॥ उदक्यासूतिकावायंप्रेतंस्पृशतितस्याप्येषएवविधिः ॥

अथगर्भिणीमरणेदाहविधिः ॥ हस्तेजलमादाय—अद्यपूर्वो०तिथौअपसव्यंअ०गोत्रायाअ०
नाम्न्यागर्भिण्यवस्थायांमरणजनितप्रत्यवायपरिहारार्थमौर्ध्वदेहिककर्माधिकारार्थंचत्रयस्त्रिंश-



१ मदनरत्नेशौनकः—गर्भिण्युदक्यासंस्कारंशिशुसंस्कारमेवच ॥ प्रवक्ष्यामिसमासेनशौनकोऽहंद्विजन्मनाम् ॥ गर्भिणीमरणेप्राप्तेगो-
मूत्रेणजलैःसहः । आपोहिष्ठादिभिर्मंत्रैःप्रोक्ष्यभर्तासमास्थितः ॥ प्रेतंश्मशानंनीत्वाथोल्लिख्यसव्योदरंततः । पुत्रमादायजीवंश्चेत्स्तनंदत्त्वासुतायवै ।
यस्तेस्तनःशशयइत्यृचाग्रामेनिधायच । उदरंचाव्रणंकुर्यात्पृषदाज्येनपूरयेत् । मृद्भस्मकुशगोमूत्रैरापोहिष्ठादिभिस्त्रिभिः । स्नाप्यचाच्छाद्यवासो-
भिःशवधर्मेणदाहयेत् । गृह्यकारिकायाम्—यदागर्भवतीनारीसशल्यासंस्थिताभवेत् । कुक्षिंभित्वाततः शल्यंनिर्हरेद्यदिजीवति । प्रमीतंवि-
खनेत्तंतुप्रायश्चित्तमतःपरम् । सात्रयस्त्रिंशताकृच्छ्रैःशुद्ध्यतेशल्यदोषतः । सगर्भदहनेतस्यागर्भजंवधपातकम् । प्रायश्चित्तंचरित्वातुशुद्ध्यन्ति-
पापकारिणः । दग्ध्वातुगर्भसंयुक्तांत्रिरब्दंकृच्छ्रमाचरेत् । षडशीतिमतेतुगर्भिण्यांमृतायांदक्षिणशिरसंनिधायतस्यानाभिरन्ध्रात्सव्यमुदरं ( वाम-
भागं ) चतुरंगुलं “ हिरण्यगर्भःसमवर्तता ” इतिमन्त्रेणछेदयेत् । अप्राणोगर्भश्चेत्तंप्रक्षाल्यनिखनेत् । सयदिजीवन्—जीवत्वंममपुत्रक,
इत्युक्त्वाक्षेत्रियैत्वेतिपञ्चभिःस्नापयित्वाहिरण्यमन्तर्धायभूमौनिधायव्याहृतिभिरभिमन्त्र्ययस्तेस्तनःशशय ‘ इतिमन्त्रेणस्तनंपाययित्वाशिशुंग्रामं- ॥३१॥
प्रापयेत् । गर्भच्छेदस्थलेशतायुधायेतिपञ्चाहुतिर्हुत्वाप्राणायस्वाहापूष्णे, इत्यनुवाकाभ्यांव्याहृत्याचाज्यंहुत्वाभिन्नमुदरंसूत्रेणसंग्रथ्यघृतेनानुलि-
प्यब्राह्मणायतिलान्गांभूमींसुवर्णंचदत्त्वायथोक्तेनकल्पेनदहेत् । अत्राहुतिविशेषस्तुबौधायनेनोक्तः ॥२ गर्भिण्याःपापनिवृत्तयेत्रयस्त्रिंशत् (३३)
धेनवःपञ्चमादारभ्यषण्मासाभ्यन्तरे, सगर्भादाहेनवति ( ९० ) धेनवोदेयाः ।

कृच्छ्रप्रायश्चित्तंसूतकान्तेयेनकेनप्रत्याम्नायेनाहमाचरिष्ये ॥ पुनर्जलंगृहीत्वा—दाहादियोग्यतासिद्ध्यर्थंगोभूसुवर्णादियथाशक्तिसूतकान्तेऽहंदास्ये ॥ तेनदाहकर्मणितथाचऔर्ध्वदेहिककर्मण्यधिकारसिद्धिरस्तु ॥ इतिसंकल्प्यतांमृद्भस्मकुशगोमूत्रैःशुद्धोदकैश्चापोहिष्ठादिभिर्मन्त्रैस्नापयित्वावासोभिश्चाच्छाद्यशवधर्मेणदहेदिति ॥ षण्मासाभ्यन्तरेसगर्भादाहेतु—सगर्भदाहजनितप्रत्यवायपरिहारार्थंत्र्यब्दंप्रायश्चित्तमहमाचरिष्ये ॥ इतिसंकल्प्यपूर्वोक्तविधिनातांदहेत् ॥[1] इतिगर्भिणीमरणेदाहविधिः ॥

अथधर्मसिंध्वनुसारेणब्रह्मचारिमरणविधिः[2] ॥ कर्तादेशकालौस्मृत्वा—अस्यामुकब्रह्मचारिणःब्रह्मचर्यावस्थायांमरणजन्यसकलपापक्षयार्थंत्र्यब्दप्रायश्चित्तंप्रतिकृच्छ्रंतत्प्रत्याम्नायगोनिष्क्रयीभूतयथासंभवद्रव्यदानेनाहमाचरिष्येतिसंकल्प्य ॥ एतत्संकल्पितप्रायश्चित्तद्रव्यंब्राह्मणेभ्यो-

---

१ गर्भिणीमरणंप्राप्ताषण्मासाभ्यन्तरेयदि । सहैवदहनंकुर्याद्गर्भच्छेदंनकारयेत् ॥

२ तत्रविधानमालायांविशेषः—येषांकुलेब्रह्मचारीनिधनंप्राप्नुयाद्यदि । तत्कुलंक्षयमाप्नोतिसोपिदुर्गतिमाप्नुयात् । ग्रहत्वंप्राप्नुयाब्दोषिद्रुमेऽनवरतंवसेत् । तस्यापिस्वस्यवंशस्यगतिमिच्छन्महीयसीं । विधानंचविधायाशुऔर्ध्वदेहिकमाचरेत् । मृतस्यम्रियमाणस्यषडब्दंव्रतमाचरेत् । त्रिंशद्वयोब्रह्मचारिभ्योदद्यात्कौपीनकानिच । दद्यादन्नंविधानेनदद्यात्कृष्णाजिनानिच । पादुकाछत्रमाल्यादिगोपीचंदनमेवच । मणिप्रवालमालाश्चब्रह्मसूत्राणिचार्पयेत् । मन्त्रैस्तत्तल्लिंगकैश्चब्रह्मसायुज्यसिद्धये । अभावेवर्णिनांपूज्यागृहस्थाःसाधवःशुभाः । एवंकृतेविधानेचविघ्नस्तस्यनजायते ॥

दातुमहमुत्सृजे ॥ पुनर्देशकालौ०अमुकगोत्रस्यामुकब्रह्मचारिणःमृतस्यव्रतविसर्गंकरिष्ये ॥ तदङ्गंहिरण्येननान्दीश्राद्धंकरिष्यइतिसंकल्प्य नान्दीश्राद्धविधिनानान्दीश्राद्धंकृत्वा ॥ अद्यव्रतविसर्गांगहोमंकर्तुमस्मिंस्थण्डिलेपञ्चभूसंस्कारपूर्वकमग्निस्थापनंकरिष्ये ॥ पञ्चभूसंस्कारपूर्वकमग्निंस्थाप्य ॥ पूर्वेणब्रह्मणोगमनमित्यादिसोममाज्येनेत्यन्तमत्रप्रधानमग्निंवायुंसूर्यंप्रजापतिंच०व्यस्तसमस्तव्याहृत्याएकैकयाज्याहुत्या, अग्निंप्रजापतिमग्निंव्रतानुष्ठानसंपादकंविश्वान्देवान्प्रत्येकमेकैकयाज्याहुत्या, शेषेणस्विष्टकृतमित्यादिसोमायस्वाहेत्यंतंकृत्वा॥आज्येन-
ॐभूःस्वाहाइदमग्नयेनमम ॥ ॐभुवःस्वाहाइदंवायवे० ॥ ॐस्वःस्वाहाइदंसूर्याय० ॥ भूर्भुवःस्वःस्वाहाइदंप्रजापतयेनमम ॥ ४ ॥ ॐअग्नयेस्वाहाइदम० ॥ ॐप्रजापतयेस्वाहाइदंप्र०॥ ॐअग्नयेव्रतानुष्ठानफलसंपादकायस्वाहाइदमग्नयेव्रतानुष्ठानफलसंपादकायनमम ॥ ॐविश्वेभ्योदेवेभ्यःस्वाहाइदंवि० ॥ इत्याज्याहुतीर्हुत्वा॥स्विष्टकृदादिप्रणीताविमोकान्तंकृत्वापुनर्देशकालौ० अमुकब्रह्मचारिणऔर्ध्वदैहिकाद्यधिकारार्थमर्कविवाहंकरिष्ये ॥ तदङ्गतयाहिरण्येननान्दीश्राद्धंकरिष्ये ॥ उक्तविधिनानान्दीश्राद्धंकृत्वा ॥ अर्कसमीपेनीत्वा ॥ अर्कशाखांवागृहीत्वार्कंब्रह्मचारिणौहरिद्रयानुलिप्य ॥ पीतवस्त्रेणसंवेष्ट्यवस्त्रयुग्मेनाच्छाद्य ॥ अद्य०अस्यब्रह्मचारिणः, अर्कविवाहांगहोमंकर्तुमस्मिन्स्थंडिलेपञ्चभूसं-

स्कारपूर्वकमग्निस्थापनंकरिष्ये ॥ अग्निंसंस्थाप्य ॥ पूर्वेणब्रह्मणोगमनमित्यादिसोममाज्येनेत्यंतमत्रप्रधानमग्निंबृहस्पतिंविवाहयोजकंकामंचप्रत्येकमेकैकयाज्याहुत्या ॥ अग्निवायुंसूर्यंप्रजापतिंचव्यस्तसमस्तव्याहृत्या, एकैकयाज्याहुत्या ॥ शेषेणस्विष्टकृतमित्यादिसोमायस्वाहेत्यंतंकृत्वाआज्येन ॥ ॐअग्नयेस्वाहाइदम० ॥ ॐबृहस्पतयेस्वाहाइदंबृ० ॥ ॐविवाहविधियोजकायस्वाहाइदंवि० ॐअस्मैत्वाकामकामायवयंसंम्राड्यजामहेतमस्मभ्यंकामंदत्वाथेदंघृतंकामायस्वाहाइदंकामाय० ॥ ॐभूःस्वाहाइदम० ॥ ॐभुवःस्वाहाइदंवा० ॥ ॐस्वःस्वाहाइदंसू० ॥ ॐभूर्भुवःस्वःस्वाहाइदंप्रजापतये० ॥ स्विष्टकृदादिप्रणीताविमोकान्तंकृत्वाशाखापक्षेशाखांब्रह्मचारिणंचतुषाग्निनादाहोक्तविधिनादहेत् ॥ सूतकान्तेत्रिंशद्ब्रह्मचारिभ्यः कौपीनकृष्णाजिनकर्णभूषणपादुकाछत्रगोपीचंदनमाल्यविद्रुममालायज्ञोपवीतादियथाविभवंदद्यात् ॥ अन्यत्समानम् ॥ इतिब्रह्मचारिमरणविधिः ॥

अथाहिताग्नेर्मरणसमयमारभ्यदाहान्तंकर्मलिख्यते ॥ तद्यथा अथशुक्लपक्षेसायंहोमानन्तरंरात्रौयजमानस्यमरणशंकायांतदैवाग्निंविहृत्यप्रातर्होमःकार्यः ॥ अथ होमद्रव्याहरणानन्तरंतस्योन्नयनात्प्राक्यजमानमरणेगार्हपत्ये होमद्रव्यंप्रक्षिप्यदहेत् ॥ उन्नयनादूर्ध्वंप्राग्घोमादाहवनीयेदहेत् ॥ एवंकृतेयदिप्रातःकालपर्यन्तंजीवतितदास्वेकालेपुनःप्रातर्होमोनभवत्येव ॥ कृष्णपक्षेरात्रौमृतिशंकाचेत् ॥ प्रातराहुतिंपृथक्हुत्वातद्दिनादारभ्यामावास्येष्टिपर्यंतानसायंप्रातर्होमानांतन्त्रेणानुष्ठानंकुर्यात् ॥ ततःपिण्डपितृयज्ञवर्जितामम्मावास्येष्टिंकुर्यात् ॥ तत्रहोमेइष्टेःपश्चादादावनुष्ठीयमाने, अशक्तस्यापत्नीयज-

मानकर्मलोपेपिनदोषः ॥ सकलेष्ट्यसंभवे, आज्यंसंस्कृत्यचतुर्गृहीतेनपुरोनुवाक्याज्याभ्यांप्रधानदेवतानांत्यागानुष्ठानम् ॥
तस्याप्यसंभवेप्रतिप्रधानयागंपूर्णाहुतिंजुहुयात् ॥ अग्नयेस्वाहा अग्नीषोमाभ्याᳪंस्वाहा ॥ इन्द्रायस्वाहेतिसान्नाय्ययाजि-
नः ॥ असान्नाय्ययाजिनस्तु, अग्नयेविष्णवइन्द्राग्निभ्यामिति ॥ ततःसकलंपश्चादिकर्मकार्यंसकलासंभवेप्रधानदेवताना-
माज्याहुतिः ॥ एवंकृतेयदिअमावास्यापर्यंतंजीवतितर्हिनप्रतिदिनंसायंप्रातर्होमः॥ अमावास्यायामपराह्णेकेवलदक्षिणाग्नि-
मुद्धृत्यपिण्डपितृयज्ञःकार्यः ॥ नाग्न्यन्वाधानंनव्रतादानम् ॥ नामावास्येष्टिःकृतत्वात् ॥ सकलेष्टौक्रियमाणायांहविर्ग्रह-
णानन्तरंप्रागासादनान्मरणेहविषांगार्हपत्येप्रक्षेपः ॥ आसादनादूर्ध्वंमरणे, आहवनीयेदाहोहविषां ॥ तत्रमन्त्रः—याभ्योगृ-
हीतानिताभ्यःस्वाहेत्तीवैंनान्यहवनीयेसर्वाहुतिंजुहुयादित्याश्वलायनब्राह्मणे ॥ केचित्कृष्णपक्षेम्रियमाणस्यामावास्येष्टिमेव-
कुर्वंति ॥ नतत्पर्यंतंपक्षहोमः ॥ एवमेवारब्धानांचातुर्मास्यादीनांसमापनम् ॥ तत्रवैश्वदेवपर्वणिकृतेअन्त्यपर्वपर्यन्तंसमाप्य-
विधानेनयथाकालंपक्षहोमंपक्षान्तेष्टिंचकृत्वापुनः पक्षहोमंपक्षान्तेष्टिंपुनरप्येवम् ॥ पुनरप्येवंवरुणप्रघासकालपर्यंतंवरुणप्रघा-
साःकार्याः ॥ ततोमासचतुष्टयसंबंधिपक्षहोमंपक्षान्तेष्टीःकृत्वासाकमेधाख्यंपर्वकृत्वातदानीमेवशुनासीरीयंकुर्यात् ॥ सयत्रै-
वसाकमेधैर्यजतेतच्छुनासीर्येणयजतेतिश्रुतेः ॥ अत्रापिपक्षहोमेष्ट्यादेरसंभवेवरुणप्रघासादेकतन्त्रेणकुर्यात् ॥ तदसंभवे,
आज्यंसंस्कृत्यपरिस्तरणसमिदाधानेकृत्वाचतुर्गृहीतैःपुरोनुवाक्याज्याभ्यांसर्वान्प्रधानयागान्कुर्यात् ॥ तदसंभवेप्रतिदैवतम-
मुष्मैस्वाहेतिपूर्णाहुतिंजुहुयात् ॥ अन्तरामरणेदर्शवद्धविषांप्रतिपत्तिः ॥ एवमेवपशुसोमयागेवारब्धेतरामरणशंकयायथासं-
भवंप्रारब्धस्यसमापनंकर्तव्यम् ॥ पशुलाभेतद्दैवत्यंपुरोडाशंवा, आमिक्षांवा. पूर्णाहुतिंवाकुर्यात् ॥ असमाप्तेकर्मणिमरणेजा-
तेतदन्तमेवकर्मभवति ॥ ततोदुर्बलावस्थंयजमानंसंभावितसन्निकृष्टमरणंज्ञात्वागोमयेनगोमूत्रेणतीर्थोदकेनकुशोदकेनचस्ना-

पयित्वा, शुद्धेवाससीपरिधाप्य, गोमयेनोपलिप्तायांवेद्यांदक्षिणाग्रान्दर्भानास्तीर्य, बहुलांस्तिलान्विकीर्य, तत्रप्राक्शिरस मुदक्शिरसंवानिवेशयेत् ॥ तत्रविष्णुपूजनपूर्वकंवैतरण्यादिकंदानम् ॥ स्वयंदानाशक्तौपुत्रादिभिर्दत्वातस्यश्रेयोदद्यात् ॥ ततोगतप्राणंज्ञात्वापुत्रादिभिःस्नात्वावपनंपुनःस्नानंशुद्धेवाससीपरिधायशिखांबध्वामृतस्यशरीरप्रक्षालनम् ॥ अहतवस्त्रप-रिधापनमुत्तरीयस्यच ॥ चन्दनेनसर्वाङ्गंप्रोक्ष्यपुष्पैरलंकृत्यदुर्मरणनिमित्तंप्रायश्चित्तंकर्तव्यम् ॥ ततउखाधिश्रयणादिदाहंकु-र्यात् ॥ अत्रापसव्येनदक्षिणाभिमुखेनसर्वंकार्यम् ॥ आहवनीयस्थानेसकृत्सकृत्परिसमूहनादिसंस्कारपूर्वकंदाहार्थंसंतापजा ग्न्युत्पादनार्थमाहवनीयदक्षिणाग्नीविहरति ॥ तत्रवज्रोपग्रहेणप्रैषःकार्यः ॥ तिस्रएवस्थालीरद्धैवेतिप्रैषः ॥ ततःसन्तापाग्न्युत्पा दनार्थंगार्हपत्याहवनीयदक्षिणाग्निषुतिस्रोमृन्मयीस्थालीःशुष्कगोमयचूर्णयुक्ताअधिश्रयति ॥ सभ्यावसथ्ययोनोखाधिश्रयणं । तौहिप्रत्यक्षावेवस्थाल्योःकृत्वानेयौसर्वासुस्थालीषुचिह्नकरणम् ॥ **अथप्रयोगः** ॥ आचमनंतूष्णींप्राणानायम्य ॥ कुशो-पग्रहः ॥ शवसमीपेदक्षिणाभिमुखउपविश्य ॥ अद्यपूर्वो०तिथौअपसव्यंअ०गोत्रस्यअ०प्रेतस्यदाहार्थमुत्क्रान्तादिपिण्डदान महंकरिष्ये ॥ अवनेजनं–अ०गोत्रअमुकनामउत्क्रान्तौशवनामाएषपिण्डोमद्दत्तस्तवोपातिष्ठतां ॥ प्रत्यवनेजनं ॥ माषान्नसज-लकुंभ०संकल्पःलोहनिष्क्रयदक्षिणासंकल्पः ॥ अनेनपिण्डदानेनमृतस्यअसद्गतिविनाशः ॥ उत्तमलोकप्राप्तिः ॥ पिण्डो-द्धरणम् ॥ एवंद्वारदेशेपांथनाम्नापिंडदानम् ॥ अवनेजनंपूर्ववत् ॥ गोत्रस्यप्रेतस्यद्वारदेशेपांथनामाएषपिंडोमद्दत्त० ॥ प्रत्य-वनेजनं ॥ माषलोहदक्षिणा ॥ पिंडविसर्जनम् ॥ चत्वरेखेचरनाम्नापिंडदानं ॥ अवनेजनं ॥ गोत्रप्रेतचत्वरेखेचरनामा-एषपिंडोमद्दत्त० ॥ शेषंपूर्ववत् ॥ ततोमृन्मयीस्थालीस्थपञ्चाग्निसहितंसर्वाणियज्ञपात्राणिपृषदाज्यदर्भतिलान्घृतयवपिष्ट शुद्धोदकजलपात्रपलाशपत्रशूर्पकृष्णाजिनसप्तहिरण्यशकलानिसमिधर्बर्हिशुष्कगोमयादिकंगृहीत्वाहारितवस्त्रेणशवंप्रच्छादित-

मुखंप्राक्शिरसमूर्ध्वमुखमादायगृहान्निष्क्रम्यदाहदेशंप्रतिनयेयुः ॥ स्मार्तोग्निःश्रौताग्नयःशवाग्रे, अंसेनवानेतव्याः ॥ शवा-
न्वीमध्येनगंतव्यम् ॥ यमगाथांगायमानायमसूक्तंजपन्तोनयेयुः ॥अहरहर्नीयमानोगामश्वंपुरुषंगजं । वैवस्वतोनतृप्यतिसुर-
येइवदुर्मतिरितियमगाथा । अपेतेत्यादियमसूक्तम् यमगाथयायमसूक्तेनपरेयिवांसमितिषोडशर्चेनसूक्तेनचाहुतयोदेयाः ॥
ततोग्रामश्मशानयोर्मध्येपथिविश्रान्तीभूतनाम्नापिण्डदानम् ॥ अवने० ॥ कुशास्तर० ॥ पिंडदानम् ॥ अन्यत्सर्वंपूर्ववत् ॥
पिंडोद्धरणम् ॥ सर्वाणितीर्थानिमनसाध्यात्वाशवस्यस्नपनम् ॥ शवहस्तेसाधकनाम्नापिंडदानम् ॥ अन्यत्सर्वंपूर्ववत् ॥ सव्यं ॥
आचमनम् ॥ पुनःकुशोपग्रहःचितास्थाने, अग्न्यगारकरणम् ॥ प्राचीनावीति ॥ दक्षिणाभिमुखःकुर्यात् ॥ गार्हपत्याहव-
नीयदक्षिणाग्निस्थानेषुसंस्कृतसंस्कृत, भूसंस्कारान्कृत्वागार्हपत्याहवनीयदक्षिणाग्नीनांस्थापनम् ॥ सभ्यावसथ्ययोरुत्तरतः
सम्यक्क्रमेणस्थापनम् ॥ ईशान्यांवापञ्चाग्निक्रमेण ॥ गार्हपत्याहवनीययोरन्तरालेप्रागायतांचितिंकाष्ठैश्चिनुयात् ॥ ततश्चि-
तौप्राग्ग्रीवमुत्तरलोमंकृष्णाजिनमास्तीर्य ॥ तस्मिन्प्राक्शिरसमुत्तानंप्रेतंनिदध्यात् ॥ घृतेनाभ्यंजनम् ॥ ततोमृताच्छादितं
वस्त्रंत्रिभिर्भागैःशिरःप्रभृतिपादतलपर्यंतमाच्छाद्यचतुर्थंभागंछित्वाश्मशानभूमौविसृजेत् ॥ मुखेनासिकयोरक्ष्णोःकर्णयोश्चै-
कैकंहिरण्यशकलप्रक्षेपः ॥ हिरण्यशकलानामभावेआज्यबिंदून् ॥ अथपात्रप्रतिपत्तिः ॥ ततःप्रागग्राणामुत्तानानांपात्राणा-
मासादनम्सव्येपाणौरिक्तंप्रागग्रमुपभृतम् ॥ हृदयेप्रागग्रांध्रुवाम् ॥ मुखेप्रागग्रामग्निहोत्रहवणीम् ॥ दक्षिणानामिकायांचैकं-
कतस्रुचंप्रागग्रमुत्तानम् ॥ कर्णयोःप्राशित्रहरणेशिरसिरिक्तांप्रणीतांसमुत्तानांप्रागग्राम् ॥ कपालान्यपिविकल्पेनशिरसिविक-
ल्पेनपार्श्वयोः ॥ शूर्पेएकमैष्टिकंद्वितीयंतस्यप्रघासिकम् ॥ एकंचेद्द्विधाकृत्वापार्श्वयोःखंडमासादयेत् ॥ उदरेपृषदाज्यवती
मिडांप्रागग्रांशिश्नसमीपेशम्यांप्रागग्राम् ॥ अंडयोःसमीपेअरणीउदगग्रे ॥ तत्समीपेऽधोमुखमुलूखलमुशले ॥ आज्यस्थाली

उपवेषाग्निमृतावदानपुरोडाशपात्रीपूर्णपात्रकूर्चप्रमुखानिसर्वाणियज्ञपात्राणिऊर्वोर्मध्येस्थापयेत् ॥ स्मार्तपात्राणामपिअरणी सहितानामूर्वोर्मध्येस्थापनम् ॥ वरुणप्राघासिकानांच ॥ मृन्मयादीनांस्थालीकपालादीनांपात्राणामश्ममयानांचदृषदादी- नामप्सुप्रक्षेपोवा ॥ लोहमयानांचात्रकादीनांब्राह्मणायदानमप्सुप्रक्षेपोवा ॥ ततोदक्षिणाभिमुखः ॥ गार्हपत्येआज्यंसंस्कृत्य संमृज्यस्रुकस्रुवौआज्यमुद्वास्योत्पूयावेक्ष्यजुह्वांसकृद्गृहीतग्रहणम् ॥ उपरिसामिधंधारयेत् ॥ आहवनीयंपरिस्तीर्यसमिधमा- दाय ॥ अस्मात्वमधिमन्त्रेणैकाहुतिंजुहोति ॥ ॐअस्मात्वमधि० ॥ १ ॥ इदमग्नये ॥ ततोजुहूंघृतेनपूरयित्वामृतस्यदक्षि- णहस्तेप्रागग्रांसादयति ॥ खादिरंस्रुवंसव्यनासिकायामुत्तानम् दक्षिणहस्तेवा ॥ पात्रविशेषादाज्यस्थाल्याऊर्वोरन्तरेप्रक्षेपः ॥ मृन्मयीचेदप्सुप्रक्षेपः ॥ चितोपरिकाष्ठपूरणम् ॥ तदुपरिदक्षिणाग्रबर्हिषआच्छादनम् ॥ ततआहवनीयमालभ्यमन्त्रपाठः ॥ कृत्वासुदुष्करंकर्मजानतावाप्यजानता ॥ मृत्युकालवशंज्ञात्वानरंपञ्चत्वमागतम् ॥ धर्माधर्मसमायुक्तंलोभमोहसमावृतम् ॥ दहेयंसर्वगात्राणिदिव्यान्लोकान्सगच्छतु ॥ ततस्तिलाक्षतैरग्नीनांपूजनम् ॥ तत्रमन्त्रः—त्वंभूतकृज्जगद्योनेत्वंलोकपरिपा- लकः ॥ उक्तसंस्कारकस्तस्मादेनंस्वर्गंमृतंनय ॥ ततअग्निभिश्चितेरादीपनम् ॥ ततःस्कंधेउदकपूर्णकुंभंगृहीत्वातेनप्रेतपाद- प्रदेशाच्चितिंपरितः, अप्रदक्षिणांधारांदद्यात् ॥ ततउत्तराभिमुखोभूत्वालौकिकःशेषः ॥ गाढंरोदनंकरोति ॥ दाहानन्तरम् सर्वंअनग्निवत् ॥ इत्याहिताग्नेर्दाहविधिः ॥

## अथावसथ्याग्निकानांमरणसमयादारभ्यदाहान्तंकर्म ॥

तत्रशुक्लपक्षेसायंहोमानन्तरंरात्रौमरणशंका- यांआवसथ्याग्नौप्रातर्होमःकार्यः ॥ एवंकृतेयदिप्रातःकालपर्यन्तंजीवतितदाप्रातर्होमोनभवत्येव ॥ कृष्णपक्षेरात्रौमरण शङ्काचेत्तदाप्रातराहुतिंहुत्वातद्दिनादारभ्यअमावास्यापर्यन्तानांसायंप्रातर्होमानांतन्त्रेणानुष्ठानंकार्यम् ॥ ततःपिण्डपितृय-

 ॥४३॥

ज्ञवर्जितममावास्याप्रतिपदिनसंबन्धिसकलपक्षादिकर्मकार्यम् ॥ एवंकृतेयदिअमावास्यापर्यन्तंजीवतितदाप्रतिदिनंसायंप्रातर्होमः ॥ अमावास्यायामपराह्णेपिण्डपितृयज्ञःकार्यः ॥ असमासेकर्मणिमरणेजातेतदन्तमेवकर्मभवतिसर्वत्र ॥ दुर्बलावस्थंयजमानंसंभावितंसन्निकृष्टमरणंज्ञात्वा ॥ ततोगोमयेनगोमूत्रेणतीर्थोदकेनचस्नापयित्वाशुद्धेवाससीपरिधाप्यगोमयेनोपलिप्तायांभूमौदक्षिणाग्रान्दर्भानास्तीर्यप्रक्षिप्तांस्तिलान्विकीर्यतमुदक्शिरसंसन्निवेशयेत् ॥ तत्रविष्णुपूजनपूर्वकंवैतरण्यादिदानम् ॥ स्वयंदानाशक्तौपुत्रादिर्दत्त्वातस्यश्रेयोदद्यात् ॥ ततउपनिषदादिपुण्यसूक्तानिश्रावयेत् ॥ गतप्राणंज्ञात्वापुत्रादेःस्नानंवपनंपुनःस्नानम् ॥ प्रेतस्यशरीरप्रक्षालनम् ॥ अहतंवस्त्रंपरिधाप्यउत्तरीयंच ॥ चन्दनपुष्पैरलंकरणम् ॥ दुर्मरणनिमित्तंप्रायश्चित्तंकर्तव्यम् ॥ अथषट्पिण्डाः ॥ मृतस्थानेशवनाम्नापिण्डदानंपूर्ववत् ॥ द्वारदेशेपान्थनाम्नापिण्डदानंपूर्ववत् ॥ चत्वरेखेचरनाम्नापिण्डदानंपूर्ववत् ॥ आवसथ्याग्निसहितंअरणीप्रमुखानिसर्वाणियज्ञपात्राणिशूर्पंकृष्णाजिनकुशकृष्णतिलहिरण्यशकलादीनिगृहीत्वाशवसहितंगृहान्निष्क्रम्ययमसूक्तंजपन्तःश्मशानंगच्छेयुः ॥ ( अपेताध्यायोयमसूक्तं ) ग्रामश्मशानयोर्मध्येविश्रान्तौभूतनाम्नापिण्डदानम् ॥ ततःश्मशानभूमौशवस्थापनम् ॥ ततश्चितास्थानेवायुनाम्नापिण्डदानम् ॥ सर्वंप्राग्वत् ॥ ततःसर्वाणितीर्थानिमनसाध्यात्वाशवस्यस्नपनम् ॥ ततःशवहस्तेसाधकनाम्नापिण्डदानम् ॥ ततोदक्षिणशिरसंचितांकाष्ठैश्चिनुयात् ॥ पिण्डप्रतिपत्तिःप्राग्वत् ॥ ततश्चितौदक्षिणग्रीवमुत्तरलोमंकृष्णाजिनमास्तीर्यतस्मिन्दक्षिणशिरसमुत्तानंप्रेतंनिदध्यात् ॥ आज्येनाभ्यंजनम् ॥ प्रेताच्छादितवस्त्रविनियोगःप्राग्वत् ॥ मुखेहिरण्यशकलप्रक्षेपः ॥ अथपात्रप्रतिपत्तिः ॥ शिरसिप्रणीतांप्रागग्राम् ॥ शूर्पंद्विधाकृत्वापार्श्वयोरेकैकंखण्डमासादयेत् ॥ अण्डयोःसमीपेअरणीमुदगग्रांतत्समीपेऽधोमुखमुलूखलंमुसलंच ॥ उपवेषंवज्रंदक्षिणहस्तेप्रागग्रम् ॥ सव्यहस्तेप्रोक्षणीपात्रंप्रागग्रम् ॥ लोहमयानांपूर्ववत् ॥

ततःशिरःप्रदेशेभूमौअग्न्यागारकरणम् ॥ तत्रापसव्येनदक्षिणामुखःसकृत्सकृत्भूसंस्कारः ॥ आवसथ्याग्निस्थापनम् ॥ आज्यसंस्कारः॥निरुप्याज्यमधिश्रित्यपर्यग्निंकुर्यात् ॥ स्रुवंप्रतप्य ॥ कुशैःसंमृज्योदकेनाभ्युक्ष्यपुनःप्रतप्यनिदध्यात् ॥ आज्यमुद्रास्यकुशेनोत्पूयावेक्ष्यसव्यहस्तेकुशान्गृहीत्वादक्षिणहस्तेस्रुवेणाज्यंग्रहीत्वासव्यंजान्वाच्यवामहस्तेनहृदयंस्पृष्ट्वाएकाहुतिर्देया ॥ तत्रमन्त्रः–ॐअस्मात्त्वमधिजातोसित्वदयंजायतांपुनः॥ अमुकप्रेतंस्वर्गायलोकायस्वाहा ॥ स्त्रियांमन्त्रस्यनोहः ॥ इदंस्वर्गायलोकायशवमुखेत्यागः ॥ दक्षिणनासिकायांस्रुवंदक्षिणाग्रमुत्तानंनिधाय ॥ उपरिकाष्ठपूरणं ॥ तदुपरिदक्षिणाग्रबर्हिषाच्छादनम् ॥ ततस्तिलाक्षतैर्वह्निपूजा ॥ त्वंभूतकृज्जगद्योनेस्त्वंलोकपरिपालक ॥ उक्तसंस्कारकस्तस्मादेनंस्वर्गेमृतंनय ॥ अतःपरंबहुलतृणपूलिकांगृहीत्वा, अग्नौप्रज्वाल्यप्रदक्षिणंपरीत्यश्लोकद्वयेनमुखेऽग्निदानंकुर्यात् ॥ कृत्वासुदुष्करंकर्मजानतावाप्यजानता ॥ मृत्युकालवशंज्ञात्वानरंपञ्चत्वमागतम् ॥ धर्माधर्मसमायुक्तंलोभमोहसमावृतम् ॥ दहेयंसर्वगात्राणिदिव्यान्लोकान्सगच्छतु ॥ इति अग्निदानम् ॥ ततउत्तराभिमुखउपविश्यलौकिकप्रैषः ॥ गाढंरोदनम् ॥ अर्द्धदग्धेतथादेहेदद्यादाज्याहुतिंततः ॥ इत्यावसथ्याग्निकस्यदाहविधिः ॥ अग्रेसर्वंपूर्ववत् ॥ आहिताग्नेरपिपूर्वंस्मार्तपात्रप्रतिपत्तिंकृत्वापश्चाच्छ्रौतपात्रप्रतिपत्तिर्भवति ॥ **इतिश्रौतस्मार्तयोर्निरग्निकस्यचमरणसमयादारभ्यदाहपर्यन्तकर्मणःसमाप्तिः॥**

**अथउच्छिन्नाग्नेर्दाहार्थमृताधानम् ॥** ( एतदपसव्येनदक्षिणाभिमुखेनचसर्वंकार्यम् ॥ ) आचम्यप्राणा

१ यदिविच्छिन्नाग्निस्तर्हियतोविच्छेदस्तत्कालगणनया, अग्निविच्छेदप्रायश्चित्तंतदैवकुर्यात् ॥ संकल्पयित्वा । तच्चनास्तिक्यादग्नित्यागेमासद्वयंकार्यम् ॥ मासचतुष्टयेतिकृच्छ्रः । षण्मासोर्द्ध्वंचान्द्रादिकम् ॥ संवत्सरादूर्ध्वंत्रैमासिकम् ॥ आलस्यादिनाग्नित्यागेमासद्वयंकार्यम् ॥

नायम्य ॥ अद्यपूर्वो०अपसव्यंगोत्रस्यप्रेतस्यउच्छिन्नाग्नेर्दाहार्थंमृताधानमहंकरिष्ये ॥ अरण्योरुपरिदक्षिणंप्रेतपाणिंकृत्वाअ-
यन्तइतिसमारोपणमन्त्रंपुत्रादिर्जपेत् ॥ ॐअयन्तेयोनिर्ऋत्वियो० खरत्रयसंस्कारः ॥ गार्हपत्यस्यपश्चात्यस्याग्नयोजुहुत
इतिमन्त्रेणमथित्वागार्हपत्यस्यस्थापनम्—यस्याग्नयोजुहुतोमांसकामाःसङ्कल्पयन्तेयजमानमांसं ॥ जायन्तुहविषेसादिताय
स्वर्गलोकमिमंप्रेतंनयंतु ॥ इतिमन्थनमन्त्रः ॥ गार्हपत्यादाहवनीयदक्षिणाग्न्योरुद्धरणम् ॥ गार्हपत्येआज्यंसंस्कृत्यस्रुचौद्वा
दशगृहीतंगृहीत्वासमित्पूर्वकमाहवनीयेतूष्णींहुत्वा, उखाधिश्रयणादिदाहंकुर्यात् ॥ अरणीसद्भावेएवम् ॥ अरण्योरभावेचा-
न्येअरण्यौसमानीय, अरण्योरुपरिदक्षिणंप्रेतपाणिंकृत्वाअयन्तइतिसमारोपमन्त्रंपुत्रादिर्जपेत् ॥ यस्याग्नयइतिमन्त्रेणाग्निमंथ-
नम् ॥ गार्हपत्यस्थापनम् ॥ आहवनीयदक्षिणाग्न्योरुद्धरणम् ॥ तिस्रएवस्थालीपरिष्टचैइतिप्रैषः ॥ ततउखाधिश्रयणा-
दिदाहंकुर्यात् ॥ इत्यग्निहोत्रिणांमृताधानम् ॥

---

–मासचतुष्टयेकृच्छ्रः ॥ षण्मासादूर्ध्वंचान्द्रादिकम् ॥ संवत्सरादूर्ध्वंत्रैमासिकम् ॥ आलस्यादिनाग्नित्यागेद्वादशाहातिक्रमेत्र्यहमुपवासः ॥
मासातिक्रमेद्वादशाहमुपवासः ॥ संवत्सरातिक्रमेमासोपवासः ॥ पयोभक्षणं । प्रमादादग्नित्यागेआत्रिरात्रंद्वादशलघुप्राणायामाः ॥ आषडहाच्च-
तुर्विंशतिः ॥ आद्वादशाहात्पञ्चाशत् ॥ आविंशत्यहाच्छतम् ॥ आमासादुपवासः ॥ आषष्टिरात्रात्त्रिरात्रम् ॥ अतःपरंप्रत्यब्दंकार्यम् ॥
संवत्सरोर्ध्वमग्नित्यागेचान्द्रंद्विवर्षत्यागेचान्द्रंसोमपानंच ॥ चान्द्रद्वयंवा ॥ त्रिवर्षत्यागेकृच्छ्राब्दंगोदानंचेत्यादिः ॥ अत्रप्रत्याम्नायाः ॥
कल्प्याः ॥ यावत्कालतोविच्छेदस्तावदाहुतिपरिमितंहोमद्रव्यंदद्यात् ॥ ततःप्राणायामोऽमंत्रकः ॥ एवंसर्वंप्रेतकृत्यंप्राचीनावीतिनाकार्यं ॥
दक्षिणापर्वंच ॥ ॥४४॥

**अथस्मार्तमृताधानं ॥** आचम्यप्राणानायम्य ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यउच्छिन्नाग्नेर्दोहार्थंस्मार्तं मृताधानंकरिष्ये ॥ अरण्योरुपरिदक्षिणंप्रेतपाणिंकृत्वाअयन्तइतिसमारोपमंत्रंपुत्रादिर्जपेत् ॥ ॐअयन्तेयो० ॥ १ ॥ खरसंस्कारःसकृत् ॥ आवसथ्याग्नेःपश्चात्यस्याग्नयोजुह्वतइतिमन्त्रेणमथित्वाआवसथ्याग्नेःस्थापनम् ॥ सचमन्थनमन्त्रः—यस्याग्नयोजुह्वतोमांसकामाःसंकल्पन्तेयजमानमांसम् ॥ जायन्तुतेहविषेसादितायस्वर्गंलोकममुंप्रेतंनयन्तु ॥ इति ॥ आवसथ्याग्नौ आज्यंसंस्कृत्यस्रुवेणस्रुचौद्वादशगृहीतंगृहीत्वाउपरिसमिधपूर्वकंजुहोति ॥ तत्रमन्त्रः—ॐउपावरोहजातवेदःइमंप्रेतंस्वर्गायलोकायनयप्रेताहुतिंचास्यजुषस्वस्वाहाइदमग्नयेनमम ॥ इतिआपस्तंबशाखीयमन्त्रः ॥ **इतिस्मार्तमृताधानम् ॥**

**आहिताग्नेर्दुर्मरणेविशेषमाह ॥** अङ्गिराः—वैतानंप्रक्षिपेदप्सुआवसथ्यंचतुष्पथे ॥ पात्राणितुदहेदग्नौयजमानेवृथामृते ( वृथामृतेअविहितमार्गेणमृतेइत्यर्थः ) ॥ साग्निकेपापकर्मणीतिचतुर्थपादस्यक्वचित्पाठः ॥

**ब्राह्मणस्याहिताग्नेर्विशेषमाहपराशरः**—चाण्डालेनश्वपाकेनगोभिर्विप्रैर्हतोयदि ॥ विषवैद्युतचाण्डालशृंगिदंष्ट्रिजलाग्निभिः ॥ नखिसर्पादिभिर्बुद्ध्याऽनर्थेक्रोधादिनामृताः ॥ नकुर्याद्दहनाशौचोदकमेषांमृतायदि ॥ नोपतिष्ठतितत्सर्वमन्तरिक्षेविनश्यति ॥ गङ्गायांप्रक्षिपेद्देहंसरित्स्वन्यासुवाततः ॥ प्रेताग्निंप्रक्षिपेदप्सुगृह्याग्निंचचतुष्पथे ॥ यज्ञपात्राणिसर्वाणि लौकिकेनाग्निनादहेत् ॥ एतेषांशवानांस्पर्शनस्नापनालङ्करणलक्षणादिरज्जुच्छेदाश्रुपातादीनांज्ञानात्करणेमहासांतपनम् ॥ एकैककरणेनाज्ञानात्रुपवासः ॥ सत्याकृच्छ्रातिकृच्छ्रः ॥ अभ्यासेऐंदवम् ॥ आहिताग्निर्मृतोयस्तुविशेषेणात्मघातकः ॥ दहेतब्राह्मणंलौकिकाग्नौमन्त्रविवर्जितम् ॥ अस्थीनितुपुनर्गृह्यक्षीरेणक्षालयेत्ततः ॥ तेनाग्निनास्वमन्त्रेणपृथगेवपुनर्दहेत् ॥

प्रमादान्मृतानातुप्रायश्चित्तपूर्वकंसर्वंकार्यम् ॥ तदुक्तं–अथकश्चित्प्रमादेनम्रियतेतूदकादिभिः ॥ तस्याशौचंविधातव्यंकर्तव्या चोदकक्रियेति ॥ आहिताग्निस्तुयोविप्रोमहापातकवान्भवेत् ॥ प्रायश्चित्तैर्नंशुध्येततदग्नीनांतुकागतिः ॥ वैतानंप्रक्षिपेत्तोये शालाग्निंशमयेद्बुधइत्युशनाः ॥ कर्मप्रदीपे–महापातकसंयुक्तोदैवात्स्यादग्निमान्यदि ॥ पुत्रादिःपालयेदग्नीन्युक्तआदोषसंक्षयात् ॥ पुत्रादिरित्यादिशब्दाद्भ्रात्रादिः ॥ पालनंचहोमेष्टिकरणादिना । युक्तःस्त्वमग्निहोत्रहोमादिकंकुर्वित्येवंयजमानेननियुक्तःत्यागादिकमपिकुर्यात् ॥ आपापक्षयात्तन्निमित्तप्रायश्चित्ताचरणपर्यंतम् ॥ प्रायश्चित्तंनकुर्याद्यस्तथैवम्रियतेयदि ॥ गृह्यं निर्वापयेच्छ्रौतमप्स्वस्येत्सपरिच्छदम् ॥ सादयेदुभयंवाप्स्वद्भ्योग्निरभ्यभवद्यतः ॥ पात्राणिदद्याद्विप्रायदहेदप्स्वेववाक्षिपेत् ॥

## इतिआहिताग्नेर्दुर्मरणविधिः ॥

इतिश्रीद्विवेद्युपाह्वलीलाधरात्मज " चुनीलालशर्मणा " ज्योतिर्विदुपनामकभानुशङ्करतनुजन्मा " सूर्यराम-शर्मणा "च संशोध्यसंवर्ध्यप्रकाशितेदाल्भ्योक्तेअशुभकर्मप्रदीपेद्वितीयोविभागः ॥



## ॥ अथ दाल्भ्योक्त अशुभकर्मप्रदीपस्य तृतीयोविभागः ॥

अथप्रथमदिनकृत्यम् ॥ तत्रादौनवश्राद्धानि ॥ यद्वापिनित्यापिण्डःस्यान्नवश्राद्धानियमनिषट् ॥ अपिण्डकानि-

१ तानिच—प्रथमेह्नितृतीयेचपञ्चमेसप्तमेतथा । नवमैकादशेचैवनवश्राद्धान्यमूनिषट् ॥ नवश्राद्धेमन्त्राभावः ॥ एतानिचप्रथमतृतीयपञ्चम सप्तमनवमैकादशादिदिनेषुकार्याणि ॥ अनेनप्रेतस्याप्यायनंभवति ॥ कृतेऽधिकफलं ॥ अकरणेप्रत्यवायोनास्ति ॥ तस्यआश्वलायनशा-खीयविषयत्वात् ॥ पारस्करगृह्यसूत्रेतुदिवाश्नीयुः " अमांसं " प्रेतायपिण्डंदत्त्वा अवनेजनप्रत्यवनेजनेषुनामग्राहमित्येतावन्मात्रस्यैवकर्तव्य-तयोपदेशात् भाष्यकारादिभिश्चपद्धतिष्वनुल्लेखात्समाचाराभावाच्चास्माभिरपिप्रयोगेननिर्दिष्टानि, इच्छाचेदधोनिर्दिष्टप्रकारेणविषमदिनेकुर्युः ॥ अथनवश्राद्धप्रयोगः ॥ स्नानं ॥ आचमनं ॥ तूर्ष्णींप्राणायामः ॥ पवित्रधारणम् ॥ अद्यपूर्वो० तिथौअपसव्यंअ०गोत्रस्यअ०प्रेतस्यकुप्रेतत्व-विमुक्तयेप्रथमेहनिनवश्राद्धंकरिष्ये ॥ इहलोके० ॥ कुशोसि० ॥ इतिकुशबटुस्थापनम् ॥ अ०गोत्रअ०प्रेतपाद्यंपादावनेजनंपादप्रक्षालनं एषवोर्घः ॥ इदमत्रचंदनंपुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादौप्रक्षाल्य ॥ सव्यं ॥ आचमनं ॥ दिग्बन्धः—ऐन्द्रयां० ॥ अपवित्रःपवि-त्रेतिपवित्रीकरणम् ॥ कर्मार्थंजलाभिमन्त्रणं ॥ उपहारप्रोक्षणं ॥ अद्यपूर्वो० तिथौअपसव्यंअ०गोत्रस्यअ०प्रेतस्यआप्यायनार्थंनवश्राद्धंकरिष्ये ॥ अ०गोत्रायअ०प्रेतायआसनं ( एवंसर्वत्र ) अर्चनं " अर्चनविधेःसर्वंपरिपूर्णमस्तु ॥ इदमर्चितंवोज्योतिःसुज्योतिःसूर्यापुष्पंशेषोपचाराः सम्पूर्णाविधिवद्भवन्तु ॥ अ०गोत्रायअ०प्रेतायआमान्नमुपतिष्ठतु ॥ अवनेजनं—अ०गोत्रअ०प्रेतअवनेजनमिदन्ते ॥ पिण्डदानम्—अ० गोत्रअ०प्रेतप्रथमेऽहनिविषमश्राद्धेअयंपिण्डोमयादीयतेअयंते ॥ अ०गोत्रअ०प्रेतपिण्डोपरिप्रत्यवनेजनंमयादीयतेइदन्ते ॥ हस्तप्रक्षालनम् ॥ अ०गोत्रअ०प्रेतऊर्णासूत्रंमयादीयतेइदन्ते ॥ अ०गो०अ०प्रेतउशीरचंदनंमया०इ० ॥ अ०गो०प्रे०भृंगराजपुष्पंमया०इ० ॥ अ०गो० अ०प्रेतरालधूपोमया०अयंते ॥ अ०गो०अ०प्रे०एषदीपोमयादीयतेअ० ॥ अ०गो०अ०प्रे०द्राक्षनैवेद्यंमया०इ० ॥ पिण्डस्यार्चनविधेः+

भोज्यानियुगपच्चसमापयेत् ॥ कालातिक्रमएतेषांकृत्यंचैकादशेहनि ॥ वृषोत्सर्गोन्तेकर्तव्यमाद्यपिण्डेनसार्द्धकं ॥ अपिण्ड-कान्यत्रकालेविप्राभोज्याःसमन्ततः ॥ दक्षिणासहितान्येवनवश्राद्धानिचैवषट् ॥ एतद्दशाहान्तंकर्मनवश्राद्धैःसमन्वितं ॥ मन्त्रविस्तारहितंकृत्वासनंततःपरम् ॥

## अथप्रथमदिनकृत्यम् ॥ प्रथमदिवसेउपहारान्गृहीत्वातीर्थेगत्वाशुद्धभूमिंप्रकल्प्यगोमयेनोपलेपयेत् ॥ स्ना-

---

परिपूर्णतास्तु ॥ सव्यं ॥ आचमनं ॥ अपसव्यं ॥ तिलकुशानादाय ॥ इदंतेदत्तंनवश्राद्धमुपतिष्ठताम् ॥ इतिकुशबटोरुपरिअक्षय्योदकदानं ॥+ भोजनसंकल्पः—करिष्यमाणमेकब्राह्मणभोजनंवाआमान्नंयथाकालेअ० गोत्रायअ० प्रेतायक्षुधोपशमनार्थंमयादी० इ० ॥ दक्षिणासंकल्पः—दास्यमानांसूतकान्तेलोहनिष्क्रयणींदक्षिणांमयादी० इ० ॥ अभिरम्यतामितिकुशबटुविसर्जनं ॥ अभिरताःस्मइतीतरेब्रूयुः ॥ अनादिनि० प्रदोभव ॥ अतसीपु० विघतेभयं ॥ अनेनपिंडदानेनप्रेतस्यकुप्रेतत्वनिवृत्तिरस्तु ॥ अग्रेअवयवपिण्डदानेयोग्यताप्राप्तिरस्तु ॥ पिण्डंजलेक्षिप्त्वास्नायात् ॥ इतिप्रथमेऽहनिविषमश्राद्धं ॥

१ तद्दिनेवपनंकार्यंपुत्रेणनेतरेणतु ॥ इतरैःस्वेच्छयाकार्यंलघुभिश्चसपिण्डकैः ॥ अयुग्मदिवसेष्वेवनपूर्णेशुभमिच्छता ॥ प्रेतोद्देशेन-यत्कृत्यमपूर्णेदिवसेचरेत् ॥ कारयित्वाहवपनंशुचिःस्नातःसुतश्चरेत् ॥ प्रथमेह्नितृतीयेवागतेपिण्डादिकर्मच ॥ अस्थिसंचयनादूर्ध्वंदशाहान्त-समाचरेत् ॥ शुद्धितत्त्वेआदिपुराणे—प्रथमेहनियोदद्यात्प्रेतायान्नंसमाहितः ॥ यत्नान्नवसुचान्येषुसएवप्रददात्यपि ॥ अत्रसएवेत्येवकारा-त्प्रथमपिण्डदातैवदशपिण्डदानेऽधिकारीतिदर्शयति ॥ तेनपुत्रादेरसन्निधानेमयन्येनप्रथमपिण्डोदत्तस्तदादशाहमध्येपुत्रादेरागमनेऽपिदशाहि-कपिण्डदानंपुत्रादिनानकर्त्तव्यम् ॥ तदतिरिक्तंएकादशाहिकादिकंसर्वंपुत्रादिःकुर्यात् "असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् ॥ प्रथमेहनि-*

त्वाचरुश्रपणंमानसीसन्ध्याकार्या ॥ आचम्यतूष्णींप्राणानायम्य ॥ कुशोपग्रहः ॥ बद्धशिखः ॥ दक्षिणाभिमुखउपविश्य-तीर्थस्मरणंकृत्वा ॥ अद्यपूर्वो०तिथौअपसव्यंअमुकगोत्रस्यअमुकप्रेतस्य ( स्त्रियाश्चेत् गोत्रायाःप्रे-ताया: ) प्रथमेहनिशिरोनिष्पत्त्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशचटस्थापनम् ॥ कुशवटुंस्पृष्ट्वाभिमन्त्र-णम्–कुशोसित्वंपवित्रोसिब्रह्मणानिर्मितःपुरा ॥ त्वयिस्नातेनसुस्नातोयस्यैतद्ग्रन्थिबन्धनम् ॥१॥ इमंलोकंपरित्यज्यगतोसिपरमांगतिम् ॥ मनसावायुरूपेणचटेत्वाहंनिमन्त्रये ॥ २ ॥ अ०गोत्र अ०प्रेतपाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽर्घः ॥ इदमत्रचन्दनंपुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादौप्रक्षाल्य ॥ सव्यं ॥ आचमनं ॥ दिग्बन्धः–ऐंद्रयांनारायणोरक्षेदाग्नेय्यांचजनार्दनः ॥ दक्षिणस्यांपुण्डरीकाक्षःपद्मनाभस्तुनैरृतौ ॥ प्रतीच्यांचैवगोविन्दोवायव्यांमधुसूदनः ॥ उदी-च्यांमाधवोरक्षेदैशान्यांपुरुषोत्तमः ॥ ऊर्ध्वंगोवर्द्धनोरक्षेदधस्ताच्चत्रिविक्रमः ॥ एवंदशदिशोर-

*योदद्यात्सदशाहंसमापयेत् " इतिआश्वलायनगृह्यपरिशिष्टाच्च ॥ नचभरतेनपिण्डदानोत्तरमपि " ऐङ्गुदंबदरीमिश्रंपिण्याकंदर्भसंस्तरे " इत्यादिनायोध्याकाण्डेरामपिण्डदानश्रवणात्प्रधानाधिकारिणापुनर्दशपिण्डादेयाइतिप्रतीयतेइतिवाच्यम् " भरतश्चेत्प्रतीतःस्याद्राज्यंप्राप्येदमुत्त-मम् । प्रेतार्थंवत्समेदद्यान्मामांतत्समुपागमत् " इतिदशरथशापाद्भरतकृतस्यअकृतत्वस्मरणेनपुनस्तत्करणादिति ॥ २ पिण्डदानंचजलसमीपे-कार्यमित्युक्तंमत्स्यपुराणे । प्रेतीभूतस्यसततंभुविपिण्डंजलंतथा ॥ सतिलंसकुशंदद्याद्बहिर्जलसमीपतः ॥

क्षेत्केशवःसर्वरक्षकः ॥ इतिमन्त्रेणदिग्बन्धः ॥ अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरे-
त्पुण्डरीकाक्षःसबाह्याभ्यन्तरःशुचिः ॥१॥ इतिसर्वाङ्गमार्जयेत् ॥ भूमौदर्भासनंतस्योपरिपात्रंनिधायजलपूरणम् ॥
तन्मध्येतिलयवचंदनपुष्पदुग्धतुलसीदलानिप्रक्षिप्य ॥ कर्मार्थंजलाभिमन्त्रणम्—यद्देवेतितिसृणांकूष्माण्डऋषिःगा-
यत्र्युष्णिगनुष्टुप्छन्दांसिअग्निवायुसूर्यादेवतास्तिलोदककरणेविनियोगः॥ तज्जलंदर्भेणालोड्य॥
यद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्म्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥१॥ यदिदि-
वायदिनक्तमेनाꣳसिचकृमावयम् ॥ वायुर्म्मातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥ २ ॥ यदि-
जाग्रद्यदिस्वप्नऽएनाꣳसिचकृमावयम् ॥ सूर्य्योमातस्मादेनसोविश्वान्मुञ्चत्वꣳहसः ॥३॥ अप-
सव्यं ॥ उदक्यादिशूद्रसूकरश्वानकुक्कुटमार्जारादिदुष्टदृष्टिनिपातदूषितानांपाकादिद्रव्योपहारा-
णांपवित्रतास्तु ॥ सव्यं ॥ देशकालपाकपात्रअन्नद्रव्यश्रद्धासंपदस्तु ॥ सर्वेपाकाःसर्वेउपहाराःशुच
योभवन्तु ॥ अद्यपूर्वो० तिथौअपसव्यंअ०गोत्रस्यअ०प्रेतस्यप्रथमेहनिशिरोनिष्पत्यर्थंप्रेतपूजनं
९ करिष्ये ॥ अ०गोत्रायअ०प्रेतायआसनमिदन्ते ॥ अ०गो०अ०प्रे०अर्चनमिदन्ते ॥ अस्यार्चन
विधेःपरिपूर्णतास्तु ॥ अस्तुपरिपूर्णता ॥ इदमर्चितंवोज्योतिःसूर्योज्योतिःपुष्पं, शेषोपचाराः

संपूर्णाविधिवद्भवन्तु ॥सव्यं ॥ आचमनं ॥ अपसव्यंअ०गो०अ०प्रे०भोजनमिदन्ते ॥ अ० गो०अ०प्रे०मुखवासताम्बूलंसहिरण्यमिदन्ते ॥ अद्यपूर्वो०तिथौअ०गोत्रस्यअ०प्रेतस्यप्रथमेहनिशिरोनिष्पत्त्यर्थंपिण्डप्रदानंकरिष्ये ॥ तूष्णींरेषाकरणम् ॥ अवनेजनम्–अ०गोत्रअ०प्रेतप्रथमेहनिशिरोनिष्पत्त्यर्थंपिण्डस्थानेअवनेजनमिदन्ते ॥ दक्षिणाग्रंकुशास्तरणम् ॥ पिण्डदानम्–अ० गोत्रअ० प्रेतप्रथमेहनिमूर्द्धाद्यवयवसंभूत्यैएषतेदेहपूरकःपिण्डोमयादीयतेअयंते ॥ अनेनपिण्डेनयान्यं-

---

१ मूर्द्धादिदेहावयवनिष्पत्त्यर्थंदिनंप्रति ॥ शालिनासक्तुनावापिपक्वेनदेहपिण्डकान् ॥ वायव्यांदिशिचारभ्यआग्नेयांतुसमापयेत् ॥ अमन्त्रंकारयेच्छ्राद्धंदशाहंनामगोत्रतः ॥ गर्तंकृत्वावनेज्याथकृत्वापिण्डंविनिक्षिपेत् ॥ द्विजाभोज्यादक्षिणान्तंप्रत्यहंकारयेत्सुधीः ॥ प्रथमेहनियःपिण्डस्तेनमूर्द्धाप्रजायते ॥ द्वितीयेनिकर्णाक्षिनासिकामुखमेवच ॥ भुजोवक्षोदरग्रीवातृतीयेहनिजायते ॥ चतुर्थेनाभिकटिपृष्ठंगुदंलिङ्गंचजायते ॥ पञ्चमेऊरूजानुश्चजङ्घेपादयुगंतथा ॥ षष्ठेचदन्तरोमाणिनखत्वक्चप्रजायते ॥ सप्तमेरुधिरंमांसमस्थिमज्जाशिरस्तथा ॥ अष्टमेसर्वेमर्माणिबलंवीर्यंचजायते । नवमे सर्वांगसम्पूर्णंदशमेक्षुत्पिपासया ॥ एकस्मिंश्चस्थलेतीर्थेएकान्नेनदशैवतु ॥ २ पिण्डप्रमाणंदेवलः–एकोद्दिष्टेसपिण्डेचैकपित्र्यंतुविधीयते ॥ नालिकेरप्रमाणंतुप्रत्यब्देगासिकेतथा ॥ तीर्थेदर्शेचसम्प्राप्तेकुक्कुटाण्डप्रमाणतः ॥ महालयेगयाश्राद्धेकुर्यादामलकोपमम् ॥ गारुडेपिण्डदानविधानम् । दद्यात्तण्डुलपाकेनयवपिष्टेनवासुतः ॥ उशीरंचन्दनंभृंगराजपुष्पंनिवेदयेत् ॥ धूपंदीपंचनैवेद्यंमुखवासंचदक्षिणाम् ॥ काकान्नं ( बलिः ) पयसःपात्रे ( नीरक्षीरयोः ) वर्धमानजलाञ्जलीन् ॥ प्रेतायामुकनाम्नेचमदत्तमुपतिष्ठतु ॥ इति ॥

गानिसंपद्यंतेतान्यंगानिसंपद्यन्ताम् ॥१॥ ( स्त्रियाश्चेत्अ०गोत्रेअमुकप्रेते ) अ०गोत्रअ०प्रेतपिण्डोपरि-
प्रत्यवनेजनंमयादीयतेइदन्ते ॥ हस्तप्रक्षालनम् ॥ अ०गो०अ०प्रे०ऊर्णासूत्रंमयादीयतेइदन्ते ॥ अ०
गो०अ०प्रे०उशीरचंदनंमया०इ०॥अ०गो०अ०प्रे०भृंगराजपुष्पंमया०इ०॥ अ०गो०अ०प्रेतराल-
धूपोमया०अर्यंते॥अ०गो०अ०प्रे०एषदीपोमयादीयतेअ०॥ अ०गो०अ०प्रे०द्राक्षानैवेद्यंमया०
इ०॥अ०गो०अ०प्रे०पूगीफलंमया०इ०॥ पिण्डस्यार्चनविधेःपरिपूर्णतास्तु ॥ सव्यं ॥ आचमनं॥
अपसव्यं ॥ भोजनसंकल्पः—करिष्यमाणमेकंब्राह्मणभोजनंवाआमान्नंयथाकालेअ०गोत्रायअ०प्रे-
तायक्षुधोपशमनार्थंमया०इदन्ते ॥ दक्षिणासंकल्पः—दास्यमानांसूतकान्तेलोहनिष्क्रयणींदक्षिणां-
मया०इ० ॥ अनेनपिण्डदानेनप्रेतस्यसद्गतिःउत्तमलोकप्राप्तिः ॥ ताम्रपात्रेजलदुग्धतिलयवस-
र्वौषधिगंधप्रक्षेपः ॥ अञ्जलिदानम्—ॐप्रजापतौत्वादेवतायामुपोदकेलोकेनिदधाम्यसौ ॥ अपनः
शोशुचदघम् ॥१॥ ( इतिमन्त्रेणपिण्डेअञ्जलिदानम् ) अ०गोत्रअ०प्रेतदाहजनिततृषोपशमनार्थंपिण्ड-

---

१ दिनेदिनेऽञ्जलीन्कुर्यात्पिण्डस्योपरिपुत्रक ॥ चितादाहोपशान्त्यर्थंतिलदुग्धजलैःक्रमात् ॥ एकाञ्जलिःप्रथमेह्नितत्तोद्वौद्वौचवर्धयेत्॥
एवंदशाहपर्यन्तमेकोनविंशतिर्भवेत् ॥

अ०क० स्योपरिएषदुग्धतिलतोयाञ्जलिर्मयादीयतेअयंते ॥ प्रथमेह्निएकमेवाञ्जलिंदत्वाशेषोदकेनपिण्डोपरिधारांकु- प्रदीपः
र्यात्—ॐअकृन्कर्म्मकर्म्मकृत÷सहवाचामयोभुवा ॥ देवेभ्यःकर्म्मकृत्वास्तम्प्रेतसचाभुवः ॥१॥
॥५०॥ प्रेताजयतानरऽइन्द्रोवःशर्म्मयच्छतु ॥ उग्रावःसन्तुबाहवोनाधृष्यायथासथ ॥ २ ॥ अना-
दिनिधनोदेवःशङ्खचक्रगदाधरः ॥ अक्षय्यः पुण्डरीकाक्षःप्रेतमोक्षप्रदोभवेत् ॥ १ ॥ अतसीपुष्प-
संकाशंपीतवाससमच्युतम् ॥ येनमस्यन्तिगोविन्दंनतेषांविद्यतेभयम ॥२॥ कृष्णकृष्णकृपालो-
त्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानांप्रसीदपुरुषोत्तम ॥ ३ ॥ नारायणसुरश्रेष्ठलक्ष्मीकान्त
वरप्रद ॥ अनेनतर्पणेनाथप्रेतमोक्षप्रदोभव ॥४॥ हिरण्यगर्भपुरुषव्यक्ताव्यक्तस्वरूपक ॥ अस्य-
प्रेतस्यमोक्षार्थंसुप्रीतोभवसर्वदा ॥ ५ ॥ इतिपिण्डोपरिधारांदद्यात् ॥ गोग्रासंसंकल्पः—दास्यमानोगोग्रासः
अ०गोत्र० अ०प्रेतमयादीयतेअयंते ॥ ततःअशुचित्वनिवृत्यर्थंशुचित्वप्राप्त्यर्थंअध्वश्रमनिवृत्यर्थंप्रेतोद्देशेनगर्त्तेतै-
लकल्कोदकप्रक्षेपः ॥ अ०गो०अ०प्रे०तैलेनाभ्यंक्ष्व ॥ कल्केनोद्वर्त्तय॥ उष्णोदकेनस्नाहि ॥ शीतोदकेन- ॥५०॥
स्नाहि ॥ सव्यं ॥ अद्यपूर्वो०भवतांब्राह्मणानांवचनाच्छ्रीतीर्थेविष्णोःप्रसादात्प्रथमदिवसनिमि-
त्तमवयवश्राद्धंपरिपूर्णमस्तु ॥ अपसव्यं ॥ पिण्डोद्धरणम् ॥ पिण्डस्योदकेप्रक्षेपःगर्तेवा ॥ पुनःस्नायात् ॥

स्नानाशक्तौमन्त्रस्नानं ॥ एवंप्रथमदिनमारभ्यदशाहपर्यन्तंगतोन्नंतिलकल्कोष्णादिसर्वंकार्यं ॥ इतिप्रथमदिनकृत्यम् ॥

अथद्वितीयदिनकृत्यम् ॥ द्वितीयदिवसेउपहारान्गृहीत्वातीर्थेगत्वाशुद्धभूमिंप्रकल्प्यगोमयेनोपलेपयेत् ॥ स्नात्वाचरुश्रपणंमानसीसंध्याकार्या ॥ आचम्यतूष्णींप्राणानायम्य ॥ कुशोपग्रहः बद्धशिखः ॥ दक्षिणाभिमुखउपविश्य ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअ० प्रेतस्यद्वितीयेहनिकर्णाक्षिमुखनासिकानिष्पत्त्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशचटस्थापनम्-कुशोसि० ॥ १ ॥ इमंलोकं० ॥ २ ॥ इत्यभिमन्त्र्यप्रेतायपाद्यं, दिग्बंधनं, जलाभिमन्त्रणं, पाकप्रोक्षणान्तंविधायप्रेतपूजनंकुर्यात् ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रस्यअ० प्रेतस्यद्वितीयेहनिकर्णाक्षिमुखनासिकानिष्पत्त्यर्थंप्रेतपूजनंकरिष्ये ॥ इतिसङ्कल्प्यपूजनं विधाय ॥ अद्यपूर्वो० अ० गोत्रस्यअ० प्रेतस्यद्वितीयेऽहनिकर्णाक्षिमुखनासिकानिष्पत्त्यर्थंपिण्डदानं करिष्ये ॥ तूष्णींरेखाकरणं ॥ अवनेजनम्-अ० गोत्रअ० प्रेतद्वितीयेऽहनिकर्णाक्षिमुखनासिकानिष्पत्त्यर्थं पिण्डस्थानेअवनेजनमिदन्ते ॥ दक्षिणाग्रंकुशास्तरणम् ॥ पिण्डदानम्-अ० गोत्रअ० प्रेतद्वितीयेहनिकर्णाक्षिमुखनासिकानिष्पत्त्यर्थंएषतेदेहपूरकःपिण्डोमयादीयतेअयंते ॥ अनेनपिण्डेनयान्यंगानि-संपद्यंतेतान्यंगानिसंपद्यन्ताम् ॥ ( स्त्रियाश्चेत् गोत्रेअ० प्रेते ) प्रत्यवनेजनम्-अ० गोत्रअ० प्रेतपिण्डोपरिप्र-

त्यवनेजनंमयादीयतेइदन्ते ॥ शेषंपिण्डपूजनादिप्रथमदिनवत्कृत्वाञ्जलिदानम्–ॐप्रजापतौत्वेतिमन्त्रेण-
पिण्डेऽञ्जलिदानं ॥ अ०गोत्रअ०प्रेतदाहजनिततृषोपशमनार्थंपिण्डस्योपरिएषदुग्धतिलतोयाञ्ज-
लिर्मयादीयतेअयंते ॥ द्वितीयेह्निअञ्जलिसंख्या २ शेषोदकेनअक्रन्कर्मेत्यादिवेदोक्तमन्त्रैःपौराणिकमन्त्रैश्चपिण्डोपरि-
धारांदत्त्वागोग्रासंसंकल्पंकुर्यात् ॥ ततअशुचिनिवृत्यर्थंशुचित्वप्राप्त्यर्थं प्रथमदिनवत्गर्ततैलकल्कोदकःकार्यः॥ अद्यपूर्वो०
द्वितीयदिवसनिमित्तंअवयव०मस्तु॥पिण्डोद्धरणादिशेषंप्रथदिनवत्विधायस्नायात्॥इतिद्वितीयदिनकृत्यम्॥

अथतृतीयदिनकृत्यम्–उपहारान्गृहीत्वातीर्थेगत्वाशेषंद्वितीयदिनवत्कृत्वा ॥ आचम्यतूष्णींप्राणा-
नायम्य ॥ दक्षिणाभिमुखउपविश्य ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रस्यअ० प्रेतस्यतृतीयेहनिग्रीवाभु-
जवक्षोनिष्पत्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशवटस्थापनम्–कुशोसि० ॥ १ ॥ इमंलोकं० ॥ २ ॥
इत्यभिमन्त्र्यप्रेतायपाद्यं, दिग्बंधनं, जलाभिमन्त्रणं, पाकप्रोक्षणान्तंविधायप्रेतपूजनंकुर्यात् ॥ अद्यपूर्वो० अपसव्यंअ०
गोत्रस्यअ० प्रेतस्यतृतीयेहनिग्रीवाभुजवक्षोनिष्पत्त्यर्थंप्रेतपूजनंकरिष्ये ॥ इतिसङ्कल्प्यपूजनंविधाय ॥
अद्यपूर्वो० अ० गोत्रस्यअ० प्रेतस्यतृतीयेहनिग्रीवाभुजवक्षोनिष्पत्त्यर्थंपिण्डदानंकरिष्ये ॥ तूष्णीं-
रेखाकरणम् ॥ अवनेजनम्–अ० गोत्रअ० प्रेततृतीयेहनिग्रीवाभुजवक्षोनिष्पत्त्यर्थंपिण्डस्थानेअव-

नेजनमिदन्ते ॥ दक्षिणाग्रकुशास्तरणम् ॥ पिण्डदानम्—अ० गोत्रअ० प्रेततृतीयेहनिग्रीवाभुजवक्षोनिष्प-त्यर्थंएषतेदेहपूरकःपिण्डोमयादीयतेअयंते ॥ अनेनपिण्डेनयान्यंगानिसंपद्यंतेतान्यंगानिसंपद्यंताम् ॥ ( ( स्त्रियाश्चेत्गोत्रेअ० प्रेते ) प्रत्यवनेजनम्—अ० गोत्रअ० प्रेतपिण्डोपरिप्रत्यवनेजनंमयादीयतेइदन्ते ॥ शेषंपिण्डपूजनादिप्रथमदिनवत्कृत्वाञ्जलिदानम्—ॐप्रजापतेत्वेतिमन्त्रेणपिण्डेऽञ्जलिदानं ॥ अ० गोत्रअ० प्रेतदाहजनिततृषोपशमनार्थंपिण्डस्योपरिएषदुग्धतिलतोयाञ्जलिर्मयादीयतेअयंते ॥ तृतीयेह्नि-अञ्जलिसंख्या ५, शेषोदकेनअकन्कर्मेत्यादिवेदोक्तमन्त्रैःपौराणिकमन्त्रैश्चपिण्डोपरिधारांदत्त्वागोग्रासंसंकल्पंकुर्यात् ॥ ततअशुचिनिवृत्त्यर्थंशुचित्वप्राप्त्यर्थं प्रथमदिनवत्गर्तेतैलकल्कोदकः कार्यः ॥ अद्यपूर्वो० तृतीयदिवसनिमित्तंअवयव० मस्तु ॥ पिण्डोद्धरणादिशेषंप्रथमदिनवत्विधायस्नायात् ॥ इतितृतीयदिनकृत्यम् ॥

अथचतुर्थदिवसेऽस्थिसंचयनंकार्यम् ॥ तत्रघटदुग्धतिलकुशहारिद्रवस्त्रपर्णवृंतखनित्रयक्षकर्दमशैवालजल-

---

१ रेणुः—प्रथमेह्नितृतीयेवासप्तमेनवमेतथा ॥ अस्थिसंचयनंकुर्यादिवातद्गोत्रजैःसह ॥ चतुर्थेवातृतीयेवादाहादित्याश्वलायनः ॥ एकाहेसंचयेऽस्थ्नान्तुत्र्यहंतत्सूतकंभवेत् ॥ सद्यःशौचेतथैकाहेसद्यःसंचयनंभवेत् ॥ त्र्यहाशौचेद्वितीयेह्निचतुर्थेवाग्निहोत्रिणां ॥ काठकश्रुतिरित्याह्व्यवस्थामस्थिसंचयइति ॥ छन्दोगपरिशिष्टे—अपरेद्युस्तृतीयेवाअस्थिसंचयनंभवेदिति । अपरेद्युर्मृताहात् ( द्वितीयेऽह्नीत्यर्थः । ) कात्यायनः—संचयनंचतुर्थ्यामिति । तत्रादावस्थिसंचयनश्राद्धं । कात्यायनः । अयुग्मान्ब्राह्मणान्भोजयित्वापलाशवृंतेनास्थीनिपरिवर्त्यांगुष्ठकनिष्ठिकाभ्यामादायपलाशपुटेप्रास्यतीति ॥ रेणुः—यथोक्तकालेपूर्वाह्णेएकोद्दिष्टविधानतः ॥ सकुर्यात्संचयश्राद्धमित्याहहारिणीसुतइति ॥

पात्रघृतनित्यश्राद्धसामग्रीसहितःश्मशानंगच्छेत् ॥ स्नात्वाप्रेतकृत्यंकुर्यात् ॥ आचम्यतूष्णींप्राणानायम्य ॥ कुशोपग्रहः ॥ दक्षिणाभिमुखउपविश्य ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअ०प्रेतस्यउत्तमलोकप्राप्त्यर्थंअस्थिसंचयनकर्माहंकरिष्ये ॥ तत्रात्रिप्रभृतीनयुग्मान्ब्राह्मणान्भोजयिष्ये ॥ ततःपलाशवटादिपर्णंत्रंतभस्मगुप्तान्यस्थीनिप्रकटानिकृत्वांगुष्ठकनिष्ठिकाभ्यांतान्यस्थीनिगृहीत्वापलाशपुटेपत्रपुटादौवाक्षिपेत् ॥ तत्रपत्रपुटस्थानामस्थ्नामाज्येनाभ्यंजनं ॥ मध्येशैवालयक्षकर्दमप्रक्षेपः ॥ कर्पूरागरुचन्दनकस्तूरिकाकेसरादिसुरभिद्रव्यैरन्यैर्वा ॥ सर्वाभावेआज्यं ॥ ततआग्नेयीदिगभिमुखकोणंगर्त्तंखात्वाहारिद्रवस्त्रखण्डंतत्रास्तीर्यतत्र "वाक्" इत्यनेनमन्त्रेणअस्थीनिप्रक्षिपेत् ॥ यदासद्यःकरिष्यन्तदाकुंभेस्थिसंचयनंकरोति ॥ नगर्ते ॥ एतद्वाजसनेयीशाखिनामित्यर्थः ॥ गर्तपूरणं ॥ गर्तोपरिदुग्धसेचनं ॥ सव्यं ॥ अप्रदक्षिणंचिताभूमिंकृत्वा ॥ पृष्ठतःअनवलोकयन्तःस्नानार्थंजलाशयंगच्छेयुः ॥ अस्थिसंचयनंतृतीयदिनेवा ॥ इतिअस्थिसंचयनंसमाप्तम् ॥

अथचतुर्थदिनकृत्यम् ॥ उपहारान्गृहीत्वातीर्थेगत्वाशेषंप्रथमदिनवत्कृत्वा ॥ अद्यपूर्वो०अपसव्यंअ० गोत्रस्यअ०प्रेतस्यचतुर्थेऽहनिउदरनाभिलिङ्गगुदकटिपृष्ठनिष्पत्त्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशवटस्थापनं, पाद्यादिकरणं, दिग्बंधनं, जलाभिमन्त्रणं, पाकप्रोक्षणान्तंविधायप्रेतपूजनंकुर्यात् अद्यपूर्वो० अ० गो० अ०प्रे०चतुर्थेऽहनिउदरनाभि०त्यर्थंप्रेतपूजनंक० ॥ इतिसंकल्प्यपूजनंविधाय ॥ अद्यपूर्वो०अ०गो०

अ० प्रे० चतुर्थेऽहनिउदरनाभि० त्यर्थंपिण्डदानंक० ॥ तूष्णींरेपाकरणम् ॥ अवनेजनम्—अ० गोत्रअ० प्रेतचतुर्थेऽहनिउदरनाभिलिङ्गगुदकटिपृष्ठनिष्पत्यर्थंपिण्डस्थानेअवनेजनमिदन्ते ॥ दक्षिणाग्रंकुशास्तरणम् ॥ पिण्डदानम्—अ० गोत्रअ० प्रेतचतुर्थेऽहनिउदरनाभिलिङ्गगुदकटिपृष्ठनिष्पत्यर्थंएषतेदेहपूरकःपिण्डोमयादीयतेअयंते ॥ अनेनपिण्डेनयान्यंगानिसं० तान्यं० ॥ प्रत्यवनेजनम्—अ० गोत्रअ० प्रेतपिण्डोपरिप्रत्यवनेजनंमया० इदन्ते ॥ शेषंपिण्डपूजनंविधाय—प्रजापतेत्वेतीमन्त्रेणपिण्डेऽञ्जालेदानं ॥ अ० गोत्रअ० प्रेतदाहजनिततृषो० अयंते ॥ चतुर्थेह्निअञ्जलिसंख्या ७ शेषोदकेनअक्रन्कर्मेत्यादिमन्त्रैः पिण्डोपरिधारांदत्वागोग्रासंसंकल्पंकुर्यात् ॥ ततअशुचिनिवृत्यर्थंशुचित्वप्राप्त्यर्थंप्रथमदिनवत्गंर्ततैलकल्कोदकः कार्यः अद्यपूर्वो० चतुर्थदिवसनिमित्तंअवयव० मस्तु पिण्डोद्धरणादिशेषंप्रथमदिनवत्विधायस्नायात् ॥ इतिचतुर्थदिनकृत्यम् ॥

॥ अथपञ्चमदिनकृत्यम् ॥

उपहारान्गृहीत्वातीर्थेगत्वाशेषंप्रथमदिनवत्कृत्वा ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रस्यअ० प्रेतस्यपञ्चमेऽहनिऊरुजानुजंघापादावयवनिष्पत्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशवटस्थापनादिसर्वंप्रथमदिनवत्कृत्वाप्रेतपूजनंकुर्यात् ॥ अद्यपूर्वो० अ० गो० अ० प्रे० पञ्चमेऽहनिऊरुजानुजंघापादावयवनिष्पत्यर्थंप्रेतपू० ॥ इतिसङ्कल्प्यपूजनंविधाय ॥ अद्यपूर्वोअ० गो०

अ०प्रे०पञ्चमेऽहनिऊरुजानु०त्यर्थंपिण्डदानंक० ॥ शेषंपूर्ववत् ॥ अवनेजनम्–अ०गोत्रअ०प्रेतपञ्चमे
हनिऊरुजानु०त्यर्थंपिण्डस्थानेअवनेजनमिदन्ते ॥ शेषंपूर्ववत् ॥ पिण्डदानम्–अ० गोत्रअ०प्रेतपञ्च-
मेऽहनिऊरुजानु०त्यर्थंएषतेदेहपू०मया०अर्यंते ॥ अनेनपिण्डेनया०तान्यं० ॥ प्रत्यवनेजनम्–
अ०गोत्रअ०प्रेतपिण्डोपरिप्रत्यवनेजनंमया०इदन्ते ॥ शेषंप्रथमदिनवत्पिण्डपूजनंविधायप्रजापतेत्वेतिम
न्त्रेणपिण्डेऽञ्जलिदानंकुर्यात् ॥ अ०गोत्रअ०प्रेतदाहजनिततृषो०अर्यंते ॥ पञ्चमेह्निअञ्जलिसंख्या ९ शेषोदके-
नअक्रन्कर्मेत्यादिमन्त्रैःपिण्डोपरिधारांदत्त्वागोग्राससंकल्पंकुर्यात् ॥ ततअशुचित्वनिवृत्त्यर्थंशुचित्वप्राप्त्यर्थंअ०॥
प्रथमदिनवत्गर्तेतैलकल्कोदकःकार्यः ॥ अद्यपूर्वो०पञ्चमदिवसनिमित्तंअवयव०मस्तु ॥ पिण्डोद्धरणादिशेषंपू-
र्ववत्कृत्वा स्नायात् ॥ इतिपञ्चमदिनकृत्यम् ॥

अथषष्ठदिनकृत्यम् ॥ उपहारान्गृहीत्वातीर्थेगत्वाशेषंपूर्ववत्कृत्वा ॥ अद्यपूर्वो०अपसव्यंअ०गोत्रस्य
अ०प्रेतस्यषष्ठेऽहनिदन्तरोमनखत्वक्वीर्यनिष्पत्त्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशचटस्थापनादिसर्वं-
प्रथमदिनवत्कृत्वाप्रेतपूजनंकुर्यात् ॥ अद्यपूर्वो०अ०गो०अ०प्रे०षष्ठेऽहनिदन्तरोम०त्यर्थंप्रेतपू० ॥ इतिसंक-
ल्प्यपूजनंविधाय ॥ अद्यपू०अ०गो०अ०प्रे०षष्ठेऽहनिदन्तरोम०त्यर्थंपिण्डदानंकरिष्ये ॥ शेषंपूर्ववत् ॥

अवनेजनम्–अ० गोत्रअ० प्रेतषष्ठेऽहनिदन्तरोम० त्यर्थंपिण्डस्थानेअवनेजनमिदन्ते ॥ शेषंपूर्ववत् ॥ पिण्डदानम्–अ० गोत्रअ० प्रेतषष्ठेऽहनिदन्तरोम० त्यर्थंएषतेदेहपू० मया० अयंते ॥ अनेनापिण्डेन या० तान्यं० ॥ प्रत्यवनेजनम्–अ० गोत्रअ० प्रेतपिण्डोपरिप्रत्यवनेजनंमया० इदन्ते ॥ शेषंप्रथमदिनवत्पिण्डपूजनंविधायप्रजापतीत्वेतिमन्त्रेणपिण्डेऽञ्जलिदानंकुर्यात् ॥ अ० गोत्रअ० प्रेतदाहजनिततृषो० अयंते ॥ षष्ठेह्निअञ्जलिसंख्या ११ शेषंपूर्ववत् ॥ अद्यपूर्वो० षष्ठदिवसनिमित्तमवयव० मस्तु ॥ पिण्डोद्धरणादिशेषंप्रथमदिनवत्कृत्वास्नायात् ॥ इतिषष्ठदिनकृत्यम् ॥

अथसप्तमदिनकृत्यम् ॥ उपहारान्गृहीत्वातीर्थेगत्वाशेषंपूर्ववत्कृत्वा ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रस्यंअ० प्रेतस्यसप्तमेऽहनिरुधिरमांसास्थिमज्जाशिरावयवनिष्पत्त्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशचटस्थापनादिसर्वंप्रथमदिनवत्कृत्वाप्रेतपूजनंकुर्यात् ॥ अद्यपूर्वो० अ० गो० अ० प्रे० सप्तमेऽहनिरुधिरमां० त्यर्थंप्रेतपू० ॥ इतिसंकल्प्यपूजनंविधाय ॥ अद्यपूर्वोअ० गो० अ० प्रे० सप्तमेऽहनिरुधिरमां० त्यर्थंपिण्डदानंक० ॥ शेषंपूर्ववत् ॥ अवनेजनम्–अ० गोत्रअ० प्रेतसप्तमेऽहनिरुधिरमां० त्यर्थंपिण्डस्थानेअ० मि० ॥ शेषंपूर्ववत् ॥ पिण्डदानम्–अ० गोत्रअ० प्रेतसप्तमेऽहनिरुधिरमां० त्यर्थंएषतेदेहपू० मया० अ० ॥

अनेनपिण्डेनमया० तान्यं० ॥ प्रत्यवनेजनम्-अ०गोत्रअ०प्रे०पिण्डोपरिप्रत्यवनेजनमया०इदन्ते । शेषंप्रथमदिनवत्पिण्डपूजनंविधायप्रजापतीत्वेतिमन्त्रेणपिण्डेऽञ्जलिदानंकुर्यात् ॥अ०गो०अ०प्रेतदाहजनिततृषो० अ० ॥ सप्तमेह्निअञ्जलिसंख्या १२ शेषंपूर्ववत् ॥ अद्यपूर्वो०सप्तमदिवसानि०अ०मस्तु ॥ पिण्डोद्धरणादिशेषंपूर्ववत्कृत्वास्नायात् ॥ इतिसप्तमदिनकृत्यम् ॥

अथाष्टमदिनकृत्यम् ॥ उपहारान्गृहीत्वातीर्थंगत्वाशेषंपूर्ववत्कृत्वा ॥ अद्यपूर्वो०अपसव्यंअ०गो० अ०प्रेतस्याष्टमेऽहनिसर्वममोवयवपादाङ्गुलिनिष्पत्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशचटस्थापनादिसर्वंप्रथमदिनवत्कृत्वाप्रेतपूजनंकुर्यात् ॥ अद्यपूर्वो०अ०गो०अ०प्रे० अष्टमेऽहनिसर्वममोवयवपा० त्यर्थं प्रेतपू० ॥ इतिसंकल्प्यपूजनंविधाय ॥ अद्यपूर्वो०अ०गो०अ०प्रे०अष्टमेऽहनिसर्वममोवयवपा०त्यर्थंपिण्डदानंक० ॥ शेषंपूर्ववत् ॥ अवनेजनम्-अ०गो०अ०प्रे०अष्टमेऽहनिसर्वममोवयवपा०त्यर्थंपिण्डस्थानेअवनेजनमिदन्ते ॥ शेषंपूर्ववत् ॥ पिण्डदानम्-अ०गो०अ०प्रे०अष्टमेऽहनिसर्वममोवयवपादा० त्यर्थंएषतेदेहपू०मयाअ० ॥ अनेनपिण्डेनमया०तान्यं० ॥ प्रत्यवनेजनम्-अ०गो०अ०प्रे०पिण्डोपरिप्रत्यवनेजनमया०इ० शेषंप्रथमदिनवत्पिण्डपूजनंविधायप्रजापतीत्वेतिमन्त्रेणपिण्डेऽञ्जलिदानंकुर्यात् ॥ अ०

गो० अ० प्रे० दाहजनिततृषो० अ०॥ अष्टमेह्निअञ्जलिसंख्या १५ शेषंपूर्ववत् ॥ अद्यपूर्वो० अष्टमदिवसनि०
अव० मस्तु ॥ पिण्डोद्धरणादिशेषंपूर्ववत्कृत्वास्नायात् ॥ इत्यष्टमदिनकृत्यम् ॥ अथनवमदिनकृत्यम् ॥
उपहारान्गृहीत्वातीर्थेगत्वाशेषंपूर्ववत्कृत्वा ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रस्य० अ० प्रेतस्यनवमेऽह्निस-
र्वाङ्गसंपूर्णावयवनिष्पत्त्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशचट्वादिसर्वंप्रथमदिनवत्कृत्वाप्रेतपूजनंकुर्यात् ॥
अद्यपूर्वो० अ० गो० अ० प्रे० नवमेऽह्निसर्वाङ्गसम्पूर्णा० त्यर्थंप्रेतपू०॥ इतिसंकल्प्यपूजनंविधाय ॥ अद्य-
पूर्वो० अ० गो० अ० प्रे० नवमेऽह्निसर्वाङ्गसम्पूर्णा० त्यर्थंपिंडदानंक० ॥ शेषंपूर्ववत् ॥ अवनेजनम्-
अ० गोत्र० अ० प्रेतनवमेऽह्निसर्वाङ्गसम्पूर्णा० त्यर्थंपिंडस्थानेअ० मि० शेषंपूर्ववत् ॥ पिण्डदानम्-अ०
गो० अ० प्रे० नवमेऽह्निसर्वाङ्गसम्पूर्णा० त्यर्थंएषतेदेहपू० मया० अ०॥ अनेनपिण्डेनया० तान्यं०॥
३० प्रत्यवनेजनम्-अ० गो० अ० प्रे० पिण्डोपरिप्रत्य० मया० इ० ॥ शेषंप्रथमदिनवत्पिण्डपूजनंविधायप्रजापतीत्वे-
तिमन्त्रेणपिण्डेऽञ्जलिदानंकुर्यात् ॥ अ० गो० अ० प्रे० दाहजनिततृषो० अ० ॥ नवमेह्निअञ्जलिसंख्या १७ शेषं-
पूर्ववत् ॥ अद्यपूर्वो० नवमदिवसनि० अव० मस्तु ॥ पिण्डोद्धरणादिशेषंपूर्ववत्कृत्वास्नायात् ॥ इतिनवम-
दिनकृत्यम् ॥ ॥ अथदशमदिनकृत्यम् ॥ उपहारान्गृहीत्वातीर्थेगत्वाशेषंपूर्ववत्कृत्वा ॥ अद्यपूर्वो०

अपसव्यंअ० गोत्रस्यअ० प्रेतस्यदशमेऽहनिक्षुत्पिपासानिष्पत्त्यर्थंअवयवश्राद्धमहंकरिष्ये ॥ कुशचटस्थापनादिसर्वंप्रथमदिनवत्कृत्वाप्रेतपूजनंकुर्यात् ॥ अद्यपूर्वो० अ०गो०अ०प्रे० दशमेऽहनिक्षुत्पिपासानिष्पत्त्यर्थंप्रेतपूजनंक०॥ इतिसङ्कल्प्यपूजनंविधाय ॥ अद्यपूर्वो०अ०गो०अ०प्रे० दशमेऽहनिक्षुत्पिपासानिष्पत्त्यर्थंपिण्डदानंक० ॥ शेषंपूर्ववत् ॥ अवनेजनम्–अमुक गोत्र अमुक प्रेतदशमेऽहनिक्षुत्पिपासानिष्पत्त्यर्थंपिण्डस्थानेअव० मि० ॥ शेषंपूर्ववत् ॥ पिण्डदानम्–अमुक गोत्र अमुक प्रेतदशमेऽहनिक्षुत्पिपासानिष्पत्त्यर्थं एषतेदेहपूरकः पिंडोमयादीयते अयंते ॥ अनेनपिंडेन यान्यंगानि संपद्यन्ते तान्यंगानि संपद्यन्ताम् ॥ प्रत्यवनेजनम्–अमुक गोत्र अमुक प्रेत पिण्डोपरिप्रत्यवनेजनंमया०इ० ॥ शेषंप्रथमदिनवत्पूजनंविधायप्रजापतीत्वेतिमन्त्रेणपिण्डेऽञ्जलिदानंकुर्यात् ॥ अ०गो०अ०प्रे० दाहजनिततृषो०अ०॥ दशमेह्निअञ्जलिसंख्या १९ शेषंपूर्ववत् ॥ अद्यपूर्वो०दशमदिवसनि०अव०मस्तु० ॥ पिण्डोद्धरणादिशेषंपूर्ववत्कृत्वास्नायात् ॥ इतिदशमदिनकृत्यम् ॥ ॥५५॥

॥ अथएकतन्त्रेणदशाहश्राद्धप्रयोगः ॥ ( दशमदिनेउपहारान्गृहीत्वातीर्थेगत्वाभूमिंप्रोक्ष्यगोमयेनोपलेपयेत् ॥ स्नात्वाचरु-

१ दशमेदिवसेक्षौरंबान्धवानांसमुण्डनम् ॥ क्रियाकर्तासुतश्चापिपुनर्मुण्डनमाचरेत् ॥ कालस्यातिक्रमेजातेदशमेहनिकारयेत् ॥ *

[illegible] ॥ ) आचम्यतूष्णींप्राणानायम्य ॥ कुशोपग्रहः ॥ बद्धशिखः ॥ दक्षिणाभिमुखउपवि-
श्यतीर्थस्मरणंकृत्वा ॥ अद्यपूर्वो०तिथौ० अपसव्यंअ० गोत्रस्यअ० प्रेतस्य ( स्त्रियाश्चेत्गोत्रायाःप्रेतायाः )
प्रथमदिनमारभ्यदशाहपर्यन्तंशीर्षादिक्षुत्पिपासान्तावयवनिष्पत्त्यर्थंदशाहेऽवयवश्राद्धमेकतन्त्रे
णाहंकरिष्ये ॥ कुशचरस्थापनं ॥ कुशबटुंस्पृष्ट्वाभिमन्त्रणम्–कुशोसित्वंपवित्रोसिब्रह्मणानिर्मितःपुरा ॥
त्वयिस्नातेनसुस्नातोयस्यैतद्ग्रंथिबन्धनम् ॥ १ ॥ इमंलोकंपरित्यज्यगतोसिपरमांगतिम् ॥ मन-
सावायुरूपेणचटेत्वाहंनिमन्त्रये ॥ २ ॥ अ०गोत्रअ०प्रेतपाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽ

---

* एकतन्त्रेणपिण्डांस्तानेकपाकैककालिके ॥ दशाहमध्येदर्शपातेनिर्णयः ॥ धर्माब्धौ–पिण्डदानादौप्रारब्धेयदिमध्येदर्शप्राप्तिस्तदामातापितृव्य-
तिरिक्तानांसर्वंदशाहकृत्यमाकृष्यदर्शएवसमापनीयं ॥ मातापितृविषयेतुत्र्यहमध्येदर्शपाते, नापकर्षः ॥ त्रिरात्रात्परंदर्शपातेतुपित्रोरपिसर्वंदर्श-
एवसमापनीयमितिकेचित ॥ अन्येतुत्रिरात्रोर्ध्वमपिदर्शपातेऔरसपुत्रेणपित्रोस्तंत्रसमाप्तिर्नकार्येत्याहुः ॥ अत्रदेशाचाराद्व्यवस्थाइतिसिंध्वादयः॥
यदिदैवाद्दर्शात्पूर्वंपिण्डदानादितंत्रंनारब्धंतदादाहमात्रेसमंत्रकेजातेपिनदर्शेतंत्रसमाप्तिनियमइतिभाति ॥ दर्शोत्तरमेवतंत्रारंभसमाप्तिसंभवेन
" द्विर्ददवेतुकुर्वाणः पुनःशावंसमश्नुत " इत्युक्तदोषाप्रसक्तेः ॥ एवंदर्शेऽपकृष्यतंत्रसमाप्तावपिअग्निपिण्डदातुर्दशाहमाशौचमस्त्येव ॥ पुत्रादेः
सपिण्डस्यतुसुतरामितिदशाहमध्येदर्शपातेनिर्णयः ॥ असगोत्रःसगोत्रोवायदिस्त्रीयदिवापुमान् ॥ प्रथमेहनियोदद्यात्सदशाहंसमापयेत् ॥
भ्राताचाभ्रातृपुत्रोवासपिण्डःशिष्यएववा ॥ प्रथमेहनि० ॥ अमुकगोत्रःसगोत्रोवानारीवापुरुषोपिवा ॥ प्रथमेहनि० ॥ शालिनासक्तुभिर्वा-
पिशाकैर्वाप्यथनिर्वपेत् ॥ प्रथमेहनियद्द्रव्यंतदेवस्याद्दशाहिकं ॥ दशाहिकाःपिण्डाःएकेनकर्त्राएकस्मिन्देशेएकेनैवद्रव्येणदेयाः ॥

र्घः इदमत्रचंदनंपुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादौप्रक्षाल्य ॥ सव्यं ॥ आचमनं ॥ दिग्बन्धः–
ऐंद्र्यांनारायणोरक्षेदाग्नेयांचजनार्दनः ॥ दक्षिणस्यांपुण्डरीकाक्षःपद्मनाभस्तुनैर्ऋतौ ॥ प्रती-
च्यांचैवगोविंदोवायव्यांमधुसूदनः ॥ उदीच्यांमाधवोरक्षेदैशान्यांपुरुषोत्तमः ॥ ऊर्ध्वंगोवर्द्ध-
नोरक्षेदधस्ताच्चत्रिविक्रमः ॥ एवंदशदिशोरक्षेत्केशवःसर्वरक्षकः ॥ इतिमन्त्रेणदिग्बन्धः ॥ अपवित्रः
पवित्रोवासर्वावस्थांगतोपिवा ॥ यःस्मरेत्पुण्डरीकाक्षंसबाह्याभ्यन्तरःशुचिः ॥ इतिसर्वाङ्गंमार्जयेत्
भूमौदर्भासनंतस्योपरिपात्रंनिधायजलपूरणम् ॥ तन्मध्येतिलयवचंदनपुष्पदुग्धतुलसीदलानिप्रक्षिप्यकर्मार्थेजलाभिमन्त्रणम् ॥
यद्देवेतितिसृणांकूष्माण्डऋषिःगायत्र्युष्णिगनुष्टुप्छन्दांसिअग्निवायुसूर्यदेवतास्तिलोदककरणे-
विनियोगः ॥ तज्जलस्यदर्भेणालोडनम्–ॐयद्देवादेवहेडनंदेवासश्चकृमावयम् ॥ अग्निर्मातस्मादेनसो
विश्वान्मुञ्चत्वꣳहसः ॥ १ ॥ यदिदिवायदिनक्तमेनाꣳसिचकृमावयम् ॥ वायुर्मातस्मादेनसो
विश्वान्मुञ्चत्वꣳहसः ॥ २ ॥ यदिजाग्रद्यदिस्वप्नऽएनाꣳसिचकृमावयम् ॥ सूर्य्योमातस्मादेन-
सोविश्वान्मुञ्चत्वꣳहसः ॥ ३ ॥ अपसव्यं ॥ उदक्यादिशूद्रसूकरश्वानकुक्कुटमार्जारादिदुष्टदृष्टि-
निपातदूषितानांपाकादिद्रव्योपहाराणांपवित्रतास्तु ॥ सव्यं ॥ देशकालपाकपात्रान्नद्रव्यश्रद्धा-



॥५६॥

संपदस्तु ॥ सर्वेपाकाःसर्वेउपहाराःशुभयोभवन्तु ॥ अथपूर्वो० अपसव्यंअ० गोत्रस्यअ० प्रेतस्य प्रथमदिनमारभ्यदशाहपर्यन्तंप्रेतपूजनंकरिष्ये ॥ अ० गोत्रायअ० प्रेतायआसनमिदन्ते ॥ अ० गो० अ० प्रे० अर्चनमिदन्ते ॥ अस्यार्चनविधेःपरिपूर्णतास्तु ॥ अस्तुपरिपूर्णता ॥ इदमर्चितंवो-ज्योतिःसूर्योज्योतिःसूर्यायपुष्पंशेषोपचाराःसम्पूर्णाविधिवद्भवन्तु ॥ सव्यं ॥ आचमनं ॥ अपसव्यंअ० गो० अ० प्रे० भोजनमिदन्ते ॥ अ० गो० अ० प्रे० मुखवासताम्बूलंसहिरण्यमिदन्ते॥ अथपूर्वो० अ० गोत्रस्यअ० प्रेतस्यदशमेऽहनिशीर्षादिक्षुत्पिपासावयवनिष्पत्त्यर्थंअवयवपिण्डदानंकरिष्ये ॥ तूष्णींरेखाकरणम् ॥ अवनेजनम्-अ० गोत्रअ० प्रेतदशमेहनिशीर्षादिक्षुत्पिपासान्तावयवनिष्पत्त्यर्थंपिण्डस्थानेअवनेजनमिदन्ते ॥ दक्षिणाग्रंकुशास्तरणम् ॥ पिण्डदानम्-अमुकगोत्रअमुक-प्रेतप्रथमेहनिमूर्द्धाद्यवयवसंभूत्यैएषतेदेहपूरकःपिण्डोमयादीयतेअयन्ते[1] ॥ अनेनपिण्डेनया-न्यंगानिसंपद्यंतेतान्यंगानिसंपद्यन्ताम् ॥ १ ॥ (स्त्रियाश्चेत्गोत्रेअमुकप्रेते) अमुकगोत्रअमुकप्रेताद्वि-तीयेऽहनिकर्णाक्षिमुखनासिकाद्यवयवसंभूत्यैएषतेदेहपूरकःपिण्डोमयादीयतेअयन्ते ॥ अनेन-

---

१ तिलाअन्नंच पानीयंगन्धंपुष्पंपयस्तथा ॥ मधुसर्पिःसमायुक्तंपिण्डमष्टाङ्गमुच्यते ॥ २ उपतिष्ठतामितिशेषः ॥

 पिण्डेनयान्यंगानिसंपद्यन्तेतान्यंगानिसंपद्यन्ताम् ॥ २ ॥ अ०गो०अ०प्रे० तृतीयेऽहनिग्रीवा- 
भुजवक्षसाद्यवयवसंभूत्यैएषतेदेहपूरकःपिण्डोमयादीयतेअयन्ते ॥ अनेनपिण्डेनयान्यंगानि-
 संपद्यन्तेतान्यंगानिसंपद्यन्ताम् ॥ ३ ॥ अ०गो०अ०प्रे०चतुर्थेऽहनिउदरनाभिलिङ्गगुदकटीपृ-
ष्ठाद्यवयवसं०एषतेदे०पि०मया० ॥ अनेनपिण्डेनया० ॥ ४ ॥ अ०गो०अ०प्रे०पञ्चमेहनिऊ-
रूजानुजंघापादाद्यवयवसं०एषतेदे०पि०मया० ॥ अनेनपिण्डेनया० ॥ ५ ॥ अ०गो०अ०प्रेत-
षष्ठेहनिदन्तरोमनखत्वचाद्यवयवसं०ए०दे०पि०मया० ॥ अनेनपिण्डेनया० ॥ ६ ॥ अ०गो०
अ०प्रे०सप्तमेहनिरुधिरमांसास्थिमज्जाशिराद्यवयवसं० ए०दे०पि०मया० ॥ अनेनपिण्डेनया०
॥ ७ ॥ अ०गोत्र०अ०प्रे०अष्टमेहनिसर्वमर्मपादांगुलिसत्ववीर्याद्यवयवसं०ए०दे०पि०मया० ॥
अनेनपिण्डेनया० ॥ ८ ॥ अ०गो०अ०प्रे०नवमेहनिसर्वाङ्गसंपूर्णावयवसं०ए०दे०पि०मया० ॥
अनेनपिण्डेनया० ॥ ९ ॥ अ०गो०अ०प्रे०दशमेहनिक्षुत्पिपासादिसं०ए०दे०पि०मया० ॥ ॥५७॥
अनेनपिण्डेनयान्यंगानिसंपद्यन्तेतान्यंगानिसंपद्यन्ताम् ॥ १० ॥ अ०गो०अ०प्रे०पिण्डोपरि-
प्रत्यवनेजनंमयादीयतेइदन्ते ॥ हस्तप्रक्षालनम् ॥ अ०गो०अ०प्रे०ऊर्णासूत्रंमयादीयतेइदन्ते ॥

अ०गो०अ०प्रे०उशीरचंदनंमया०इ० ॥ अ०गो०अ०प्रे०भृंगराजपुष्पंमया०इ० ॥ अ०गो०अ०प्रे०रालधूपोमया० ॥ अ०गो०अ०प्रे०एषदीपोमया० ॥ अ०गो०अ०प्रे०द्राक्षानैवेद्यंमया-इ० ॥ अ०गो०अ०प्रे०पूगीफलंमया०इ० ॥ पिण्डस्यार्चनविधेःपरिपूर्णतास्तु ॥ सव्यं ॥ आचमनं ॥ अपसव्यम् ॥ भोजनसंकल्पः—करिष्यमाणमेकब्राह्मणभोजनंवाआमान्नंयथाकाले अ०गोत्रायअ०प्रेतायक्षुधोपशमनार्थंमया०इदन्ते ॥ दक्षिणासंकल्पः—दास्यमानासूतकांतेलोह-निष्क्रयणीदक्षिणामया०इयन्ते॥ अनेनपिण्डदानेनप्रेतस्यसद्गतिःउत्तमलोकप्राप्तिः॥ ताम्रपात्रेज-लदुग्धतिलयवसर्वौषधिगन्धप्रक्षेपः ॥ अञ्जलिदानम्—ॐप्रजापतेत्वादेवतायामुपोदकेलोकेनिदधाम्यसौ ॥ अपनःशोशुचदघम् ॥१॥ (इतिमन्त्रेणप्रतिपिण्डेऽञ्जलिदानम्) प्रथमपिण्डे—अ०गोत्रअ०प्रेतदाहजनित-तृषोपशमनार्थंपिण्डस्योपरिएषदुग्धतिलतोयाञ्जलिर्मयादीयतेअयन्ते ॥ १ ॥ प्रतिपिण्डंएवंसर्वत्र ॥ द्वितीयपिण्डेअञ्जलिः ३॥ तृतीयपिण्डेअञ्जलिः ५॥ चतुर्थेपि०अं०७॥ पञ्चमपिं०अं०९॥ षष्ठपिं०अं० ११॥ सप्तमपिं०अं० १३॥ अष्टमपिं०अं०१५॥ नवमपिं०अं०१७॥ दशमपिण्डेअं०१९॥ एवमञ्जलीन्दत्वा ॥ शेषोदकेनपिण्डोपरिधारांकुर्यात्—ॐअकृन्कर्म्मकर्म्मकृतःसहवाचामयोभुवा ॥ देवेभ्यःकर्म्मकृत्वास्तम्प्रेतसचाभुवः ॥१॥ प्रेता-

जयंतानरऽइन्द्रोवृहःशर्म्मयच्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्यायथासथ ॥२॥ अनादिनिधनो-
देवःशङ्खचक्रगदाधरः ॥ अक्षय्यःपुण्डरीकाक्षःप्रेतमोक्षप्रदोभवेत् ॥१॥ अतसीपुष्पसंकाशंपी-
तवाससमच्युतम् ॥ येनमस्यन्तिगोविन्दंनतेषांविद्यतेभयम् ॥२॥ कृष्णकृष्णकृपालोत्वमगती-
नांगतिर्भव ॥ संसारार्णवमग्नानांप्रसीदपुरुषोत्तम ॥ ३ ॥ नारायणसुरश्रेष्ठलक्ष्मीकान्तवरप्रद ॥
अनेनतर्पणेनाथप्रेतमोक्षप्रदोभव ॥ ४ ॥ हिरण्यगर्भपुरुषव्यक्ताव्यक्तस्वरूपधृक् ॥ अस्यप्रेत-
स्यमोक्षार्थंसुप्रीतोभवसर्वदा ॥ ५ ॥ इतिपिण्डोपरिधारांदद्यात् ॥ गोग्राससंकल्पः—दास्यमानोगोग्रासः
अ०गोत्रायअ०प्रेतायमयादीयतेअयंते ॥ सव्यं ॥ अथपूर्वो० भवतांब्राह्मणानांवचनाच्छ्री-
तीर्थविष्णोःप्रसादाद्दशाहश्राद्धविधिःपरिपूर्णोऽस्तु ॥ अपसव्यं ॥ अभिरम्यतामितिपिण्डंविसर्जयेत् ॥
सव्यं ॥ पिण्डानुदकेगर्तेवाप्रक्षिप्य ॥ स्नायात् ॥ स्नानाशक्तौमन्त्रस्नानम् ॥ इतिएकतन्त्रेणदशाहश्राद्ध-
प्रयोगः ॥ ॥ अथशिशुमृतेक्रियाविधिः ॥ (तत्रादौगन्धपुष्पतुलसीतिलयवाक्षतादिक्रियासाम-

१ देवयाज्ञिकनिबन्धे—शिशुरादन्तजननाद्बालःस्याद्यावदाशिखः ॥ कथ्यतेसर्वशास्त्रेषुकुमारोमौञ्जिबन्धनात् ॥ आपञ्चवर्षात्कौमारः पौगण्डोनवहायनः ॥ बृहद्गारुडेप्रेतकल्पे—गरुडउवाच—मृतेबालेकथंकुर्यात्पिण्डदानादिकाःक्रियाः ॥ गर्भेषुचविपन्नानामाचूडाकरणाच्छिशोः*

र्थंगृहीत्वातीर्थेअश्वत्थसमीपेवागत्वाकर्मार्थंभूमिंसंमार्ज्योपकरणानिसंस्थाप्यस्नानंविधायतीर्थप्रयोगंकुर्यात् ) तद्यथा–स्नानंकृत्वाआचम्यप्राणानायम्य ॥ कुशपवित्रधारणम्–**ॐपवित्रेस्थो०** ( तीर्थेताम्रपात्रेवागन्धपुष्पतुलसीतिलयवाक्षतादीनिनिक्षिपेत् ) तीर्थप्रयोगः–तीर्थानिनमस्कृत्य ॥ **नमामिगङ्गे० ॥ पुष्कराद्यानि० ॥ १ ॥ श्रीपुष्करदेवतेएषतेऽर्घः ॥ तीक्ष्णदंष्ट्र० ॥२॥ श्रीभैरवदेवतेए० ॥ गङ्गागङ्गेतियो० ॥ ३॥ श्रीगङ्गेए० ॥ प्रभातेवहति० ॥ ४ ॥ श्रीनर्मदेए० ॥ अयोध्या० ॥ ५ ॥ श्रीअयोध्येए० ॥ गोमतीगो-**

---

* कथंकिन्तेम्योदातव्यंमृतान्तेकोविधिःस्मृतः ॥गरुडोक्तमितिश्रुत्वाविष्णुर्वाक्यमथाब्रवीत् ॥ विष्णुरुवाच–यदिगर्भोविपद्येतश्रवेत्तवापियोषितः॥ यावन्मासंस्थितोगर्भस्तावद्दिनमशौचकम् ॥ तस्यकिञ्चिन्नकर्तव्यमात्मनःश्रेयइच्छता ॥ ततोजातेविपन्नेतुआचूडाकरणाच्छिशोः ॥ दुग्धंभोज्यंयथाशक्तिबालानाञ्चप्रदीयते ॥ आचूडात्पञ्चवर्षेतुदेहदाहोविधीयते ॥ दुग्धंतस्यप्रदेयंस्याद्बालानांभोजनंशुभम् ॥ पञ्चवर्षाधिकेप्रेतेसजातिविहितानिच ॥ कुर्यात्कर्माणिसर्वाणिचोदकुंभादिपायसम् ॥ दातव्यन्तुखगश्रेष्ठऋणसंबंधकस्तुसः ॥ अङ्गुष्ठमात्रपुरुषोवायुभूतःक्षुधान्वितः॥ तस्माद्देयानिदानानिमृतेबालेसुनिश्चितम् ॥ जन्मतःपञ्चवर्षाणिभुक्तिदत्तमसंस्कृतम् ॥ तत्रैवपञ्चवर्षेपञ्चवर्षाधिकेविशेषः–पञ्चवर्षाधिकेबालेविपत्तिर्यदिजायते ॥ वृषोत्सर्गादिकंकर्मसपिण्डीकरणंविना ॥ द्वादशेहनिसंप्राप्तेकुर्याच्छ्राद्धानिषोडश ॥ पायसेनगुडेनापिपिण्डान्दद्याद्यथाक्रमम् ॥ उदकुंभप्रदानंचपददानानियानिच ॥ भोजनानिद्विजेदद्यान्महादानानिशक्तितः ॥ दीपदानादियत्किंचित्पञ्चवर्षाधिकेसदा ॥ कर्तव्यंचखगश्रेष्ठव्रतात्प्राक्प्रेततृप्तये ॥ यदानक्रियतेसर्वंमुद्गलत्वं ( पिशाचत्वं ) सगच्छति ॥ इत्यलंविस्तरेण ॥

मय० ॥ ६ ॥ श्रीगोमति० ॥ षष्ठीवर्ष० ॥ ७ ॥ श्रीगोदावरि० ॥ असीवरणयोर्मध्ये० ॥ ८ ॥ श्रीवाराणसि० ॥ तपत्यांरवि० ॥ ९ ॥ श्रीतपातिएषतेऽर्घः ॥ इतितीर्थप्रयोगंकृत्वा ॥ अद्यपूर्वो० तिथौ० ॥ अपसव्यं ॥ अ०गोत्रस्यअमुकशिशोः ( गोत्रायाःकन्यायाः ) क्षुधातृषादिदोषनिवारणार्थंसव्यंचतुर्थेऽह्निक्षीरोदकदानमहंकरिष्ये ॥ तत्रादौसूर्यार्घकरणपूर्वकंश्रीविष्णोःषोडशोपचारैः पूजांकरिष्ये ॥ इतिसंकल्प्यसूर्यार्घकरणादिन्यासपूर्वकंविष्णोःपूजादिकंविधायनूतनयज्ञोपवीतंधारयेत् ॥ यज्ञोपवीतंआपोहिष्ठेतितिभिः प्रक्षाल्यदशधागायत्र्याभिमन्त्र्यतन्तुदेवताआवाह्यगन्धपुष्पैरभ्यर्च्यसूर्यायप्रदर्श्ययज्ञोपवीतंपरमभितिमन्त्रेणधारयेत् ॥ ततआनीतानपक्वान्मृन्मयान्चतुरःकलशान्भूमौतिलयवाक्षतपुञ्जोपरिनिधायभूरसीत्यादिभिर्मन्त्रैर्यथासंभवंपूर्णपात्रान्तंकृत्वा ( तत्र-द्वौजलै-द्वौदुग्धैरापूर्य ) क्षीरोदकदानंकुर्यात् ॥ तद्यथाअपसव्यंअ०गोत्रस्यअ०शिशोः ( गोत्रायाःकन्यायाः ) क्षुधादोषनिवारणार्थंदुग्धदानंमयादीयतेइदन्ते ॥ ( इत्युक्त्वाद्वौकुंभौअश्वत्थमूलेनिषिञ्चेत् ) पुनश्चअ०गोत्रस्यअ०शिशोःतृषादोषनिवारणार्थंजलदानंमयादीयतेइदन्ते इत्युच्चार्यपूर्ववज्जलंनिषिञ्चेत् ॥ पुनर्जलमादाय-अ०गोत्रस्यअ०शिशोः( गोत्रायाःकन्यायाः )आप्यायनार्थंनानानामगोत्रेभ्यःशिशुभ्यः ( कन्याभ्यः ) पयःप्रथुकान्नादिभोजनंहिरण्यवस्त्रसहितंयत्कि-

थिदास्यैतत्पुण्यं अ० गोत्राय अ० शिशवे ( कन्यायै ) उपतिष्ठतु ॥ सर्व ॥ तुलसीपत्रंगृहीत्वायस्यस्मृत्येतिविष्णवेसमर्प्यतीर्थग्रहणं अकालमृत्यु० ॥ हस्तंप्रक्षाल्य ॥ आचार्याययथावैभवंदक्षिणांदत्वातेभ्यश्चआशिषंगृहीत्वाआनीतान्युपकरणानिगृहीत्वाविष्णुंस्मरन्गृहंगच्छेत् ॥ इतिशिशुमृतेक्रियाविधिः ॥

अथएकादशाहश्राद्धप्रयोगः ॥ ( सर्वोपहारान्गृहीत्वाब्राह्मणैः सहतीर्थंगत्वाशुद्धभूमिंप्रकल्प्यगोमयेनोपलेपनंश्राद्ध-

१ सद्यःशौचेऽपिदातव्यंप्रेतस्यैकादशेऽहनि ॥ स एवदिवसस्तस्यश्राद्धशय्याशनादिषु ॥ इतिनिर्णयसिंध्वादौपैठिनसिवचनात्, त्र्यहाशौचेपिकर्तव्यमाद्यमेकादशेहनि ॥ इतितत्रैवउशनोवचनाच्चआद्यश्राद्धंसद्यःशौचेदशाहाशौचेचएकादशाहेएव ॥ एतेन " आद्यमेकादशेऽहनि " इत्याशौचानन्तरदिनपरम् ॥ " अथाशौचापगमे " इतिविष्णूक्तेः इतिवदन्तःआद्यश्राद्धमशुद्धोऽपिकुर्यादेकादशेऽहनि ॥ कर्तुस्तात्कालिकीशुद्धिरशुद्धःपुनरेवसः ॥ इतिशंखवचनस्य—एकादशेऽह्नियच्छ्राद्धंतत्सामान्यमुदाहृतम् ॥ चतुर्णामपिवर्णानांसूतकंतुपृथक्पृथक् ॥ इतिपैठिनसिवचनस्यअनाकरत्वंचवदन्तःवाचस्पत्यादयःहेमाद्र्यादिमहानिवन्धविरोधादुपेक्ष्याः ॥ एकादशेहनितथाविप्रानेकादशैवतु ॥ क्षत्रादिःसूतकान्तेतुभोजयेदयुजोद्विजान् ॥ इतिमात्स्यादिवचनैःक्षत्रियाणामाद्यश्राद्धमेकादशाहे, आशौचान्तेवाऽनुष्ठेयमितिविकल्पःकेषांचित्संमतः ॥ वस्तुतस्तुसद्यःशौचादौयुद्धहतादेःक्षत्रियस्यएकादशाहे, अन्येषांक्षत्रियाणामाशौचान्तेइतिव्यवस्थायासूपपादत्वान्नविकल्पइति ॥ एकादशाहादिकंयत्तत्कर्तव्यंचसमन्त्रकम् ॥ बहुभिर्ब्राह्मणैःसार्द्धमाचार्येणसमंततः ॥ गच्छेत्तीर्थेह्युपहारान्गृहीत्वासकलानपि ॥ नालिकेराणिपूगानिनागवल्लीदलानिच ॥ उत्तलीशर्कराद्राक्षामधुदुग्धघृतानिच ॥ गुग्गलंकुंकुमंसूत्रंमदनायाः फलानिच ॥ श्रीखण्डेदेवदर्भाश्चतुलसीचतिलाक्षताः ॥ कुसुमंचरुपात्राणिताम्रपात्राणिस्रुकस्रुवौ ॥ परिधानार्थंवस्त्रेद्वेद्वेरक्तवस्त्रखण्डके ॥ कलशानाञ्चवस्त्राणित्रपोवत्स-*

सर्वंधिनूतनवस्त्राणिक्षालयित्वाआतपेस्थापयेत् ॥ )स्नानंकार्यम् ॥ आचम्यप्राणानायम्य ॥ कुशपवित्रधारणम्–ॐपवि-
त्रेस्थो० ॥ १ ॥ शिखाबन्धनम् ॥ तीर्थानिनमस्कृत्य ॥ अद्यपूर्वो०तिथौअपसव्यंअ०गोत्रस्यअ०-
प्रेतस्य( स्त्रियाश्चेत्गोत्रायाःप्रेतायाः )प्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थंम-
स्देहशुद्ध्यर्थंचएकादशाहादिक्रियाकरणयोग्यतायैप्रायश्चित्ताचरणहेतवेसव्यंपञ्चगव्यप्राशनपू-
र्वकस्नानविधिंकरिष्ये ॥ अथातोनित्यस्नानंनद्यादौमृद्गोमयकुशतिलसुमनसआहृत्योदकान्तं-
गत्वाशुचौदेशेस्थाप्यप्रक्षाल्यपाणिपादंकुशोपग्रहोबद्धशिखीयज्ञोपवीत्याचम्य ॥ उरुर्ँहीतिमन्त्रेण-

---

*तरीयुतः ॥ तदर्थंचैववस्त्राणिसप्येशपञ्चदेवताः ॥ पञ्चधान्यानिशुभ्राणितण्डुलाश्चैवमुद्गकाः ॥ गोधूमाश्चैवमाषाश्चतिलामुद्रार्पणानिच ॥ वहिः
पालाशपत्राणिहोमार्थंचघृततिलाः ॥ पात्रार्थंचरुपाकार्थंतण्डुलाश्चेन्धनानिच ॥ इत्याद्युपहारांस्तत्रमुक्त्वातीर्थेशुभेतटे ॥ स्नानंचविधिनाकु-
र्यात्स्नात्वास्नानाङ्गतर्पणम् ॥ सन्ध्योपासनादिकंचकृत्वासर्वंविधानतः ॥ पूर्वोक्तविधिनातत्रसत्देशस्यचपूजनम् ॥ दुर्मरणदोषशान्त्यैसद्गत्यर्थं-
वैमृतस्यच ॥ प्रायश्चित्तंततःकुर्याद्यथाशक्त्याजपादिभिः ॥ कृत्वातुवैष्णवंश्राद्धंसकृत्सकृत्समाचरेत् ॥ यजमानदेहशुद्ध्यर्थंतथाप्रेतस्यशुद्धये ॥
कृत्वाहिपुरश्चरणंततःस्नानंसमाचरेत् ॥ परिधायान्यवस्त्रंचआसनेह्युपविशेत्तथा ॥ आचम्यादिप्रयोगंचउक्त्वापूर्वोक्तमादृतः ॥ असद्गतिविना-
शायसद्गतिप्राप्तयेपुनः ॥ स्थापनंचैवदेवानांकुर्याच्चैवविधानतः ॥ जापकांस्तत्रपञ्चैववरयेत्सूक्तपाठकान् ॥ स्थण्डिलेकलशान्पञ्चस्थापयेयुश्च-
जापकाः ॥ पूर्वादिषुचतुर्दिक्षुपञ्चमंमध्यदेशतः ॥ कुम्भोपरिपञ्चदेवान्ब्रह्माद्यान्धातुनिर्मितान् ॥

जलमभिमन्त्र्य-ॐ उरुꣳहिराजा० ॥ १ ॥ येतेशतमितिमन्त्रेणजलावर्तनम्-ॐ येतेशतं० ॥ १ ॥ सुमित्रि-
यानऽआपइतिमन्त्रेणजलाञ्जलिमादाय-ॐ सुमित्रियानऽआपऽओषधयꣳसन्तु ॥ दुर्मित्रियास्तस्मै इतिमन्त्रा-
र्द्धेनअञ्जलीग्रहीतजलस्यतीर्थतटेप्रक्षेपणम्-दुर्मित्रियास्तस्मै०ष्मः ॥ कामक्रोधलोभमोहमदमत्सराणा-
मुत्तरेत्यागः ॥ इदंविष्णुरितिमन्त्रेणमृत्तिकास्नानम्-ॐ इदंविष्णुर्वि० ॥ १ ॥ अश्वक्रान्ते० ॥ ततोना-
भिमात्रेजलेसूर्याभिमुखंस्थित्वाआपोऽअस्मानितिमन्त्रेणस्नानम्-ॐ आपोऽअस्मान्मातरं० ॥ इतिमन्त्रेणतूर्णीं
स्नात्वानिमज्योन्मज्याचम्य ॥ मानस्तोकइतिमन्त्रेणगोमयस्नानम्-ॐ मानस्तोके० ॥ अग्रमग्र० ॥ कुशैरिम-
म्मइत्यादिमन्त्रैर्मार्जयेत् ॥ यथा-ॐ इमम्मे० ॥ तत्त्वायामि० ॥ त्वन्नोऽअग्ने०स्मत् ॥ सत्वन्नोऽ-
अग्ने०एधि ॥ ॐ मापोमौषधीर्हिꣳसीर्द्धाम्नोधाम्नोराजँस्ततोवरुणनोमुञ्च ॥ यदाहुरघ्न्याऽइति
११ वरुणेतिशपामहेततोवरुणनोमुञ्च ॥५॥ ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय ॥
अथावयमादित्यव्रतेतवानागसोऽअदितयेस्याम ॥ ६ ॥ ॐ मुञ्चन्तुमाशपथ्यादथोवरुण्यादुत॥
अथोयमस्यपड्वीशात्सर्वस्माद्देवकिल्बिषात् ॥७॥ अवभृथनिचुम्पुणनिचेरुरसिनिचुम्पुणः ॥ अवदेवै
र्देवकृतमेनोयासिषमवमर्त्यैर्मर्त्यकृतम्पुरुराव्णोदेवरिषस्पाहि ॥८॥ इतिमन्त्रैःसर्वाङ्गानिमार्जयित्वातूर्णीं-

निमज्ज्योन्मज्ज्याचम्यदर्भैःप्रणवादिभिर्मन्त्रैरात्मानंपावयेत् ॥ ॐपुनातु । ॐभूःपुनातु । ॐभुवःपु० । ॐस्वः
पु०।ॐमहःपु०। ॐजनःपु०।ॐतपःपु० । ॐसत्यंपु० ॥ॐइदमापःप्रवहतावद्यञ्चमलञ्चयत् ॥
यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ १ ॥ हविष्मतीरिमाऽआपोहविष्माँ२आविवासति ॥ हविष्मान्देवोऽअध्वरोहविष्माँ२अस्तुसूर्यः ॥ २॥
देवीरापोऽअपान्नपाद्योवऽऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ॥ तन्देवेभ्योदेवत्रादत्तशुक्रपेभ्योयेषांभागस्थस्वाहा ॥ ३ ॥ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ॥ समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥ ४ ॥ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ ५ ॥ द्रुपदादिव० ॥ ६ ॥ शन्नोदेवी० ॥ ७ ॥ अपाᳬरसमु० ॥ ८ ॥ अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ॥ तासामास्थानादुज्जिहतामोषधयःसुपिप्पलाः ॥ ९ ॥ पुनन्तुमापितरःसोम्यासः पुनन्तुमापितामहाःपुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषा ॥ पुनन्तुमापितामहाःपुनन्तुप्रपितामहाः ॥
पवित्रेणशतायुषाविश्वमायुर्व्यश्नवै ॥ १० ॥ अग्नऽआयूᳬषिपवसऽआसुवोर्जमिषञ्चनः ॥

आरेबाधस्वदुच्छुनाम् ॥ ११ ॥ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानि-
जातवेदःपुनीहिमा ॥ १२ ॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत ॥ अग्नेक्रत्वाक्रतूँरनु ॥१३॥
यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनपुनातुमा ॥ १४ ॥ पवमानःसोऽअद्यनःपवित्रेण-
विचर्षणिः ॥ यःपोतासपुनातुमा ॥ १५ ॥ उभाभ्यान्देवसवितःपवित्रेणसवेनच ॥ माम्पुनी-
हिविश्वतः ॥१६॥ वैश्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदन्तः
सधमादेषुवयᳪस्यामपतयोरयीणाम् ॥१७॥ चित्पतिर्मापुनातुवाक्पतिर्म्मापुनातुदेवोमासविता-
पुनात्वच्छिद्रेणपवित्रेणसूर्यस्यरश्मिभिः ॥ तस्यते०॥१८॥ ॐपुनातु ॥ ॐभूःपु०॥ ॐभुवःपु०॥
ॐस्वःपु० ॥ ॐमहःपु० ॥ ॐजनःपु० ॥ ॐतपःपु० ॥ ॐसत्यंपु० ॥ ॐतत्सवितुरिति-
सर्वंपु० ॥ इतिमार्जनम् ॥ ततः स्नात्वान्तर्जलेऽघमर्षणंत्रिरावर्तयेत्यथा—त्र्यम्बकानामगायत्रीविप्राणां-
पापनाशिनी ॥ तस्याःस्मरणमात्रेणब्रह्महत्यांव्यपोहति ॥ ॐविधृतिर्न्नाभ्याघृतᳪरसेनापोयू-
ष्णामरीचीविप्रुड्भिर्न्नीहारमूष्मणाशीनंवसयाप्रुष्वाऽअश्रुभिर्ह्रादुनीर्दूषीकाभिरस्नारक्षाᳪसि-
चित्राण्यङ्गैर्नक्षत्राणिरूपेणपृथिवीन्त्वचाजुम्बकायस्वाहा ॥ इतिमन्त्रंपठित्वाहस्ताभ्यांप्राणचक्षुःश्रोत्राणि

पिधायान्तर्जलेनिमज्ज्यऋतंचसत्यंचेत्यघमर्षणसूक्तंत्रिःजपेत् ॥ यथा—ॐऋतंचसत्यंचाभीद्धात्तपसोऽध्यजायत । ततोरात्र्यजायततततःसमुद्रोअर्णवः । समुद्रादर्णवादधिसंवत्सरोअजायत ॥ अहोरात्राणिविदधद्विश्वस्यमिषतोवशी । सूर्याचन्द्रमसौधातायथापूर्वमकल्पयत् ॥ दिवंचपृथिवींचान्तरिक्षमथोस्वः ॥ अथवा—द्रुपदादिवआयंगौरितिवात्र्यृचंप्राणायामंसशिरसमोमितिवाविष्णोर्वास्मरणम् ॥ एवमघमर्षणंकृत्वास्नानाङ्गतर्पणम्यथा—ॐभूर्देवांस्तर्पयामि ॥ ॐभुवर्देवांस्त० ॥ ॐस्वर्देवांस्त० ॥ ॐभूर्भुवःस्वर्देवांस्त० ॥ कण्ठ्यंकृत्वा ॥ ॐभूःमनुष्यांस्त० ॥ ॐभुवर्मनुष्यांस्त०॥ ॐस्वर्मनुष्यांस्त० ॥ ॐभूर्भुवःस्वर्मनुष्यांस्त० ॥ अपसव्यं ॥ ॐभूःपितृँस्त०॥ ॐभुवःपितृँस्त० ॐस्वःपितृँस्त० ॥ ॐभूर्भुवःस्वःपितृँस्त० ॥ सव्यं ॥ यन्मयादूषितंतोयंशारीरमलसंभवात् ॥ तस्यपापस्यशुद्ध्यर्थंयक्ष्माणंतर्पयाम्यहम् ॥ इतिस्नानविधिः ॥ धौतेवाससीपरिधाय ॥ पञ्चगव्यप्राशनम् ॥ यथा—यत्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनात्पञ्चगव्यस्यदहत्यग्निरिवेन्धनम् ॥ १ ॥ ॐस्वाहा ॥ इतिमन्त्रेणपिबेत् ॥ आचम्य ॥ इतिपञ्चगव्यप्राशनविधिः ॥ ॥ अथसत्येशस्थापन

१ गायत्र्याचैवगोमूत्रंगन्धद्वारेतिगोमयम् ॥ आप्यायस्वेतिक्षीरंचदधिक्राव्णेतिवैदधि ॥ तेजोसीतिघृतंप्राह्यदेवस्येतिकुशोदकम् ॥

प्रतिष्ठापूजाप्रयोगः ॥ ( सन्ध्यावन्दनंकुर्यात् ॥ यदिनारायणबलिंकरोतितदाएकादशाहश्राद्धार्थंपञ्चश्राद्धार्थंचपाकद्वयंकुर्यात् ॥ अतःपरंमहान्तमेकंदीपंकृत्वानिर्वातस्थलेनिधाय ॥ श्राद्धकर्त्ताप्राङ्मुखआसनेउपविश्यआत्मसंमुखःश्वेतवस्त्रंप्रसार्यतदुपरितण्डुलैरष्टदलंकृत्वाभूरसीत्यादिभिर्मन्त्रैःकलशंसंस्थाप्यसत्येशस्थापनंकृत्वातद्दक्षिणेपञ्चदेवतादीनांस्थापनंकुर्यात् ॥ अथप्रयोगः ॥ आचम्यप्राणानायम्य ॥ विष्णुस्मरणं ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअ० प्रेतस्य ( स्त्रियाश्चेत्गोत्रायाःप्रेतायाः ) प्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थंएकादशाहकर्मप्रारंभांगनिमित्तं, सव्यं, सत्येशस्यसत्यासहितस्यआवाहनस्थाप-

---

१ अष्टारकमलंकुर्यान्छुचौदेशेशुभाक्षतैः ॥ तस्योपरिन्यसेत्कुम्भंताम्रजंवस्त्रवेष्टितं ॥ जलपूर्णंसहिरण्यंसफलंपूर्णपात्रकं ॥ तस्योपरिन्यसेत् कांस्यभाजनंचतथोपरि ॥ सत्येशंसत्यासार्द्धंलक्ष्मीनारायणात्मकम् ॥ हैमंशक्त्याष्टकोपेतंमन्त्रैःस्थापनमाचरेत् ॥ कृत्वाग्न्युत्तारणपूर्वंप्रतिष्ठांचैव कारयेत् ॥ पञ्चामृतैःस्नापयित्वाकलशोपरिविन्यसेत् ॥ शालिग्रामशिलायुक्तंसत्येशंकलशोपरि ॥ स्थापयित्वाततःपूजामुपचारैःसमाचरेत् ॥ पौरुषेणचसूक्तेनस्मार्तमन्त्रैस्तुपूजयेत् ॥ न्यासान्कृत्वात्मदेहेतुपश्चाद्देवेसमाचरेत् ॥ करयोःपादयोर्जान्वोः ऊर्व्योर्नाभौहृदिक्रमात् ॥ कण्ठेबाह्वोर्मुखेनेत्रेमूर्ध्निनामाङ्गतोन्यसेत् ॥ अद्भ्यःसम्भृतःषड्ऋचःषडङ्गेषुन्यसेत्पुनः ॥ हृदिशिरसिशिखायांकवचेनेत्रत्रयेऽस्त्रके ॥ यथादेहेतथादेवेकृत्वान्यासविधिंततः ॥ स्मार्तमन्त्रयुतैर्मंत्रैरुपचारांश्चकल्पयेत् ॥ आवाहनासनंचैवपाद्यमर्घ्यंतथैवच ॥ आचमनंचतथास्नानंवस्त्रंयज्ञोपवीतकं ॥ अनुलेपनंतथापुष्पंधूपंदीपंनिवेदनम् ॥ ताम्बूलंदक्षिणाचैवनमस्कारांश्चषोडश ॥ छत्रंचचामरंचैवआदर्शंतालवृंतकं ॥ स्तुतिंचैवतथाकुर्याद्देवनारायणोविधिः ॥ देहन्यासेतथादेवन्यासेदेवोपचारकें ॥ होमेपुष्पाञ्जलौजाप्येषडावृत्तिरितिक्रमात् ॥

नप्रतिष्ठापूजनंचकरिष्ये ॥ ॐअश्माचमे० ॥ १ ॥ भूरसीतिमन्त्रेणभूमिप्रार्थना–ॐभूरसि० ॥ २ ॥
आजिघ्रेतिकलशंस्थापयेत्–ॐआजिघ्रकलशं० ॥ ३ ॥ महीद्यौरितिजलंपूरयेत्–ॐमहीद्यौःपृ० ॥ ४ ॥
सुजातोज्योतिषाइतिमन्त्रेणवस्त्रवेष्टनम्–ॐसुजातोज्योतिषा० ॥ ५ ॥ याओषधीरितिसर्वौषधीप्रक्षेपः–ॐयाऽ-
ओषधीःपूर्वा० । ६ ॥ अश्वत्थेवेतिपञ्चपल्लवप्रक्षेपः–ॐअश्वत्थेवो० ॥ ७ ॥ याःफलिनीरितिफलप्रक्षेपः–
ॐयाःफलिनीर्या० ॥ ८ ॥ हिरण्यगर्भेतिहिरण्यप्रक्षेपः–ॐहिरण्यगर्भःस० ॥ ९ ॥ पूर्णादर्वीतिपूर्णपा-
त्रमुपरिन्यसेत्–ॐपूर्णादर्वि० ॥ १० ॥ तत्वायामीतिवरुणमावाहयेत्–ॐतत्वायामि० ॥ ११ ॥ वरुणंसा-
ङ्गंसपरिवारंआवाहयामि ॥ वरुणायनमःसर्वोपचारार्थेगन्धाक्षतपुष्पाणिसमर्पयामि ॥ ततःसुवर्ण-
मयींसत्येशमूर्तिंताम्रपात्रेनिधाय ॥ समुद्रस्यत्वावकयाग्नइत्यादिमन्त्रैरविच्छिन्नजलधारयाअग्न्युत्तारणंविधायप्राणप्रतिष्ठांकु-
र्यात् ॥ ततःसत्येशमूर्त्युपरिअधोलिखितमन्त्रैर्जलधारांकुर्यात् ॥ तत्रमन्त्राः—ॐसमुद्रस्यत्वावकयाग्नेपरिव्ययया-
मसि ॥ पावकोऽअस्मभ्यꣳशिवोभव ॥ १ ॥ हिमस्यत्वाजरायुणाग्नेपरिव्ययामसि ॥ पावको-
ऽअस्मभ्यꣳशिवोभव ॥ २ ॥ उपज्मन्नुपवेतसेवतरन्नदीष्वा ॥ अग्नेपित्तमपामसिमण्डूकिता-
भिरागहिसेमन्नोयज्ञम्पावकवर्णꣳशिवङ्कृधि ॥ ३ ॥ अपामिदन्न्ययनꣳसमुद्रस्यनिवेशनम् ॥ अ-

न्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ ४ ॥ अग्नेपावकरोचिषामन्द्रयादेवजि-
ह्वया ॥ आदेवान्वक्षियक्षिच ॥ ५ ॥ सनः पावकदीदिवोग्नेदेवाँ२ऽइहावह ॥ उपयज्ञꣳहविश्चनः
॥ ६ ॥ पावकयायश्चितयन्त्याकृपाक्षामन्नुरुचऽउषसोनभानुना ॥ तूर्वन्नयामन्नेतशस्यनूरणऽ-
आयोघृणेनततृषाणोऽअजरः ॥ ७ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्चिषे ॥ अन्याँस्तेऽ-
अस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥ ८ ॥ नृषदेवेडप्सुषदेवेड्बर्हिषदेवेड्वनसदेवेट्स्व-
र्विदेवेट् ॥ ९ ॥ येदेवादेवानांयज्ञियायज्ञियानाꣳसंवत्सरीणमुपभागमासते ॥ अहुतादोहवि-
षोयज्ञेऽअस्मिन्त्स्वयम्पिबन्तुमधुनोघृतस्य ॥ १० ॥ येदेवादेवेष्वधिदेवत्वमायन्येब्रह्मणःपुरऽए-
तारोऽअस्य ॥ येभ्योनऽऋतेपवतेधामकिञ्चननतेदिवोनपृथिव्याऽअधिस्नुषु ॥ ११ ॥ प्राणदाऽ-
अपानदाव्यानदावर्चोदावरिवोदाः ॥ अन्याँस्तेऽअस्मत्तपन्तुहेतयः पावकोऽअस्मभ्यꣳशिवोभव ॥
॥ १२ ॥ सत्येशमूर्तेरमावेकुशचटःस्थापनीयः ॥ मनोजूतिरितिमन्त्रेणप्रतिष्ठांकृत्वा—ॐमनोजूतिर्जुषतामाज्यस्य-
स्यबृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टंयज्ञꣳसमिमन्दधातु ॥ विश्वेदेवासऽइहमादयन्तामो३म्प्र-
तिष्ठ ॥ १ ॥ ॐभूर्भुवःस्वःश्रीसत्येशायनमःसत्येशसुप्रतिष्ठितोवरदोभव ॥ ध्यानम्—शांताकारं०॥

ॐइदंविष्णुर्वि० ॥ हस्तेजलमादाय–अद्यपूर्वो०तिथौअपसव्यंअ०गोत्रस्यअ०प्रेतस्य( स्त्रियाश्चेत्-गोत्रायाःप्रेतायाः ) रोगोत्पत्तिमरणावसानेऊर्ध्वोच्छिष्टाधोच्छिष्टोभयोच्छिष्टाकृतस्नानमरणाशौचमरणसमयेहरिनामोच्चारवर्जिततुलसीतिलकुशगोपीचन्दनगङ्गोदकस्नानरहितादिदोषाणांमार्गेशववाहेऽशुचिदेशेऽमेध्यकेशास्थ्यादिनानाविधस्पर्शदोषाणांपरकाष्ठपराग्निदहनचितादग्धकीटपतङ्गादिजनितदोषाणांपरिहारार्थंदुर्गतिनिवारणार्थंतथाचममदेहशुद्ध्यर्थंएकादशाहकर्मणोधिकारार्थंसव्यंप्रायश्चित्ताचरणहेतवेश्रीसत्येशस्यसत्यासहितस्यविष्णोःदेहन्यासदेवन्यासपूर्वकषोडशोपचारैःपूजनमहंकरिष्ये ॥ पुनर्जलमादाय–सहस्रशीर्षेतिषोडशर्चस्यनारायणऋषिःआद्यानांपञ्चदशानामनुष्टुप्छन्दःअन्त्यायास्त्रिष्टुप्सर्वासांजगद्बीजंपुरुषोदेवतान्यासेविनियोगः ॥ ॐसहस्रशीर्षेतिवामहस्ते–ॐसहस्रशीर्षा० ॥ पुरुषएवेतिदक्षिणहस्ते–ॐपुरुषऽएवे० ॥ एतावानस्येतिवामपादे–ॐएतावानस्य० ॥ त्रिपादूर्ध्वेतिदक्षिणपादे–ॐत्रिपादूर्ध्व० ॥ ततोविराडेतिवामजानुनि–ॐततोविराट्० ॥ तस्माद्यज्ञात्सर्वहुतेतिदक्षिणजानुनि–ॐतस्माद्यज्ञात्सर्वहुतःसं० ॥ तस्माद्यज्ञात्सर्वहुतऽऋचेतिवामकट्याम् ॥ ॐतस्माद्यज्ञात्सर्वहुतऽऋचः० ॥ तस्मादश्वेतिदक्षिणकट्यां०–ॐतस्मादश्वा० ॥ तंयज्ञमिति-

नाभौ—तंयज्ञम्बर्हिषि० ॥ यत्पुरुषमितिहृदये—ॐयत्पुरुषंव्यदधुः० ॥ ब्राह्मणोस्येतिकण्ठे—ॐब्राह्मणो-
स्य० ॥ चन्द्रमामनसेतिअक्ष्णोः—ॐचन्द्रमामनसो० ॥ नाभ्याऽआसीदितिमूर्ध्नि—ॐनाभ्याऽआसीद्० ॥
यत्पुरुषेणेतिश्रोत्रयोः—ॐयत्पुरुषेणहविषा० ॥ सप्तास्यासन्नितिमुखे—ॐसप्तास्यासन्० ॥ यज्ञेनयज्ञमिति-
सर्वाङ्गेषु—ॐयज्ञेनयज्ञम० ॥ १६ ॥ एवंदेवन्यासान्कृत्वाषोडशोपचारैःविष्णुंपूजयेत् ॥ आवाहनम्—ॐसहस्र-
शीर्षा० ॥ १ ॥ सत्येशायसत्यासहितायविष्णवेनमःआवाहनंसमर्पयामि ॥ आसनम्—ॐपुरुष-
ऽएवे० ॥ सत्ये०सत्या०वि०आसनंस० ॥ पाद्यम्—ॐएतावानस्य० ॥ सत्ये०सत्या०वि०पाद्यंस० ॥
अर्घ्यम्—ॐत्रिपादूर्ध्व० ॥ सत्ये०सत्या०वि०अर्घ्यंस० ॥ आचमनीयम्—ॐततोविराडजायत० ॥
॥ ५ ॥ सत्ये०सत्या०वि०आचमनीयंस० ॥ स्नानम्—ॐतस्माद्यज्ञात्सर्व० ॥६॥ सत्ये०सत्या०
वि०स्नानंस०स्नानान्तेआचमनीयंस० ॥ एकतन्त्रेणपञ्चामृतस्नानम्—ॐपञ्चनद्यःसरस्वती० ॥
सत्ये०सत्या०वि०पञ्चामृतस्नानंस० ॥ पञ्चामृतस्नानान्तेशुद्धोदकस्नानंस० ॥ वस्त्रम्—तस्मा-
द्यज्ञात्सर्वहुतऽऋ० ॥ ७ ॥ सत्ये०सत्या०वि०वस्त्रंस०वस्त्रान्तेआचमनीयंस० ॥ यज्ञोपवीतम्—
ॐतस्मादश्वा० ॥ ८ ॥ सत्ये०सत्या०वि०यज्ञोपवीतंस०यज्ञोपवीतान्तेआचमनीयंस० ॥

चन्दनम्—ॐतंयज्ञम्ब० ॥ ९ ॥ सत्ये०सत्या०वि०चन्दनंस० ॥ पुष्पम्—ॐयत्पुरुषंव्य० ॥ १० ॥ सत्ये०सत्या०वि०पुष्पंस० ॥ धूपम्—ॐब्राह्मणोस्य० ॥ ११ ॥ सत्ये०सत्या०वि०धूपंआ० ॥ दीपम्-ॐचन्द्रमामनसो० ॥१२॥ सत्ये०सत्या०वि०दीपंदर्शयामि ॥ नैवेद्यम्-ॐनाभ्याआसी० ॥ १३ ॥ सत्ये०सत्या०वि०नैवेद्यंस०नैवेद्यान्तेआचमनीयंस० ॥ मुखवासताम्बूलम्—ॐयत्पुरुषेणह० ॥ १४ ॥ सत्ये०सत्या०वि०मुखवासताम्बूलंस० ॥ दक्षिणा—ॐहिरण्यगर्भऽसमवर्त्तताग्ग्रेभूतस्यजातऽपतिरेकऽआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ॥ सत्ये०सत्या०वि०हिरण्यदक्षिणांस० ॥ प्रदक्षिणा—ॐसप्तास्यासन्प० ॥ सत्ये०सत्या०वि०प्रदक्षिणांस० ॥ १५ ॥ नीराजनम्—ॐयेदेवासोदिव्येकादशस्थपृथिव्यामध्येकादशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमंजुषध्वम् ॥ सत्ये०सत्या०वि०नीराजनंस० ॥ मन्त्रपुष्पाञ्जलिः—ॐयज्ञेनयज्ञ० ॥ १६ ॥ सत्ये०सत्या०वि०मन्त्रपुष्पाञ्जलिंस० ॥ ॐनमोभगवतेवासुदेवाय-इतिमन्त्रेणयथाशक्तिजपंकुर्यात् ॥ अथराजोपचाराःछत्रम्—ॐअद्भ्यःसं० ॥ १ ॥ सत्ये०सत्या०वि०छत्रंस० ॥ चामरं—ॐवेदाहमेतम्० ॥ २ ॥ सत्ये०सत्या०वि०चामरंस० ॥ द्वितीयचामरम्—ॐप्रजापति० ॥

॥ ३ ॥ सत्ये०सत्या०वि० द्वितीयचामरंस० ॥ आदर्शः—ॐप्रोद्धेवेभ्य० ॥ ४ ॥ सत्ये०स०वि०आदर्शंस० ॥ तालवृन्तकम्—ॐऋचंवाचंप्रपद्ये० ॥ ३ ॥ सत्ये०स०वि०आदर्शंस० ॥ तालवृन्तकम्—ॐऋचंब्राह्मन्०सत्ये०स०वि०तालवृन्तकंस० ॥ ५ ॥ स्तुतिपाठः—ॐश्रीश्चते० ॥ ६ ॥ सत्ये०स०वि०स्तुतिपाठंस० ॥ प्रार्थना—अपराधसहस्राणिक्रियन्तेऽहर्निशंमया ॥ दासोयमितिमांमत्वाक्षमस्वपरमेश्वर ॥ १ ॥ जलपूरितशङ्खभ्रामणम्—शङ्खमध्येस्थितंतोयंभ्रामितंकेशवोपरि ॥ अङ्गलग्नंमनुष्याणांब्रह्महत्यांव्यपोहति ॥ २ ॥ इत्युक्त्वाशङ्खंदेवोपरिभ्रामयित्वातस्योदकेनस्वशरीरंमार्जयेत् ॥ अथतीर्थग्रहणम्—ततःगायत्र्याचरणामृतमभिमन्त्र्याकिंचित्पात्रान्तरेकृत्वा "ॐएतावानस्य" इतिमन्त्रेणविष्णोरुपरिचरणामृतबिन्दुंनिधाय ॥ बलिर्विभीषणोभीष्मःकपिलोनारदोर्जुनः ॥ प्रह्लादश्चाम्बरीषश्चवसुर्वायुसुतःशिवः ॥ १ ॥ विष्वक्सेनोद्धवाक्रूराःसनकाद्याःशुकादयः ॥ नारायणप्रसादेनसर्वेगृह्णन्तुवैष्णवाः ॥ २ ॥ इतिमन्त्रेणईशान्यांकिञ्चित्त्यजेत् ॥ ततःस्वयंपिबेत्, तत्रमन्त्रः—अकथितानिपापानिसंचितानिबहून्यपि ॥ तानिसर्वाणिनश्यन्तिपीतेपादोदकेहरेः ॥ १ ॥ ततःचरणोदकंपात्रान्तरेकृत्वास्वशिरसिक्षिपेत् ॥ तत्रमन्त्रः—अकालमृत्युहरणंसर्वव्याधिविनाशनम् ॥ विष्णोःपादोदकंपुण्यंशिरसिधारयाम्यहम् ॥ १ ॥ इतिमन्त्रेणशिरसिधारयेत् ॥ विशेषार्घ्यः—

नालिकेरंगृहीत्वा-सत्यनाथनमस्तुभ्यंमूर्तामूर्तस्वरूपिणे ॥ वासुदेवनृसिंहाख्यकपिलादित्यभूधर ॥ १ ॥ वामनाच्युतयज्ञेशलक्ष्मीकान्तमृतेश्वर ॥ शार्ङ्गचक्रगदाधारिन्सत्येशायनमोऽस्तुते॥२॥ अनेकजन्मसम्भूतपापहन्परमेश्वर ॥ मयादत्तार्घदानेनप्रेतमुक्तिप्रदोभव ॥ ३ ॥ नमस्तेपद्मनाभायनमस्तेजलशायिने ॥ नमस्तेकेशवानन्तवासुदेवनमोऽस्तुते ॥ ४ ॥ प्रभोसत्यजगन्नाथएतावतींभूमींअ० गोत्रस्यअ० प्रेतस्यक्रियाकरणयोग्यतायैअहंयाचेइतिवदेत् ॥ अपसव्यं ॥ इदंसत्येशस्यविष्णोःषोडशोपचारैःपूजोपार्जितंपुण्यंगोत्रायप्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो० सत्येशस्यविष्णोःषोडशोपचारैःपूजनविधेःपरिपूर्णतास्तु॥ यस्यस्मृ०॥ अच्युता०॥ अपसव्यं ॥ कृतेनानेनषोडशोपचारपूजनेनगोत्रस्यप्रेतस्यप्रेतत्वनिवृत्तिः असद्गतिमृत्युविनाशः सद्गतिप्राप्तिः अक्षयातृप्तिःयमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अप्रेतनपुरश्चरणाङ्गश्राद्धयोग्यतावाप्तिः ॥ इतिसत्येशस्थापनम् ॥ अथपुरश्चरणाङ्गश्राद्धप्रयोगः ॥ आचम्यप्राणानायम्य ॥ कुशपवित्रधारणम्-ॐपवित्रेस्थो०॥[१]हस्तेजलमादाय-अपसव्यम् ॥अ० गोत्रस्यअ० प्रेतस्यमहापातकोपपातकतत्समानानांगुरु-

१ ततःसत्येशदेवस्यवैष्णवंश्राद्धमाचरेत् ॥ तत्रविप्रान्प्रायश्चित्तप्रदातॄन्संप्रपूजयेत् ॥ उदङ्मुखानुपवेश्यपादप्रक्षालनादिकम् ॥ *

पूर्वपापानां, [illegible] पूर्वपर्यादानीत्यक्रियालोपादिजनितपापानां
शमनार्थंएकादशाहक्रियायोग्यतायैप्रायश्चित्ताचरणहेतवे ॥ सव्यं ॥ सत्येशायपापहन्त्रेविष्णवे
नमःपाद्यंपादावनेजनंपादप्रक्षालनंएषतेऽर्घः॥ इदमत्रचन्दनंपुष्पम् ॥पादार्घोदकनिक्षेपः॥ स्वपा-
दप्रक्षालनम् ॥ आचमनं ॥ तिलाक्षतान्गृहीत्वादिग्बन्धः-ऐंद्र्यांनारायणोरक्षेदाग्नेयांचजनार्दनः ॥

---

*पूजांकृत्वानालिकेरंगृहीत्वाप्रार्थनांवदेत् ॥ २ आब्रह्मस्तम्बपर्यन्तं० ॥ ३ सर्वेधर्मे० ॥४ पुराकृतं० ॥ ५ पुण्यैःकृत०॥ ६ इत्युक्त्वाच
पुरस्तेषांफलंमुक्त्वाप्रणम्यच ॥ उपविश्यततःकुर्याच्छ्राद्धंसत्येशदैवतं ॥ ७ सभ्यब्राह्मणसंयुक्तंसाङ्कल्पंविष्णुदैवतं ॥ दिग्बंधंतत्रकुर्वीतअग्नि-
ष्वात्तादिवर्जितम् ॥ ८ ऐन्द्र्यांनारायणोरक्षे० ॥ ९ प्रतीच्यां० ॥ १० ऊर्ध्वंगोवर्धनोरक्षे० ॥ ११ अपवित्रः० ॥ १२ यद्देवात्रि-
ऋचेनैवप्रोक्षयेद्दानद्रव्यकम् ॥ इत्यादिसर्वंतत्कृत्वातथाप्युपोक्षितादिकम् ॥ १३ दद्याद्गोमिथुनंचादौसभ्यानांचद्विजन्मनां ॥ वस्त्रालङ्करणैः
पूजांकृत्वादानंसमर्पयेत् ॥ १४ बाहुल्येनप्रयोगेणसर्वपापापनुत्तये ॥ द्वादशाब्दंषडब्दंवात्र्यब्दमेकाब्दमेवच ॥ १५ नानाद्वारेणद्रव्येण
गोसुवर्णादिकेनच ॥ महापापादिसर्वेषांपापानांशोधनायवै ॥ १६ अहंसम्प्रददेतुभ्यंप्रत्येकंवचनंवदेत् ॥ आचार्यायद्विगुणंकुर्याद्द्रव्यस-
१२ मर्पणम् ॥ १७ अहंनिःपापोभूयासमितिसामर्पकोवदेत् ॥ भूयाश्चेतिवदेयुस्तेब्राह्मणाःस्वस्तिवाचकाः ॥ १८ विप्रान्प्रतिगृहीतृंस्तान्प्रणिप-
त्यविसर्जयेत् ॥ गोमिथुनंद्वितीयंचसत्येशोपरिकल्पयेत् ॥ १९ कलशाद्युपहारांश्चआज्येमुखावलोकनं ॥ कृत्वेविल्यादितत्सर्वंआचार्याय
निवेदयेत् ॥ २०

दक्षिणेपुण्डरीकाक्षःपद्मनाभस्तुनैर्ऋतौ ॥ १ ॥ प्रतिच्यांचैवगोविन्दोवायव्यांमधुसूदनः ॥
उदीच्यांमाधवोरक्षेदीशान्यांपुरुषोत्तमः ॥ २ ॥ ऊर्ध्वंगोवर्धनोरक्षेदधस्ताच्चत्रिविक्रमः ॥ एवं
दशादिशोरक्षेत्केशवःसर्वरक्षकः ॥ ३ ॥ इतिदिग्बन्धः ॥ अपवित्रःपवित्रोवासर्वावस्थाङ्गतोपिवा ॥
यःस्मरेत्पुण्डरीकाक्षंसबाह्याभ्यन्तरःशुचिः ॥ १ ॥ ततःकर्मार्थंजलाभिमन्त्रणम्—( ताम्रपात्रेसतिलजलं पूर-
यित्वागायत्र्यात्रिरभिमन्त्र्य ) हस्तेजलंगृहीत्वा— यद्देवेतिसृणांमन्त्राणांकूष्माण्डऋषिः गायत्र्युष्णिगनुष्टु-
प्छन्दांसिअग्निवायुसूर्यादेवताःतिलोदककरणेविनियोगः ॥ ॐयद्देवादेवहेडनंदेवासश्चकृमाव-
यम् ॥ अग्निर्म्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥ १ ॥ ॐयदिदिवायदिनक्तमेनाꣳसिचकृ-
मावयम् ॥ वायुर्म्मातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥ २ ॥ ॐयदिजाग्रद्यदिस्वप्नऽएनाꣳ
सिचकृमावयम् ॥ सूर्य्योमातस्मादेनसोविश्वान्मुंचत्वꣳहसः ॥३॥ सत्येशस्यविष्णोःपुरश्चरणा-
ङ्गश्राद्धोपहाराणांपवित्रतास्तु ॥ देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ सर्वेपाकाःसर्वोपहाराः ॥६७॥
शुचयोभवन्तु ॥ अद्यपूर्वो० । अपसव्यं । अ०गोत्रस्यअ०प्रेतस्यअन्तरालयमरणजनितपापशो-
धनार्थं । सव्यं । सत्येशस्यविष्णोःसाङ्गल्पविधिनापुरश्चरणाङ्गश्राद्धमहंकरिष्ये ॥ पुरश्चरणाङ्गश्रा-

द्धनिमित्तंसत्येशायपापहन्त्रेविष्णवेइदमासनम् ॥ पुरश्चरणाङ्गश्राद्धनिमित्तंसत्येशायअर्चनम् ॥
अस्यार्चनविधेःपरिपूर्णतास्तु ॥ इदमर्चितंवोज्योतिःसूर्यज्योतिःशेषोपचाराःसम्पूर्णाविधिवद्भ-
वन्तु ॥ आचमनम् ॥ पुरश्चरणाङ्गश्राद्धनिमित्तंपापहन्त्रेविष्णवेभोजनम् ॥ ब्राह्मणमेकंतर्पयि-
ष्येतेनसत्येशोभगवान्पापहामहाविष्णुःप्रीयताम् ॥ मुखवासताम्बूलम् ॥ नालिकेरंगृहीत्वासभ्य-
ब्राह्मणानांस्तुतिंकुर्यात्–आब्रह्मस्तम्बपर्यन्तंभवद्वशमिदंजगत् ॥ यक्षरक्षःपिशाचादिसदेवासुरमानु-
षम् ॥ १ ॥ सर्वेधर्मविवेक्तारोगोप्तारःशासकाऽनघाः ॥ ममपापस्यपावित्र्यंकुर्वन्तुद्विजसत्तमाः
॥ २ ॥ पुराकृतंमयाघोरंज्ञातमज्ञातकिल्मिषम् ॥ जन्मतोऽद्यदिनंयावत्तस्मात्पापात्पुनातुमाम् ॥
॥ ३ ॥ पूज्यैःकृतःपवित्रोऽहंभविष्याम्यनघस्तथा ॥ प्रसादःक्रियतांमह्यंसभ्यानुज्ञांप्रयच्छथ ॥
॥ ४ ॥ इतिमन्त्रैर्विष्णोरग्रेश्रीफलंमुक्त्वाप्रणमेत् ॥ प्रायश्चित्तादौइदंगोमिथुनंरुद्रदैवतंचन्दनपुष्पाद्यर्चितं-
तन्निष्क्रयीभूतंयथोपपन्नंद्रव्यंवासभ्यब्राह्मणेभ्योहंविभज्यदास्येतेनसत्येशोभगवान्पापहाविष्णुः
प्रीयताम् ॥ ममदेहशुद्ध्यर्थंतथाचक्रियाकरणयोग्यतायैइमांप्रायश्चित्तधेनुसंज्ञिकांगांविष्णुदेव-
तांचन्दनपुष्पाद्यर्चितांतन्निष्क्रयीभूतंयथोपपन्नंद्रव्यंवासभ्यब्राह्मणेभ्योहंविभज्यदास्येतेनसत्ये-

श्रीभगवान्पापहाविष्णुःप्रीयताम् ॥ ( पुनःनालिकेरंगृहीत्वाआब्रह्मस्तम्बेतिश्लोकचतुष्टयंपठित्वाप्रणमेत् ॥ )
अद्यपूर्वो० । अपसव्यं । अ०गोत्रस्यअ०प्रेतस्यजन्मप्रभृतिअद्यदिनंयावद्वाङ्मनःकायकृतानांबुद्धिपूर्वकाणांसकृदभ्यासविषयाणांमहापातकोपपातकतत्समानगुरुलघुपापानांप्रायश्चित्तविशोधनार्थंयमदूतयमकिङ्करयमयातुधानानांरौद्राणांअतिभयनिवृत्त्यर्थंवेदस्मृतिपुराणोक्तफलप्राप्त्यर्थंअनुमन्त्रप्रयुक्तकर्त्रादिभेदाभिन्नानांसमस्तपापानांनिरासनार्थंपरलोकेअतितीव्रवेदनान्वितकुम्भिपाकादिनरकभयनिवृत्त्यर्थंइमानियथासंख्याकानिद्रव्याणिसभोपविष्टेभ्योनानागोत्रेभ्योब्राह्मणेभ्योविभज्याहंदास्येतेनसत्येशोभगवान्पापहाविष्णुःप्रीयताम् ॥ पुनर्जलमादाय–अ०गोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थंप्राजापत्यमेकंद्वयंत्रयंवारुद्राभिषेकप्रत्याम्नायद्वाराअहंकरिष्येतेनसत्येशोभगवान्पापहाविष्णुःप्रीयताम् ॥ सव्यं ॥ अन्तभूतंगोमिथुनंरुद्रदैवतंचन्दनपुष्पाद्यर्चितंतन्निष्क्रयीभूतंयथोपपन्नंद्रव्यंगुरवेदास्येतेनसत्येशोभगवान्पापहाविष्णुःप्रीयताम् ॥ अहंनिःपापोभूयासमितिब्रूयाद्यजमानः ॥ त्वंनिःपापोभूयाइतिब्राह्मणावदेयुः ॥ अपसव्यं ॥ इदंप्रायश्चित्ताचरणोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥

सव्यं ॥ अद्यपूर्वो० प्रायश्चित्ताचरणविधेः परिपूर्णतास्तु ॥ पुनर्जलमादाय–अपसव्यं ॥ कृतेनानेन प्रायश्चित्ताचरणेन० अ० गोत्रस्य अ० प्रेतस्य प्रेतत्वनिवृत्तिः असद्गतिमृत्युविनाशः सद्गतिप्राप्तिः अक्षयातृप्तिः यमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अग्रेतनपञ्चदेवानांस्थापनयोग्यतावाप्तिः ॥ मुखावलोकनम्–आज्यंतेजः समुद्दिष्टंआज्यंपापहरंपरम् ॥ आज्यंसुराणामाहारः आज्येलोकाः प्रतिष्ठिताः ॥ १ ॥ हस्तेजलमादाय–इदंआज्यपात्रंआज्यपूरितंसूर्यदैवतंगुरवेदास्येतेनसूर्यस्वरूपिनारायणः प्रीयताम् ॥ ततः स्नानं ॥ इतिपुरश्चरणाङ्गश्राद्धप्रयोगः ॥ अथयज्ञोपवीतधारणप्रयोगः॥ भस्मनात्रिपुण्ड्रंकृत्वा ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो० तिथौश्रौतस्मार्तकर्मानुष्ठानसिद्ध्यर्थंसंस्कारपूर्वकयज्ञोपवीतधारणंकरिष्ये ॥ आपोहिष्ठेतिमन्त्रेणयज्ञोपवीतंप्रक्षाल्यदशधागायत्र्याभिमन्त्र्यतन्तुदेवतानामावाहनम् ॥ हस्तेअक्षतान्गृहीत्वा–प्रथमतन्तौॐकारायनमः ओम्कारंआवाहयामिस्थापयामि ॥१॥ द्वितीयतन्तौअग्नयेनमः अग्निंआ० स्था० ॥२॥ तृतीयतन्तौसर्पेभ्योनमः सर्पान्आ० स्था० ॥ ३ ॥ चतुर्थतन्तौसोमायनमः सोमंआ० स्था० ॥ पञ्चमतन्तौपितृभ्योनमः पितॄन्आ० स्था० ॥ ५ ॥ षष्ठतन्तौप्रजापतयेनमः प्रजापतिंआ० स्था० ॥ ६ ॥ सप्तमतन्तौअनिलायनमः अनिलंआ० स्था०

॥ ७ ॥ अष्टमतन्तौयमाय०यमंआ०स्था० ॥ नवमतन्तौविश्वेभ्योदेवेभ्यो०विश्वान्देवान्आ०स्था० ॥ ९ ॥ ग्रन्थिदेवतावाहनम्–ग्रंथिमध्येब्रह्मणे०ब्रह्माणंआ०स्था० ॥ १ ॥ विष्णवेनमःविष्णुंआ०स्था० ॥ रुद्रायनमःरुद्रंआ०स्था० ॥ प्रणवाद्यावाहितदेवताभ्योनमःसर्वोपचारार्थेगन्धाक्षतपुष्पाणिस० ॥ यज्ञोपवीतधारणमन्त्रः–ॐयज्ञोपवीतं० ॥ १ ॥ इतिमन्त्रेणपृथक्पृथक्यज्ञोपवीतधारणमाद्यन्तयोराचमनंकृत्वाजीर्णसूत्रत्यागः–एतावद्दिनपर्यन्तंब्रह्मत्वंधारितंमया ॥ जीर्णत्वात्त्वत्परित्यागोगच्छसूत्रयथासुखम् ॥ इतिजीर्णंशिरोमार्गेणनिःसार्यशुद्धभूमौत्यक्त्वायथाशक्तिगायत्रींजप्त्वार्पयेत् ॥ अनेननूतनयज्ञोपवीतधारणार्थंकृतेनयथाशक्तिगायत्रीजपकर्मणाश्रीसविताप्रीयतांनमम ॥ इतियज्ञोपवीतधारणप्रयोगः ॥ अथपञ्चदेवतानांस्थापनम् ॥ श्वेतवस्त्रोपरिश्वेताक्षतेनपञ्चकोणंमण्डलंकृत्वातदुपरिपञ्चकलशानांस्थापनम् ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो० तिथौअपसव्यं ॥ अ०गोत्रस्यअ०प्रेतस्य ( स्त्रियाश्चेत्गोत्रायाःप्रेतायाः) प्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थंसव्यं ॥ ब्रह्मादिपञ्चदेवतानांस्थापनप्रतिष्ठापूजनमहंकरिष्ये ॥ ॐअश्माचर्मे० ॥ ॐभूरसि० ॥ ॐआजिघ्र० ॥ ॐसुजातो० ॥ ॐयाऽओषधीः० ॥ ॐअश्वत्थेवो० ॥ ॐयाःफलिनी० ॥ ॐहिरण्यगर्भः० ॥ ॐ

पूर्णादीवि० ॥ कलशोपरिमूर्त्तयःअवश्यमेवस्थापनीयाः ॥ पञ्चदेवतानामावाहनमन्त्राः—ॐ अ॒ग्निमी॑ळेपु॒रोहि॑तंय॒ज्ञस्य॑दे॒वमृ॒त्विज॑म् ॥ होता॑रंरत्न॒धात॑मम् ॥ १ ॥ ॐआब्रह्म॑न्ब्राह्म॒णोब्र॑ह्मव॒र्च्च॒सीजा॑यता॒मारा॒ष्ट्रेरा॑ज॒न्न्य॒ᳶशूर॑ऽइष॒व्व्यो॑तिव्व्या॒धीम॑हार॒थोजा॑यता॒न्दोग्ध्री॑धे॒नुर्वोढा॑न॒ड्वाना॒शुᳶसप्ति॒ᳶपुर॑न्धि॒र्योषा॑जि॒ष्णुर॑थे॒ष्ठाᳶस॒भेयो॒युवास्य॒यज॑मानस्यवी॒रोजा॑यतान्निका॒मेनि॑कामेनᳶप॒र्जन्न्यो॑वर्षतु॒फल॑वत्योन॒ऽओष॑धयᳶपच्यन्ता॒ंयोगक्षे॒मोन॑ᳶकल्पताम् ॥२॥ इतिमंत्रद्वयेनपूर्वकलशोपरिब्रह्मणेनमःब्रह्माणंआवाहयामिस्थापयामिभोब्रह्मन्इहागच्छइहतिष्ठ॥१॥ॐइ॒षेत्त्वो॒र्जेत्त्वा॑-

---

१ ब्रह्मारौप्यमयःकार्योविष्णुःस्वर्णमयोभवेत् ॥ रुद्रस्ताम्रमयःप्रोक्तोयमोलोहमयःस्मृतः ॥ सीसमयस्तत्पुरुषःपञ्चमूर्त्तिरुदाहृता ॥ ब्रह्मारौप्यपलेनैवसुवर्णपलतोहरिः ॥ ताम्रदशपलोरुद्रोलोहत्रिंशत्पलोयमः ॥ पञ्चाशत्पलसीसेनमितस्तत्पुरुषोभवेत् ॥ एतदर्धेनवाकार्यायथाशक्त्याथदेवताः ॥ कुंभोपरिस्थापयेत्तुब्रह्माणंमन्त्रपूर्वकं ॥ अग्निमीळेतथाऽऽब्रह्मन्ब्राह्मणःपूर्वपात्रके ॥ इषेत्वाविष्णोररराटपश्चात्कुंभेहरिंन्यसेत ॥ अग्नआयांहिचनमःशंभवायेतिचोत्तरे ॥ कलशेरुद्रंविन्यस्यदक्षिणेचतथायमं ॥ शन्नोदेवीयमायत्वामन्त्राभ्यांकलशेन्यसेत् ॥ ततःस्तुमध्यकलशेतत्पुरुषंन्यसेद्बुधः ॥ प्रेताजयताऽन्त्यकर्मस्थाप्येत्रंमन्त्रपूर्वकं ॥ पूजयित्वाचधान्यानिप्रथक्पञ्चानिवेदयेत् ॥ ब्रह्मणेतण्डुलादेयाविष्णवेमुद्गधान्यकम् ॥ रुद्रायचैवगोधूमामाषधान्यंयमायच ॥ तिलास्तत्पुरुषायैवंपञ्चधान्यानिकल्पयेत् ॥ ब्रह्मादिपञ्चदेवानांकृत्वापूजांविधानतः ॥ तेषामग्रेतुकर्तव्यंतर्पणंविष्णुसन्निधौ ॥

 वायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावती- 
रनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशंसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमानस्यपशून्पा-
 हि ॥ १ ॥ ॐविष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसि-
विष्णवेत्वा ॥ २ ॥ इतिमंत्रद्वयेनपश्चिमकलशोपरिविष्णवेनमः विष्णुंआ० स्था० ॥ भोवि०इ०
इ० ॥ ॐअग्नऽआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ १ ॥ ॐनमः श-
म्भवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ॥ २ ॥ इति-
मंत्रद्वयेनउत्तरकलशोपरिरुद्रायनमः रुद्रंआ०स्था० ॥ भोरुद्रइ०इ० ॥ ॐशन्नोदेवीरभिष्टयऽ
आपोभवन्तुपीतये ॥ शंयोरभिस्रवन्तुनः ॥ १ ॥ ॐयमायत्वामखायत्वासूर्य्यस्यत्वातपसे ॥
देवस्त्वासवितामध्वानक्तुपृथिव्याःसꣳस्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ २ ॥ इति-
मंत्रद्वयेनदक्षिणकलशोपरियमायनमः यमंआ०स्था० ॥ भोय०इ०इ० ॥ ४ ॥ ॐप्रेताजयतान- 
रऽइन्द्रोवःशर्म्मयच्छतु ॥ उग्रावः सन्तुबाहवोनाधृष्यायथासथ ॥ १ ॥ ॐअक्रन्कर्म्मकर्म्म-
कृतः सहवाचामयोभुवा ॥ देवेभ्यःकर्मकृत्वास्तम्प्रेतसचाभुवः ॥ २ ॥ इतिमंत्रद्वयेनमध्यक-

लशोपरितत्पुरुषायनमः तत्पुरुषंआ०स्था० ॥ भोत०इ०इ० ॥ ५ ॥ मनोजूतिरितिप्रतिष्ठाकार्या—ॐमनोजूति० ब्रह्मविष्णुरुद्रयमतत्पुरुषाः सुप्रतिष्ठितावरदाभवेयुः ॥ इदमत्रगन्धंपुष्पंस० ॥ आचमनं ॥ अद्यपूर्वो० ॥ अपसव्यं ॥ अ०गोत्रस्यअ०प्रेतस्य ( स्त्रियाश्चेत्गोत्रायाःप्रेतायाः ) प्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थं ॥ सव्यं ॥ ब्रह्मादिपञ्चदेवतानांपञ्चोपचारैःपूजनमहंकरिष्ये ॥ ब्रह्मविष्णुरुद्रयमतत्पुरुषेभ्यः चन्दनंपरिकल्पयामि ॥ पुष्पंधूपंदीपंनैवेद्यम् ॥ पञ्चकलशाग्रेपञ्चधान्यसमर्पणम् ॥ ब्रह्मणेतण्डुलानैवेद्यमिदंते ॥ विष्णवेमुद्गाःनै० ॥ रुद्रायगोधूमानै० ॥ यमायमाषानै० ॥ तत्पुरुषायतिलानै० ॥ ५ ॥ फलताम्बूलहिरण्यम् ॥ अपसव्यंएतत्पञ्चदेवतापूजनोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो० ब्रह्मादिपञ्चदेवतानांपञ्चोपचारैःपूजनविधिःपरिपूर्णतास्तु ॥ अपसव्यं ॥ कृतेनानेनपञ्चदेवतानांपूजनेनअ०गोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्तिः ॥ असद्गतिमृत्युविनाशःसद्गतिप्राप्तिःअक्षय्या-

---

१ गोधूमास्तंडुलामुद्गामाषास्तिलाद्यनुक्रमात् ॥ प्रस्थमात्रप्रमाणं च देवतासु समर्पयेत् ॥

तृप्तिः ॥ यमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अग्रेतनपञ्चदेवतानांस्वैःस्वैर्मन्त्रैर्विष्णुसान्नि-
धौतर्पणयोग्यतावाप्तिः ॥ अथ पञ्चदेवतानांतर्पणम् ॥ ताम्रपात्रेजलदुग्धतिलयवसर्वौषधीतुलसी-
गन्धमुद्रार्पणप्रक्षेपः ॥ शङ्खेनतर्पणंकुर्यात् ॥ तद्यथा ॥ अद्यपूर्वो० ॥ अपसव्यंअ०गोत्रस्यअ०प्रेतस्य
( स्त्रियाश्चेत्गोत्रायाःप्रेतायाः ) प्रेतत्वोत्तारणार्थंअसद्व०सद्गति०सव्यंब्रह्मादिपञ्चदेवानांस्वैः
स्वैर्मन्त्रैःप्रेतस्यपिपासादोषनिवृत्तयेविष्णुसान्निधौतर्पणमहंकरिष्ये ॥ अथ ब्रह्मतर्पणम्—ॐअग्नि-
मीळेपुरोहितंयज्ञस्यदेवमृत्विजं ॥ होतारंरत्नधातमम् ॥ १ ॥ ॐआब्रह्मन्ब्राह्मणोब्रह्मवर्चसी
जायतामाराष्ट्रेराजन्न्यःशूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिः
पुरन्धिर्य्योषाजिष्णुरथेष्ठाःसभेयोयुवास्ययजमानस्यवीरोजायतान्निकामेनिकामेनःपर्जन्न्योवर्ष-
तुफलवत्योनऽओषधयःपच्च्यन्तांय्योगक्षेमोनःकल्पताम् ॥ २ ॥ ब्रह्मयज्ञानम्प्रथमम्पुरस्ताद्वि
सीमतःसुरुचोवेनऽआवः ॥ सबुध्न्याऽउपमाऽअस्यविष्ठाःसतश्च्चयोनिमसतश्च्चविवः ॥ ३ ॥

१ स्वकीयैःसूक्तमन्त्रैश्चतिलदुग्धजलैःप्रथक् ॥प्रेतमुद्दिश्यपरनेनपिपासादिनिवृत्तये ॥ अग्निमीळेतथाब्रह्मन्ब्रह्मयज्ञानमेवच ॥ ब्रह्मणेब्राह्मणंचैवब्राह्मणासस्तथैवच ॥ तथाचब्राह्मणमयद्युत्तिष्ठब्रह्मणस्पते ॥ ब्राह्मणोस्यप्रनन्नहितथैवब्रह्मणस्पते ॥ ब्रह्मतर्पणमित्युक्तंततस्तुविष्णुतर्पणम् ॥

[illegible]-
मांकृयायाऽअयोगूङ्कामायपुँश्चलूमतिक्रुष्टायमागधम् ॥ ४ ॥ ब्राह्मणासःपितरःसोम्यासः
शिवेनोद्यावांपृथिवीऽअनेहसां ॥ पूषानंःपातुदुरितादृतावृधोरक्षामाकिन्नोंऽअघशंसऽईशत ॥५॥
ब्राह्मणमद्यविदेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयःसुधातुदक्षिणम् ॥ अस्मद्रातादेवत्राग‌च्छत
प्रदातारमाविशत ॥६॥ उत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुमरुतःसुदानवऽइन्द्रप्रा
शूर्भवासचा ॥ ७ ॥ ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्या-
ᳬशूद्रोऽअजायत ॥ ८ ॥ प्रनूनम्ब्रह्मणस्पतिर्म्मन्त्रंवदत्युक्थ्यम् ॥ यस्मिन्निन्द्रोवरुणोमित्रोऽ
अर्य्यमादेवाऽओकाᳬसिचक्रिरे ॥ ९ ॥ ब्रह्मणस्पतेत्वमस्ययन्तासूक्तस्यबोधितनयञ्चजिन्व ॥
विश्वन्तद्भद्रंयदवन्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ यऽइमाविश्वाविश्वकर्म्मायोनःपिताऽन्न-
पतेन्नस्यनोदेहि ॥ १० ॥ ब्रह्मक्षत्रम्पवतेतेजऽइन्द्रियःसुरयासोमःसुतऽआसुतोमदाय ॥
शुक्रेणदेवदेवताःपिपृग्धिरसेनान्नंयजमानायधेहि ॥ ११ ॥ ब्रह्मसूर्य्यसमञ्ज्योतिर्द्यौःसमुद्रस-
मःसरः ॥ इन्द्रःपृथिव्यैवर्षीयान्गोस्तुमात्रानविद्यते ॥ १२ ॥ रुचम्ब्राह्मञ्जनयन्तोदेवाऽअ-

ग्ग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्वशे ॥ १३ ॥ इतिब्रह्मतर्पणम् ॥ अथ विष्णुतर्पणम्—ॐइषेत्वोर्जेत्त्वावायवस्थदेवोवः सविताप्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायध्व मघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनईशतमाघशꣳसोध्रुवाऽअस्मिन्गो-पतौस्यातबह्वीर्य्यजमानस्यपशून्पाहि ॥ १ ॥ ॐसहस्रशीर्षा० ॥ २२ ॥ युञ्जतेमनऽउतयुञ्ज-तेधियोविप्राविप्रस्यबृहतोविपश्चितः॥ विहोत्रादधेवयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टु-तिः ॥३॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरेस्वाहा ॥ ४ ॥ इरावतीधे-नुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोम-यूखैःस्वाहा ॥ ५ ॥ देवश्रुतौदेवेष्वाघोषतम्प्राचीप्प्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वंयज्ञन्नयतम्माजि-ह्वरतम् ॥ स्वङ्गोष्ठमावदतन्देवीदुर्य्येऽआयुर्म्मानिर्वादिष्टम्प्रजाम्मानिर्वादिष्टमत्ररमेथांवर्ष्मन्-

१ इषेत्वापौरुषसूक्तंअद्वयः सम्भृतातिषट् ॥ युञ्जतेद्वौदिविविष्णुस्तथारक्षोहणद्वयम् ॥ यातेधामान्युष्मसिचपुनश्चाग्नेस्तनूरसि ॥ वाच-स्पतयेपवस्वोपयामगृहीतत्रयम् ॥ आग्रयणोहरिरसिमघवेत्वातथैवच ॥ देवसवितःप्रसुवद्वयोदेवाययथाक्रमम् ॥ विष्णोःकर्म्माणितद्विष्णोःक्रमः सपत्नहा ॥ त्रीणिपदातद्विप्रासएतद्विष्णोश्चतर्पणम् ॥ अदित्यै-युन्दनमसीतिविष्णुदैवतान्यमन्त्रास्तुकारिकास्वनुक्तास्तथापिलिखितप्राचीन-पद्धतिषुविद्यमानत्वाद्गृहीताः ॥

द्पृथिव्व्याः ॥६॥ विष्णोर्नुकंवीर्य्याणिप्रवोचंयः पार्थिवानिविममेरजाᳪसि ॥ योऽअस्कभायदु
त्तरᳬसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्त्वा ॥ ७ ॥ दिवोवाविष्णऽउतवापृथिव्व्यामहो
वाविष्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्ताव्वसुनापृणस्वाप्प्रयच्छदक्षिणादोतसव्व्याद्विष्णवेत्त्वा
॥ ८ ॥ प्रतद्विष्णुस्तवतेवीर्य्येणमृगोनभीमः कुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षि-
यन्तिभुवनानिविश्वा ॥ ९ ॥ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि ॥
वैष्णवमसिविष्णवेत्त्वा ॥१०॥ दिविविष्णुर्व्यक्रᳪस्तजागतेनच्छन्दसाततोनिर्भक्तोयोस्मान्द्वे-
ष्टियञ्चवयन्द्विष्मोन्तरिक्षेविष्णुर्व्यक्रᳪस्तत्रैष्टुभेनच्छन्दसाततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चवय-
न्द्विष्मः पृथिव्व्यांविष्णुर्व्यक्रᳪस्तगायत्रेणच्छन्दसाततोनिर्भक्तोयोस्मान्द्वेष्टियञ्चवयन्द्वि-
ष्मोस्मादन्नादस्यैप्प्रतिष्ठायाऽअगन्मस्वः सञ्ज्योतिषाभूम ॥ ११ ॥ रक्षोहणंवलगहनंवैष्णवीमि
२३ दमहन्तंवलगमुत्किरामियम्मेनिष्ट्योयममात्त्योनिचखानेदमहन्तंवलगमुत्किरामियम्मेसमानो-
यमसमानोनिचखानेदमहन्तंवलगमुत्किरामियम्मेसबन्धुर्य्यमसबन्धुर्न्निचखानेदमहन्तंवलग-
मुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥ १२ ॥ यातेधामान्न्युश्मसिगम-

ध्यैयत्रगावोभूरिशृङ्गाऽअयासः ॥ अत्राहतदुरुगायस्यविष्णोःपरमम्पदमवभातिभूरि ॥ ब्रह्म-
वनित्वाक्षत्रवनिरायस्पोषवनिपर्य्यूहामि ॥ ब्रह्मदृꣳहक्षत्रन्दृꣳहायुर्दृꣳहप्रजान्दृꣳह ॥१३॥ अग्नेस्त-
नूरसिविष्णवेत्वासोमस्यतनूरसिविष्णवेत्वातिथेरातिथ्यमसिविष्णवेत्वाश्येनायत्वासोमभृते-
विष्णवेत्वाग्नयेत्वारायस्पोषदेविष्णवेत्वा ॥ १४ ॥ वाचस्पतयेपवस्वविष्णोऽअꣳशुभ्यांगभ-
स्तिपूतः ॥ देवोदेवेभ्यःपवस्वयेषाम्भागोसि ॥१५॥ उपयामगृहीतोस्याग्रयणोसिस्वाग्रयणः ॥
पाहियज्ञम्पाहियज्ञपतिंविष्णुस्त्वामिन्द्रियेणपातुविष्णुन्त्वम्पाह्यभिसवनानिपाहि ॥ १६ ॥ उप-
यामगृहीतोसिमधवेत्वोपयामगृहीतोसिमाधवायत्वोपयामगृहीतोसिशुक्रायत्वोपयामगृहीतोसि
शुचयेत्वोपयामगृहीतोसिनभसेत्वोपयामगृहीतोसिनभस्यायत्वोपयामगृहीतोसीषेत्वोपयामगृ-
हीतोस्यूर्जेत्वोपयामगृहीतोसिसहसेत्वोपयामगृहीतोसिसहस्यायत्वोपयामगृहीतोसितपसेत्वो-
पयामगृहीतोसितपस्यायत्वोपयामगृहीतोस्यꣳहसस्पतयेत्वा ॥ १७ ॥ उपयामगृहीतोस्यादित्ये-
भ्यस्त्वा ॥ विष्णऽउरुगायैषतेसोमस्तꣳरक्षस्वमात्वादभन् ॥ १८ ॥ देवसवितःप्रसुवयज्ञंप्र-
सुवयज्ञपतिंभगाय ॥ दिव्योगन्धर्वःकेतपूःकेतन्नःपुनातुवाचस्पतिर्वाजंनःस्वदतुस्वाहा ॥ १९ ॥

अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्मित्रावरुणावभ्यषिञ्चन्याभि-
रिन्द्रमनयन्नत्यरातीः ॥ २० ॥ विष्णोःकर्म्माणिपश्यतयतोव्रतानिपस्पशे ॥ इन्द्रस्ययुज्यः
सखा ॥ २१ ॥ तद्विष्णोःपरमम्पदꣳसदापश्यन्तिसूरयः ॥ दिवीवचक्षुराततम् ॥ २२ ॥ विष्णोः
क्रमोसिसपत्नहागायत्रञ्छन्दऽआरोहपृथिवीमनुविक्रमस्वविष्णोःक्रमोस्यरातीयतोहन्ताजाग
तञ्छन्दआरोहदिवमनुविक्रमस्वविष्णोःक्रमोसिशत्रूयतोहन्तानुष्टुभञ्छन्दऽआरोहदिशोनुविक्र
मस्व ॥ २३ ॥ त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्म्माणिधारयन् ॥२४॥ तद्वि-
प्रासोविपन्यवोजागृवाꣳसःसमिन्धते ॥ विष्णोर्यत्परमम्पदम् ॥ २५ ॥ अदित्यैव्व्युन्दनम
सिविष्णोस्तुपोस्यूर्णम्रदसन्त्वास्तृणामिस्वासस्थान्देवेभ्योभुवपतयेस्वाहाभुवनपतयेस्वाहा
भूतानाम्पतयेस्वाहा ॥ २६ ॥ अस्कन्नमद्यदेवेभ्यऽआज्यꣳसम्भ्रियासमङ्घ्रिणाविष्णोमात्वाव-
क्रमिषंवसुमतीमग्नेतेच्छायामुपस्थेषंविष्णोस्थानमसीतऽइन्द्रोवीर्य्यमकृणोदूर्ध्वोध्वरऽआस्थात्
॥२७॥ ऊर्ग्गस्याङ्गिरस्यूर्णम्रदाऽऊर्ज्जम्मयिधेहि ॥ सोमस्यनीविरसिविष्णोःशर्म्मासिशर्म्मयजमा
नस्येन्द्रस्ययोनिरसिसुसस्याःकृषीस्कृधि ॥ उच्छ्रयस्ववनस्पतऽऊर्ध्वोमापाह्यꣳहसऽआस्ययज्ञस्यो

ह्वर्चः॥२८॥उरुविष्णोविक्रमस्वोरुक्षयायनस्कृधि॥ घृतंघृतयोनेपिबप्रप्रयज्ञपतिन्तिरस्वाहा॥२९॥
अत्यन्न्याँ२ऽअगान्नान्याँ२ऽउपागामर्वाक्त्वापरेभ्योविदंपरोवरेभ्यः॥तन्त्वाजुषामहेदेववनस्पते
देवयज्यायैदेवास्त्वादेवयज्यायैजुषन्तांविष्णवेत्वा ॥ ओषधेत्रायस्वस्वधितेमैनꣳहिꣳसीः ॥ ३० ॥
धातारातिःसवितेदञ्जुषन्ताम्प्रजापतिर्निधिपादेवोऽअग्निः ॥ त्वष्टाविष्णुःप्रजयासꣳरराणायज
मानायद्रविणंदधातुस्वाहा ॥३१॥ इन्द्रश्चसम्राड्वरुणश्चराजातौतेभक्षञ्चक्रतुरग्रऽएतम् ॥ तयो
रहमनुभक्षंभक्षयामिवाग्देवीजुषाणासोमस्यतृप्यतुसहप्राणेनस्वाहा ॥३२॥ विश्वेदेवाऽअꣳशुषु-
न्युप्तोविष्णुराप्रीतऽआप्यायमानोयमः सूयमानोविष्णुःसम्भ्रियमाणोवायुःपूयमानःशुक्रःपूत
शुक्रःक्षीरश्रीर्मन्थीसक्तुश्रीर्विश्वेदेवाः ॥३३॥ सोमꣳराजानमवसेग्निमन्वारभामहे ॥ आदि-
त्यान्विष्णुꣳसूर्यम्ब्रह्माणञ्चबृहस्पतिꣳस्वाहा ॥ ३४ ॥ अर्यमणम्बृहस्पतिमिन्द्रन्दानायचो-
दय ॥ वाचंविष्णुꣳसरस्वतीꣳसवितारञ्चवाजिनꣳस्वाहा ॥ ३५ ॥ अग्निरेकाक्षरेणप्राणमुदज-
यत्तमुज्जेषमश्विनौद्व्यक्षरेणद्विपदोमनुष्यानुदजयतान्तानुज्जेषंविष्णुस्त्र्यक्षरेणत्रीँल्लोकानुदजयत्ता
नुज्जेषꣳसोमश्चतुरक्षरेणचतुष्पदःपशूनुदजयत्तानुज्जेषम् ॥ ३६ ॥ पवित्रेस्थोवैष्णव्यौसवितुर्वः

[illegible]
पुनेतच्छ्रेकेयम् ॥३७॥ प्रपर्वतस्यवृषभस्यपृष्ठान्नावश्चरन्तिस्वसिचऽइयानाः ॥ ताऽआववृतन्न
धरागुदक्ताऽअहिम्बुध्न्यमनुरीयमाणाः ॥ विष्णोर्विक्रमणमसिविष्णोर्विक्रान्तमसिविष्णोः
क्रान्तमसि ॥ ३८ ॥ इतिविष्णुतर्पणम् ॥ अथरुद्रतर्पणम् ॥ अग्नऽआयाहिवीतयेगृणा-
नोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ १ ॥ नमःशंभवायचमयोभवायचनमःशङ्करायचमय-
स्करायचनमःशिवायचशिवतरायच ॥ २ ॥ वयꣳसोमव्रतेतवमनस्तनूषुबिभ्रतः ॥ प्रजावन्तः
सचेमहि ॥३॥ एषतेरुद्रभागःसहस्वस्राम्बिकयातञ्जुषस्वस्वाहैषतेरुद्रभागऽआखुस्तेपशुः ॥४॥
अवरुद्रमदीमह्यवदेवंत्र्यम्बकम्॥यथानोवस्यसस्करद्यथानःश्रेयसस्करद्यथानोव्यवसाययात्॥५॥
भेषजमसिभेषजङ्गवेश्वायपुरुषायभेषजम् ॥ सुखम्मेषायमेष्यै ॥६॥ त्र्यम्बकंयजामहेसुगन्धि-
म्पुष्टिवर्द्धनम् ॥ उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ॥७॥ त्र्यम्बकंयजामहेसुगन्धिम्प-

---

१. रुद्रस्यतर्पणंतातअग्नआयाहिवीतये ॥ नमःशंभवायेतिचएषतेश्रौपठेत्पुनः ॥ उग्रश्चाग्निहृदयेनतथोग्रंलोहितेनच ॥ अस्मिन्महेमारु-
द्रायततस्तुयमतर्पणम् ॥

तिवेदनम् ॥ उर्व्वारुकमिवबन्धनादितोमुक्षीयमामुतः ॥८॥ एतत्तेरुद्रावसन्तेनपरोमूजवतोतीं-
हि ॥ अवततधन्वापिनाकावसःकृत्तिवासाऽअहिंसन्नःशिवोतीहि ॥९॥ त्र्यायुषम्० ॥१०॥शि
वोनामासिस्वधितिस्तेपितानमस्तेऽअस्तुमामाहिंसीः॥ निवर्त्तयाम्यायुषेन्नाद्यायप्रजननायरा-
यस्पोषायसुप्रजास्त्वायसुवीर्य्याय॥११॥ उग्रश्चभीमश्चध्वान्तश्चधुनिश्च॥सासह्वांश्चाभियुग्वाच-
विक्षिपःस्वाहा ॥१२॥ अग्निंहृदयेनाशनिंहृदयाग्रेणपशुपतिंकृत्स्नहृदयेनभवंयक्ना ॥ सर्वं-
मतस्नाभ्यामीशानम्मन्न्युनामहादेवमन्तःपर्शव्येनोग्रन्देवंवनिष्ठुनावसिष्ठहनुःशिङ्गीनिको-
श्याभ्याम् ॥१३॥ उग्रंलोहितेनामित्रंसौव्रत्त्येनरुद्रंदौर्वत्येनेन्द्रंप्रक्रीडेनमरुतोबलेनसाध्यान्प्र
मुदा ॥ भवस्यकंठ्यंरुद्रस्यान्तःपार्श्व्यम्महादेवस्ययकृच्छर्वस्यवनिष्ठुःपशुपतेःपुरीतत् ॥१४॥
अस्मिन्न्महत्यर्णवेन्तरिक्षेभवाऽअधि ॥ तेषांसहस्रयोजनेवधन्वानितन्मसि ॥१५॥ इमा-
रुद्रायतवसेकपर्द्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वंपुष्टंग्रामेअस्मि
न्ननातुरम्॥१६॥ इतिरुद्रतर्पणम् ॥ अथ यमतर्पणम्॥ ॐशन्नोदेवी० ॥१॥ यमायत्त्वाङ्गिरस्वतेपितृ

१ शन्नोदेवीयमायत्वायमायत्वाङ्गिरस्वते ॥ यमाययमसूक्तंचअसीयमस्तथैवच ॥ तथायमायस्वाहेतिकृत्वातुयमतर्पणम् ॥

मतेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रे॥२॥यमायत्यमसूमथर्वभ्योवतोका॑ऽसंवत्सरायप
र्य्यायिणीम्परिवत्सरायाविंजामिदावत्सरायतीत्वरीमिद्वत्सरायातिष्कद्वरींवत्सरायाविजर्जराऽसं-
वत्सरायपलिक्नीमृभुभ्योंजिनसन्धᳫंसाध्येभ्यश्चर्म्मम्म्नम्॥३॥ यमेनदत्तान्त्रितऽएनमायु-
नगिन्द्रऽएणम्प्रथमोऽअध्यतिष्ठत॥गन्धर्वोऽअस्यरशनामगृभ्णात्सूरादश्वंवसवोनिरतिष्ठ॥४॥
असियमोअस्यादित्योऽअर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्तऽआहुस्तेत्रीणि-
निविबन्धनानि ॥ ५ ॥ यमायस्वाहान्तकायस्वाहामृत्यवेस्वाहाब्रह्मणेस्वाहाब्रह्महत्यायैस्वाहा-
विश्वेभ्योदेवेभ्यः स्वाहाद्यावापृथिवीभ्याᳫंस्वाहा ॥ ६ ॥ अपेतोयन्तुपणयोसुम्नादेवपी-
यवः॥अस्यलोकःसुतावतः॥ द्युभिरहोभिरक्तुभिर्व्यक्तंयमोददात्ववसानमस्मै ॥१॥सवितातेश-
रीरेभ्यःपृथिव्यांलोकमिच्छतु ॥ तस्मैयुज्यन्तामुस्रियाः ॥२॥ वायुःपुनातुसवितापुनात्वग्नेर्भ्रा-
जसासूर्य्यस्यवर्च्चसा ॥ विमुच्यन्तामुस्रियाः ॥ ३ ॥ अश्वत्थेवोनिषदनम्पर्णेवोवसतिष्कृता ॥
गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥४॥ सवितातेशरीराणिमातुरुपस्थऽआवपतु ॥ तस्मैपृ-
थिवीशम्भव ॥५॥ प्रजापतौत्वादेवतायामुपोदकेलोकेनिदधाम्यसौ ॥ अपनःशोशुचदघम् ॥६॥

अ० क० परम्मृत्योऽअनुपरेहिपन्थाँय्यस्तेऽअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्र- प्रदीपः
॥७६॥ जाँरीरिषोमोतवीरान् ॥ ७ ॥ शंहितेघृणिःशन्तेभवन्त्विष्टकाः ॥ शन्तेभवन्त्वग्नयःपार्थिवा-
सोमात्वाभिशूशुचन् ॥ ८ ॥ कल्पन्तान्तेदिशस्तुभ्यमापःशिवतमास्तुभ्यम्भवन्तुसिन्धवः ॥
अन्तरिक्षंशिवन्तुभ्यङ्कल्पन्तान्तेदिशःसर्व्वाः ॥९॥ अश्मन्वतीरीयतेसंरभध्वमुत्तिष्ठतप्र-
तरतासखायः ॥ अत्राजहीमोशिवायेऽअसञ्छिवान्वयमुत्तरेमाभिवाजान् ॥ १० ॥ अपाघमप-
किल्बिषमपकृत्यामपोरपः ॥ अपामार्गत्वमस्मदपदुःष्वप्न्यंसुव ॥ ११ ॥ सुमित्रियान० ॥१२॥
अनड्वाहमन्वारभामहेसौरभेयँस्वस्तये ॥ सनऽइन्द्रऽइवदेवेभ्योवह्निःसन्तारणोभव ॥१३॥
उद्वयन्तम० ॥१४॥ इमञ्जीवेभ्यःपरिधिन्दधामिमैषान्नुगादपरोऽअर्थमेतम् ॥ शतञ्जीवन्तु-
शरदःपुरुचीरन्तम्मृत्युन्दधताम्पर्व्वतेन ॥ १५ ॥ अग्नऽआयूँषिपवसऽआसुवोर्ज्जमिषञ्चनः ॥
आरेबाधस्वदुच्छुनाम् ॥ १६ ॥ आयुष्मानग्नेहविषावृधानोघृतप्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वा ॥७६॥
मधुचारुगव्यम्पितेवपुत्रमभिरक्षतादिमान्स्वाहा ॥ १७ ॥ परीमेगामनेषतपर्य्यग्निमहृषत ॥ देवे-
ष्वक्रतश्रवःकऽइमाँऽआदधर्षति ॥ १८ ॥ क्रव्यादमग्निम्प्रहिणोमिदूरंय्यमराज्यङ्गच्छतुरिप्र-

प्राहः ॥ इदंवायुमितरेजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ॥१९॥ वहवपांजातवेदःपितृभ्यो यत्रैनान्वेत्थनिहितान्पराके ॥ मेदसःकुल्याऽउपतान्स्रवन्तुसत्याऽएषामाशिषःसन्नमन्तां स्वाहा ॥ २० ॥ स्योनापृथिविनो० ॥ अपनःशोशुचदघम् ॥२१॥ अस्मात्वमधिजातोसित्व- दयञ्जायताम्पुनः ॥ असौस्वर्गायलोकायस्वाहा ॥२२॥ इति यमतर्पणम् ॥ अथ तत्पुरुषतर्प- णम् ॥ ॐप्रेताजयतानरऽइन्द्रोवःशर्म्मयच्छतु ॥ उग्रावःसन्तुबाहवोनाधृष्यायथासथ ॥१॥ अक्रन्कर्म्मकर्म्मकृतःसहवाचामयोभुवा ॥ देवेभ्यःकर्म्मकृत्वास्तम्प्रेतसचाभुवः ॥२॥ रूपेण- वोरूपमभ्यागान्तुथोवोविश्ववेदाविभजतु ॥ ऋतस्यपथाप्रेतचन्द्रदक्षिणाविश्वःपश्यव्व्यन्तरिक्षं यतस्वसदस्यैः ॥३॥ प्रेदग्नेज्ज्योतिष्मान्याहिशिवेभिरर्चिभिष्ट्वम् ॥ बृहद्भिर्भानुभिर्भासन्मा हिंसीस्तन्वाप्रजाः ॥४॥ यदाकूतात्समसुस्रोद्धृदोवामनसोवासम्भृतञ्चक्षुषोवा ॥ तदनुप्रेत- सुकृतामुलोकंयत्रऽऋषयोजग्मुःप्रथमजाःपुराणाः ॥ ५ ॥ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु- चन्द्रमाः ॥ तदेवशुक्रन्तद्ब्रह्मताऽआपःसप्रजापतिः ॥ ६ ॥ सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषा-

१ तर्पणंतत्पुरुषस्यमन्त्रैस्तुतदनन्तरं ॥ प्रेताजयताऽक्रन्कर्मरूपेण च तथैव च ॥ प्रेदग्नेचयदाकूतातदेवापुरुषतर्पणम् ॥

दधि ॥ नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नमध्येपरिजग्ग्रभत् ॥ ७ ॥ नतस्यप्प्रतिमाऽअस्तियस्यनाममहद्य-
शः॥ हिरण्यगर्ब्भऽइत्त्येषमामाहिꣳसीदित्त्येषायस्म्मान्नजातऽइत्त्येषः ॥ ८ ॥ एषोहदेवꣳप्प्रदि
शोनुसर्व्वाःपूर्व्वोहजातःसऽउगर्ब्भेऽअन्तः ॥ सऽएवजातःसजनिष्ष्यमाणःप्प्रत्यङ्जनास्तिष्ट्ठतिस-
र्व्वतोमुखः ॥ ९ ॥ यस्म्माज्जातन्नपुराकिञ्चनैवयऽआबभूवभुवनानिविश्वा ॥ प्रजापतिःप्प्रजया-
सꣳरराणस्त्रीणिज्ज्योतीꣳषिसचतेसषोडशी ॥ १० ॥ येनद्यौरुग्रापृथिवीचदृढायेनस्वस्तभितं-
य्येननाकः ॥ योऽअन्तरिक्षेरजसोविमानःकस्मैदेवायहविषाविधेम ॥ ११ ॥ यङ्क्रन्दसीऽअव-
सातस्तभानेऽअभ्यैक्षेताम्मनसारेजमाने ॥ यत्राधिसूरऽउदितोविभातिकस्म्मैदेवायहविषावि-
धेम ॥ आपोहयद्बृहतीर्य्यश्चिदापः ॥ १२ ॥ वेनस्तत्पश्श्यन्निहितङ्गुहासद्यत्रविश्श्वम्भवत्त्येक-
नीडम् ॥ तस्मिन्निदꣳसञ्चविचैतिसर्व्वꣳसऽओतःप्प्रोतश्चविभूःप्प्रजासु ॥ १३ ॥ प्रतद्वोचेदमृत-
न्नुविद्वान्गन्धर्व्वोधामविभृतङ्गुहासत् ॥ त्रीणिपदानिनिहिताग्गुहास्ययस्तानिवेदसपितुःपितासत्
॥ १४ ॥ सनोबन्धुर्ज्जनितासविधाताधामानिवेदभुवनानिविश्वा ॥ यत्रदेवाऽअमृतमानशाना-
स्तृतीयेधामन्नद्ध्यैरयन्त ॥१५॥ परीत्त्यभूतानिपरीत्त्यलोकान्परीत्त्यसर्व्वाःप्प्रादिशोदिशश्च ॥ उप-

स्थायप्रथमजामृतस्यात्मनात्मानमभिसंविवेश ॥ १६ ॥ परिद्यावापृथिवीसद्यऽइत्वापरिलो-
कान्परिदिशःपरिस्वः ॥ ऋतस्यतन्तुंविततंविचृत्यतदपश्यत्तदभवत्तदासीत् ॥ १७ ॥ सदस-
स्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम् ॥ सनिम्मेधामयासिषꣳस्वाहा ॥ १८ ॥ याम्मेधान्देव-
गणाःपितरश्चोपासते ॥ तयामामद्यमेधयाग्नेमेधाविनङ्कुरुस्वाहा ॥ १९ ॥ मेधाम्मेवरुणोददातु-
मेधामग्निःप्रजापतिः ॥ मेधामिन्द्रश्चवायुश्चमेधान्धाताददातुमेस्वाहा ॥ २० ॥ इदम्मेब्रह्मच-
क्षत्रञ्चोभेश्रियमश्नुताम् ॥ मयिदेवादधतुश्रियमुत्तमान्तस्यैतेस्वाहा ॥ २१ ॥ इतितत्पुरुषतर्प-
णम् ॥ अथ पौराणोक्तमन्त्राः—मन्त्रान्तेसर्वदेवानांमन्त्रंपौराणिकंपठेत् ॥ भगवान्पापहाविष्णु-
स्तृप्यतामितिसंवदेत् ॥ १ ॥ अनादिनिधनोदेवःशङ्खचक्रगदाधरः ॥ अक्षय्यःपुण्डरीकाक्षःप्रेत-
मोक्षप्रदोभवेत् ॥२॥ भगवन्वासुदेवायशुद्धयज्ञस्वरूपिणे ॥ यज्ञत्वंदेवदेवेशयज्ञधर्मंजयाक्षर
॥ ३ ॥ व्यञ्जकःकामभक्तानांप्रभोविष्णोनमोस्तुते ॥ अच्युतानन्तयज्ञेशअगतीनांगतिर्भव ॥
अस्यप्रेतस्यमोक्षार्थंसुप्रीतोभवतर्पणात् ॥४॥ अतसीपुष्पसङ्काशंपीतवाससमच्युतम् ॥ येनमस्य
न्तिगोविन्दंनतेषांविद्यतेभयम् ॥ ५ ॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव ॥ संसारार्णव-

मग्नानांप्रसीदपुरुषोत्तम ॥६॥ नारायणसुरश्रेष्ठलक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाथप्रेतमोक्ष-प्रदोभव ॥७॥ हिरण्यगर्भपुरुषव्यक्ताव्यक्तस्वरूपक ॥ अस्यप्रेतस्यमोक्षार्थंसुप्रीतोभवसर्वदा ॥ ८ ॥ अपसव्यम् ॥ हस्तेजलमादाय-एतद्ब्रह्मादिपञ्चदेवतानांतर्पणोपार्जितंपुण्यंअ० गोत्रायअ० प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो० ब्रह्मादिपञ्चदेवतानांतर्पणंविधायन्यूनातिरिक्तंतत्सर्वं-भवतांब्राह्मणानांवचनात्श्रीविष्णोःप्रसादात्सर्वंपरिपूर्णमस्तु ॥ अपसव्यं ॥ पुनर्जलमादाय-कृते नानेनब्रह्मादिपञ्चदेवतानांतर्पणेनअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्तिः। असद्गतिमृत्युविनाशः। सद्गतिप्राप्तिः। अक्षय्यातृप्तिः। यमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अनेनेतनब्रह्मादिपञ्चदे-वतानांजपयोग्यतावाप्तिः ॥ इति पञ्चदेवतानांतर्पणम् ॥ अथ पञ्चदेवतानांसूक्तजपः ॥ सूक्तजपार्थं

---

१ ततस्तुजापकाःसर्वेजपेयुःसूक्तकानिच ॥ तेजोसिशुक्रममृतमित्यध्यायंतुब्राह्मणः ॥ भगवान्पापहाविष्णु स्तृप्यतामितिसंवदेत् ॥ तर्पणान्तेऽपसव्येनपुण्यंप्रेतायदापयेत् ॥ सहस्रशीर्षेत्यध्यायंविष्णुकुंभेजपेद्बुधः ॥ नमस्तेरुद्रमन्यव, इत्यध्यायंशिवस्यच ॥ अपेतोयन्तुपणय-इत्यध्यायंयमस्यच ॥ तदेवाग्निरित्यध्यायंतत्पुरुषस्यसंजपेत् ॥ जपस्यसंकल्पनंकृत्वापुण्यंप्रेतायदापयेत् ॥ ततोदुर्मृत्युजनितपापस्यैवक्षयायच ॥ दाल्भ्योक्तविधानेनवैष्णवंबलिमाचरेत् ॥ लोहादिसर्वधातूनांप्रायश्चित्तापनुत्तये ॥

पंचब्राह्मणानांवरणं ॥ अथ ब्रह्मसूक्तम् + तेजोसीत्यध्यायः ॥१॥ अथ विष्णुसूक्तम्—ॐसहस्रशीर्षेत्यध्यायः ॥२॥ अथ रुद्रसूक्तम्—ॐनमस्तेइत्यध्यायः ॥३॥ अथ यमसूक्तम्—ॐअपेतोऽध्यायः ॥४॥ अथ तत्पुरुषसूक्तम्—ॐतदेवाग्निरित्यध्यायः ॥५॥ (एतेमन्त्राअग्रेद्रष्टव्याः॥) अपसव्यं ॥ हस्तेजलमादाय—एतद्ब्रह्मादिपञ्चदेवतानांसूक्तजपोपार्जितंपुण्यंअ० गोत्रायअ० प्रेतायउपतिष्ठतु ॥ सव्यं । अद्यपूर्वो० पञ्चदेवतानांसूक्तजपविधौयन्न्यूनातिरिक्तंभवतांब्राह्मणानांवचनात्श्रीविष्णोः प्रसादात्सर्वंपरिपूर्णमस्तु ॥ अपसव्यं ॥ पुनर्जलमादाय—कृतेनानेनपञ्चदेवतानांसूक्तजपेनअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्तिः । असद्गतिविनाशः । सद्गतिप्राप्तिः । अक्षय्यातृप्तिः । यमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अग्रेप्रायश्चित्तहोमयोग्यतावाप्तिः ॥ अथ प्रायश्चित्तहोमः ॥

प्रायश्चित्ताभिधंहोमंप्रेतकृत्येचसर्वतः ॥ कुर्यात्प्रेतत्वनाशायसद्गतिप्राप्तयेसदा ॥ देहान्तप्रायश्चित्तेनसमंस्मृतमिदंबुधैः ॥ तत्कुर्यंहिमृतानांचतथापातकिनांचरेत् ॥ स्थंडिलेहस्तमात्रेचगृह्योक्तेनविधानतः ॥ कृत्वाकुशाण्डिकांतत्रदितिनाम्नाहुताशनं ॥ स्थापयित्वाचहुत्वाआघारावाज्यभागकौ ॥ हुत्वादिक्पातिनांतत्रबलिंकुर्यात्पृथक्पृथक् ॥ मन्त्रैस्तुविष्णुरूपाणांप्राच्यादिप्रक्रमेणतु ॥ देवश्रुतावितिप्राच्यामाग्नेयांचइरावती ॥ दिवोवादक्षिणेचैवविष्णोररराटनैर्ऋतौ ॥ पश्चिमेचइदंविष्णुःप्रतद्विष्णुस्तुवायवे ॥ विष्णोर्नुकंचोत्तरस्यामीशान्यामद्भ्यःसंभृतः॥ प्रजापतिश्चरत्यूर्ध्वंहाधस्त्रीणिपदेतिच ॥ एवंविष्णुस्वरूपाणामिन्द्रादीनांबलिंशुभम् ॥ कृत्वातण्डुलमुद्गैश्चचरुतैर्होमंसमाचरेत् ॥

स्नानम् ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो० । अपसव्यं । अ०गोत्रस्यअ०प्रेतस्यमरणावस-
रेदुर्मृत्युजनितपापविनाशार्थं । सव्यं । प्रायश्चित्तहोमंकरिष्ये ॥ ( ततःहस्तमात्रंस्थण्डिलंकृत्वाकुशा-
ण्डीकर्तव्या ) अथातोगृह्यस्थालीपाकानांकर्मदर्भैःपरिसमुह्य ॥ गोमयेनोपलिप्य । श्रुवेणोल्लि-
ख्य । अनामिकाङ्गुष्ठेनोद्धृत्य । उदकेनाभ्युक्ष्य । अग्निमुपसमाधाय ॥ प्रायश्चित्तहोमे “दिति”
नामानंवह्निंआ०स्थापयामि ॥ दक्षिणतोब्रह्मासनम् । उत्तरतः प्रणीतासनम् । तत्रब्रह्मोपवेश-
नम् । यावत्कर्मसमाप्यतेतावत्त्वंब्रह्माभव । ब्रह्मानुज्ञातःउत्तरेप्रणीताप्रणयनम् । ॐप्रणय ।
ईशानादिपूर्वाग्रैर्दर्भैरेकमुष्ठ्यापरिस्तरणम् ॥ पात्रासादनम् । पवित्रच्छेदनार्थंदर्भास्त्रयः। पवित्रेद्वे ।
प्रोक्षणीपात्रं । आज्यस्थाली । चरुस्थाली । संमार्गकुशाःपञ्च । उपयमनकुशाःसप्त । समि-
धस्तिस्रः । श्रुवः । आज्यं । तंदुलाः । पूर्णपात्रंदक्षिणावरोवा ॥ ततःपवित्रच्छेदनैःपवित्रीकर-
णम् । द्वयोरुपरिपवित्रत्रयंनिधाय । द्वयोर्मूलेनद्वौकुशौप्रदक्षिणीकृत्यत्रयाणांमूलाग्राणिएकी-
कृत्यअनामिकाङ्गुष्ठेनद्वयोरग्रंछेदयेत् । द्विर्ग्राह्य । त्रीणिउत्तरतःक्षिपेत् ॥ प्रोक्षणीपात्रेप्रणीतो
दकमासिंच्य । पात्रान्तरेणचतुर्वारंजलंप्रपूर्यवामकरेपवित्राग्रंदक्षिणेपवित्रयोर्मूलंधृत्वामध्यतः

पवित्राभ्यामुत्पवनंप्रोक्षणीपात्रजलस्य ॥ प्रोक्षण्याःसव्यहस्तेकरणं । दक्षिणहस्तमुत्तानंकृ-
त्वा ॥ मध्यमानामिकाङ्गुल्योःमध्यपर्वाभ्यामपामुद्दिंगनं ॥ प्रणीतोदकेनप्रोक्षण्याःप्रोक्षणं ॥
प्रोक्षण्युदकशेषेणआज्यस्थाल्याःप्रो०॥ चरुस्थाल्याःप्रो०॥ संमार्गकुशानांप्रो० ॥ उपयमनकु-
शानांप्रो०॥ समिधांप्रो०॥ श्रुवस्यप्रो०॥ आज्यस्यप्रो० ॥ तंडुलानांप्रो० ॥ पूर्णपात्रस्यप्रो० ॥
प्रणीताग्न्योर्मध्येऽसंचरेप्रोक्षण्यानिधानम् ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ चरुस्थाल्यांतं
डुलप्रक्षेपः॥ तस्यत्रिःप्रक्षालनम्॥ चरुपात्रेप्रणीतोदकमासिंच्य॥ दक्षिणतःआज्याधिश्रयणम्॥
मध्येचरोरधिश्रयणम् ॥ ग्रहीतोल्मुकेनउभयोःपर्यग्निकरणम् ॥ अर्धश्रृतेचरौस्रुवस्यप्रतप-
नम् ॥ संमार्गकुशैःस्रुवस्यसंमार्जनम् ॥ अग्रैरग्रम् ॥ मूलैर्मूलम् ॥ प्रणीतोदकेनाभ्युक्षणम् ॥
पुनःप्रतपनम् ॥ देशेनिधानम् ॥ आज्योद्वासनम ॥ चरोरुद्वासनम् ॥ वामकरेपवित्राग्रंदक्षिणे
पवित्रयोर्मूलंधृत्वामध्यतःपवित्राभ्यामाज्योत्पवनम् ॥ आज्यावेक्षणम् ॥ अपद्रव्यनिरसनम् ॥
प्रोक्षण्याःप्रत्युत्पवनम् ॥ उपयमनकुशग्रहणम् ॥ ॐतिष्ठन्समिदाधानम्। समिधोभ्याधाय ॥
प्रोक्षणीशेषोदकेनवह्नेःपर्युक्षणम् ॥ पवित्रयोःप्रणीतासुनिधानम् ॥ दक्षिणजानुनिपात्यब्रह्मा-

न्वारब्धः श्रुवेणजुहुयात् ॥ मनसा—ॐप्रजापतयेस्वाहाइदंप्रजापतयेनमम ॥१॥ ॐइन्द्रायस्वाहा-इदंइन्द्रायनमम ॥२॥ ॐअग्नयेस्वाहाइदंअग्नयेनमम ॥३॥ ॐसोमायस्वाहाइदंसोमायनमम ॥४॥ ततस्तंडुलमुद्गमिश्रंइन्द्रादिदशदिक्पालदेवतानांबलिदानंकुर्यात् ॥ ॐदेवश्रुतौदेवेष्वाघोषतम्प्राचीप्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वंयज्ञन्नयतम्माजिह्वरतम् ॥ स्वङ्गोष्ठमावदतन्देवीदुर्य्येऽआयुर्म्मानिर्वादिष्टम्प्रजाम्मानिर्वादिष्टमत्ररमेथांवर्ष्मन्पृथिव्याः ॥३॥ पूर्वेइन्द्रायांविष्णुरूपायबलिःप्रीयताम् ॥ ॐइरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्ण-वेतेदाधर्त्थपृथिवीमभितोमयूखैःस्वाहा ॥२॥ आग्नेयांअग्नयेविष्णुरूपायबलिःप्रीयताम् ॥ ॐदिवोवाविष्णऽउतवापृथिव्यामहोवाविष्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्याद्विष्णवेत्वा ॥३॥ दक्षिणेयमायविष्णुरूपायबलिःप्रीयताम् ॥ ॐविष्णोररा-टमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥४॥ नैर्ऋत्यांरक्षोधिपतयेविष्णुरूपायबलिःप्रीयताम् ॥ ॐइदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाꣳसुरेस्वाहा ॥ ५ ॥ पश्चिमेवरुणायविष्णुरूपायबलिःप्रीयताम् ॥ ॐप्रतद्विष्णुस्तवतेवी-

स्तवैणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा ॥६॥
वायव्यांमृगाधिपतयेविष्णुरूपायबलिःप्रीयताम् ॥ ॐविष्णोर्नुकंवीर्याणिप्रवोचंयःपार्थिवा
निविममेरजाᳪंसि ॥ योऽअस्कभायदुत्तरᳪसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ॥ ७ ॥
उत्तरेधनदायविष्णुरूपायबलिःप्रीयताम् ॥ ॐअद्भ्यःसम्भृतःपृथिव्यैरसाच्चविश्वकर्म्मणःसम
वर्त्तताग्रे ॥ तस्यत्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्त्वमाजानमग्रे ॥८॥ ईशान्यांशङ्करायविष्णु-
रूपायबलिःप्रीयताम् ॥ ॐप्रजापतिश्चरतिगर्भेऽअन्तरजायमानोबहुधाविजायते ॥ तस्ययो-
निम्परिपश्यन्तिधीरास्तस्मिन्न्हतस्थुर्भुवनानिविश्वा ॥ ९ ॥ ऊर्ध्वंब्रह्मणेविष्णुरूपायबलिः
प्रीयताम् ॥ ॐत्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्म्माणिधारयन् ॥१०॥ अध-
स्तात्अनन्तायविष्णुरूपायबलिःप्रीयताम् ॥ इन्द्रादिदशदिक्पालेभ्योविष्णुरूपेभ्यःइदंबलि-
दानंयोयस्यविभागःसप्रतिगृह्यताम् ॥ अस्मिन्प्रायश्चित्तहोमेयूयंरक्षपालाभवथ ॥ तदेतदृचा-
भ्युक्तंनमृषाश्रान्तंयद्वदन्तिदेवाइतिनहैवंविदुषाः किंचनमृषाश्रान्तंभवतितथोहास्यैतत्सर्वंदेवाऽ
अवन्ति ॥ प्रायश्चित्तहोमेदितिनामानंवह्निंआवाहयामि ॥ इदमत्रचन्दनंपुष्पंसमर्पयामि ॥

अथचतुर्गृहीताज्याहुतिमन्त्राः—ॐयुञ्जतेमनऽउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥
विहोत्रादधेवयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिःस्वाहाइदंविष्णवेनमम ॥१॥ इदं विष्णु
र्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाᳫँसुरेस्वाहाइदंविष्णवेनमम ॥२॥ ॐइरावतीधेनुम-
तीहिभूतᳫँसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीव्विष्णवेतेदाधर्थपृथिवीमभितोमयू
खैःस्वाहाइदंविष्णवेनमम ॥ ३ ॥ ॐदेवश्रुतौदेवेष्वाघोषतम्प्राचीप्प्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वं-
यज्ञन्नयतम्माजिह्वरतम् ॥ स्वङ्गोष्ठमावदतन्देवीदुर्य्येऽआयुर्म्मानिर्वादिष्टम्प्रजाम्मानिर्वादिष्ट
मत्ररमेथांवर्ष्मन्पृथिव्याःस्वाहाइदंविष्णवेनमम ॥ ४ ॥ ॐविष्णोर्न्नुकंवीर्य्याणिप्प्रवोचंयःपा-
र्थिवानिविममेरजाᳫँसि ॥ योऽअस्कभायदुत्तरᳫँसधस्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा
स्वाहाइदंविष्णवेनमम ॥ ५ ॥ ॐदिवोवाविष्णऽउतवापृथिव्यामहोवाविष्णऽउरोरन्तरि-

१, युंजतेमनइत्याद्यैर्मन्त्रैरष्टभिरेवच ॥ चतुर्गृहीतेनाज्येनस्रुचाहोमंसमाचरेत् ॥ स्रुवेणचपृथक्मन्त्रैर्होतव्याचाहुतिस्तथा ॥ सहस्र-
शीर्षाद्यैर्मन्त्रैर्हुत्वा षोडशभिस्ततः ॥ अद्भ्यःसंभृतइत्याद्यैःषड्भिर्द्वेद्वेघृताहुती ॥ प्रतिमन्त्रंचहुत्वातुलोमभ्यःस्वाहेत्यादिभिः ॥ पदमन्त्रैर्घृते-
नापिद्विचत्वारिंशत्संख्यया ॥ हुत्वाहुतिंततःपश्चाच्चरुहोमंचकारयेत् ॥

क्षात् ॥ उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्यात्द्विष्णवेत्वास्वाहाइदंविष्णवेन-
मम ॥ ६ ॥ ॐप्रतद्विष्णुस्तवतेवीर्य्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणे-
ष्वधिक्षियन्तिभुवनानिविश्वाःस्वाहाइदंविष्णवेनमम ॥७॥ ॐविष्णोरराटमसिविष्णोःश्नप्त्रे
स्त्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्त्वास्वाहाइदंविष्णवेनमम ॥ ८ ॥
ततःस्रुवेणहोमः ॥ ॐसहस्रशीर्षा०इत्यारभ्य"यज्ञेनयज्ञ"इत्यन्तंप्रत्येकमन्त्रेणाहुतिर्देया ॥ १६ ॥ इदं विष्णवेनमम
इतिसर्वत्रत्यागः ॥ पुनः स्रुचिग्रहणं ॥ उत्तरनारायणहोमः—ॐअद्भ्यःसम्भृतःइत्यारभ्यश्रीश्चतेइत्यन्तंप्रत्ये
कमन्त्रेणद्वेद्वेआहुतीदेये ॥ ६ ॥ इदंउत्तरनारायणायनमम ॥ इतित्यागः ॥ ॐलोमभ्यःस्वाहा
इदंलोमभ्योनमम ॥ २ ॥ ॐत्वचेस्वाहाइदंत्वचे० ॥ २ ॥ ॐलोहितायस्वाहा ॥ इदंलोहि-
ताय०॥२॥ ॐमेदोभ्यःस्वाहा ॥ इदंमेदोभ्यः०॥२॥ॐमाᳫसेभ्यःस्वाहा ॥ इदंमाᳫसेभ्यो०॥२॥
ॐस्नावभ्यःस्वाहा ॥ इदंस्नावभ्यो० ॥२॥ अस्थभ्यःस्वाहा॥ इदंअस्थभ्यो० ॥२॥ ॐमज्जभ्यः
स्वाहा ॥ इदं०॥२॥ॐरेतसेस्वाहा ॥ इदं०॥१॥ ॐपायवेस्वाहा ॥ इदं०॥१॥ ॐआयासायस्वाहा॥
इदं० ॥१॥ ॐप्रायासायस्वाहा ॥ इदं० ॥१॥ ॐसंयासायस्वाहा ॥ इदं० ॥१॥ ॐवियासाय

स्वाहा ॥ इदं०॥१॥ ॐउद्यासायस्वाहा ॥ इदं०॥१॥ ॐशुचेस्वाहा ॥ इदं०॥१॥ ॐशोचतेस्वाहा॥ इदं०॥१॥ ॐशोचमानायस्वाहा ॥ इदं०॥१॥ॐशोकायस्वाहा ॥ इदं०॥१॥ ॐतपसेस्वाहाइदं० ॥१॥ ॐतप्यतेस्वाहा इदं०॥१॥ ॐतप्यमानायस्वाहा ॥ इदं०॥१॥ ॐतप्तायस्वाहा ॥ इदं० ॥१॥ॐधर्म्मायस्वाहा ॥ इदं०॥१॥ ॐनिष्कृत्यैस्वाहा ॥ इदं० ॥१॥ॐप्रायश्चित्यैस्वाहा ॥ इदं० ॥१॥ ॐभेषजायस्वाहा ॥ इदं० ॥१॥ ॐयमायस्वाहा ॥ इदं०॥१॥ ॐअन्तकायस्वाहा॥ इदं० ॥१॥ ॐमृत्यवेस्वाहा ॥ इदं० ॥१॥ ॐब्रह्मणेस्वाहा॥ इदं०॥१॥ ॐब्रह्महत्यायैस्वाहा ॥ इदं० ॥१॥ ॐविश्वेभ्योदेवेभ्यःस्वाहा ॥ इदं० ॥ १ ॥ ॐद्यावापृथिवीभ्या(१)स्वाहा ॥ इदं० ॥ १ ॥ अथ चरुहोमः—ॐअपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणावभ्यषिञ्चन्न्याभिरिन्द्रमनयन्नत्यरातीःस्वाहा ॥ इदंविष्णवेनमम ॥१॥ ॐस्वाहांयज्ञंमनं



१ अपोदेवास्वाहायज्ञंपृथिव्यासधस्थादपि ॥ देवान्दिवमगन्यज्ञश्चतुस्त्रिंशतंतव ॥ यज्ञस्यदोहोविततआतूनइन्द्रवृत्रहन ॥ विष्णोःकर्माणिपश्यततद्विष्णोःपरमंपदम् ॥ धामच्छदग्निरिन्द्रस्तुतथाविष्णोरराटकम् ॥ त्रीणिपदातद्विप्रासस्तथैवव्याहृतित्रयम् ॥ एभिःषोडशाभिर्मन्त्रैश्चरुहोमंप्रदापयेत् ॥

[illegible] ॥ इदंवि० ॥२॥ ॐ
पृथिव्याऽसधस्थादग्निम्पुरीष्यमङ्गिरस्वदाभराग्निम्पुरीष्यमङ्गिरस्वदच्छेमोग्निम्पुरीष्यमङ्गिरस्व
द्भरामः स्वाहा इदंवि० ॥३॥ ॐदेवान्दिवमगन्यज्ञस्ततोमाद्रविणमष्टुमनुष्यानन्तरिक्षमगन्य-
ज्ञस्ततोमाद्रविणमष्टु पितॄन्पृथिवीमगन्यज्ञस्ततोमाद्रविणमष्टुयङ्कञ्चलोकमगन्यज्ञस्ततोमे
भद्रमभूत्स्वाहा ॥ इदंवि० ॥४॥ ॐचतुस्त्रिंशत्तन्तवोयेवितत्निरेयऽइमंयज्ञंस्वधयाददन्ते॥
तेषाञ्छिन्नंसम्वेतद्दधामिस्वाहाघर्म्मोऽअप्येतुदेवान्स्वाहा ॥ इदंवि० ॥ ५ ॥ ॐयज्ञस्यदो-
होविततःपुरुत्रासोऽअष्टधादिवमन्वाततान ॥ सयज्ञधुक्ष्वमहिमेप्रजायांरायस्पोषंविश्व
मायुरशीयस्वाहा ॥ इदंवि० ॥६॥ ॐआतूनऽइन्द्रवृत्रहन्नस्माकमर्द्धमागहि ॥ महान्महीभि-
मिरूतिभिःस्वाहा ॥ इदंवि० ॥ ॐविष्णोःकर्म्माणिपश्यतयतोव्रतानिपस्पशे ॥ इन्द्रस्ययु-
ज्यःसखास्वाहा ॥ इदंवि० ॥७॥ तद्विष्णोःपरमंपदंसदापश्यन्तिसूरयः॥ दिवीवचक्षुराततम
स्वाहा ॥ इदंवि० ॥९॥ ॐधामच्छदग्निरिन्द्रोब्रह्मादेवोबृहस्पतिः ॥ सचेतसोविश्वेदेवायज्ञं-
प्रावन्तुनःशुभेस्वाहा ॥ इदंवि०॥१०॥ ॐविष्णोररराटमसि०स्वास्वाहा ॥ इदंवि० ॥११॥ ॐ

त्रीणिपदाविचक्रमेविष्णुर्गोपाऽअदाभ्यः ॥ अतोधर्माणिधारयन्स्वाहा ॥ इदंवि० ॥१२॥ ॐ तद्विप्रासोविपन्यवोजागृवाᳪंसःसमिन्धते ॥ विष्णोर्यत्परमम्पदᳪंस्वाहा ॥ ॐभूःस्वाहा इदम०॥ ॐभुवःस्वाहाइदंवा०॥ ॐस्वःस्वाहाइदंसू०॥१६॥ ततःतद्विप्रासइतिमन्त्रेणअष्टोत्तरं-शतं (१०८) यवमिश्रकृष्णतिलाहुतयोहोतव्याः ॥ ततःस्विष्टकृत् —ॐअग्नयेस्विष्टकृतेस्वाहा ॥ इदमग्नयेस्विष्टकृतेनमम ॥ ततोभूराद्यानवाहुतयः—ॐभूःस्वाहा ॥ इदमग्नयेनमम ॥१॥ ॐ भुवःस्वाहा ॥ इदंवायवेनमम ॥२॥ ॐस्वःस्वाहा ॥ इदंसूर्यायनमम ॥३॥ ॐत्वन्नोऽअग्नेवरु-णस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ॥ यजिष्ठोवह्नितमःशोशुचानोविश्वाद्वेषाᳪंसिप्रमुमु-ग्ध्यस्मत्स्वाहा ॥ इदमग्नीवरुणाभ्यांनमम ॥ ४ ॥ ॐसत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽअस्याऽ उषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणᳪंरराणोवीहिमृडीकᳪंसुहवोनऽएधिस्वाहा ॥ इदमग्नीवरुणाभ्यां-



१ ततःकृष्णैस्तिलैःकार्याघृताक्तैर्यवमिश्रितैः ॥ तद्विप्रासेतिमन्त्रेणजुहुयादष्टोत्तरंशतम् ॥ ततःस्विष्टकृतंहुत्वाआज्येनैवनवाहुतीः ॥ पूर्णाहुतिश्चहोमान्तेकर्तव्याकर्मपूर्तये ॥ स्याहाप्राणेभ्यइत्याद्यैस्त्रिभिर्मंत्रैर्विधानतः ॥ कृत्वाप्रणीताविमोकान्तंपुण्यंप्रेतायदापयेत् ॥ स्नानंकृत्वैका-दशानांदेवानांश्राद्धमाचरेत् ॥

नमम ॥५॥ ॐअयाश्चाग्नेस्यनभिशस्तिपाश्चसत्यमित्त्वमयाऽअसि ॥ अयानोयज्ञंवहास्यानोधेहि-
भेषजꣳस्वाहा॥इदमग्नयेअयसेनमम॥६॥ॐयेतेशतंवरुणंयेसहस्रंयज्ञियाःपाशाविततामहान्तः॥
तेभिर्न्नोऽअद्यसवितोतविष्णुर्विश्वेमुञ्चन्तुमरुतःस्वर्क्काःस्वाहा ॥ इदंवरुणायसवित्रेविष्णवेविश्वे-
भ्योदेवेभ्योमरुद्भ्यःस्वर्केभ्यश्चनमम॥७॥ॐउदुत्तमंवरुणपाशमस्मदवाधमंविमद्ध्यमꣳश्रथाय॥
अथावयमादित्यव्व्रतेतवानागसोऽअदितयेस्यामस्वाहा ॥ इदंवरुणायादित्यायादितयेचनमम
॥८॥ ॐप्रजापतयेस्वाहा ॥ इदंप्रजापतयेनमम ॥ ९ ॥ इति नवाहुतयः॥ ततःपूर्णाहुतिंकुर्यात्—
ॐस्वाहाप्प्राणेब्भ्यःसाधिपतिकेब्भ्यःपृथिव्व्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहावायवेस्वाहा ॥
दिवेस्वाहासूर्य्यायस्वाहा ॥१॥ दिग्भ्यःस्वाहाचन्द्रायस्वाहानक्षत्रेब्भ्यःस्वाहाद्भ्यःस्वाहावरुणा-
यस्वाहानाभ्यैस्वाहापूतायस्वाहा॥२॥ वाचेस्वाहाप्राणायस्वाहाप्प्राणायस्वाहा ॥ चक्षुषेस्वाहाच
क्षुषेस्वाहाꣳश्रोत्रायस्वाहाꣳश्रोत्रायस्वाहा ॥३॥ कृतहोमसंकल्पेविनियोगः॥ आघारावाज्यभागा-
दिपूर्णाहुतिपर्यन्तंअ०गोत्रस्यअ० प्रेतस्यएकादशाहादिक्रियायोग्यतायैदुर्मृत्युजनितपापशोधना
र्थंयद्यतद्द्रव्यंयावद्यावत्संख्याकंयेनयेनमन्त्रेणयस्यैयस्यैदेवतायैहुतंतेनभगवान्पापहाविष्णुः प्री-

यतास् ॥ संस्रवप्राशनं ॥ पवित्राभ्यांमार्जनम् ॥ ब्रह्मौपवित्रप्रतिपत्तिः ॥ बर्हिर्होमः ॥ प्रणीता विमोकः ॥ ब्रह्मणेपूर्णपात्रंसहिरण्यंकर्माधीशःप्रीयतांनमम ॥ आचार्यायदक्षिणांकर्माधीशः प्रीयताम् ॥ अपसव्यं । इदं प्रायश्चित्तहोमोपार्जितंपुण्यंगोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो०प्रायश्चित्तहोमविधेर्यन्न्यूनातिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनात् श्रीविष्णोःप्रसादा-त्परिपूर्णमस्तु ॥ अपसव्यं । कृतेनानेनप्रायश्चित्तहोमेनअ०गोत्रस्यअ०प्रेतस्यऽप्रेतत्वनिवृत्तिः । असद्गतिमृत्युविनाशः । सद्गतिप्राप्तिः । अक्षयातृप्तिः । यमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अग्रेतनएकादशवैष्णवश्राद्धयोग्यतावाप्तिः ॥ इतिप्रायश्चित्तहोमः ॥ ॥ ॥

अथैकादशवैष्णवश्राद्धारंभः ॥ स्नात्वा ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो०तिथौअप-सव्यंअ०गोत्रस्यअ०प्रेतस्य ( स्त्रियाश्चेतुगोत्रायाःप्रेतायाः ) प्रेतत्वनिवृत्त्यर्थंअसद्गति०सद्गति प्रा०सव्यंएकादशवैष्णवश्राद्धप्रारंभांगनिमित्तंश्रीविष्णोःपञ्चोपचारैःपूजनमहंकरिष्ये ॥ श्रीवि-ष्णवेचन्दनंपरिकल्पयामि ॥ (एवंसर्वत्र) तुलसीपत्रंपुष्पंधूपंदीपंनैवेद्यंफलंताम्बूलंहिरण्यंपरिक-

ल्पयामि ॥ श्रीविष्णुपूजनविधेःपरिपूर्णतास्तु ॥ ततएकादशब्राह्मणाःस्थाप्याः ॥ हस्तेयवान्गृहीत्वा—प्रथ-
मचटेविष्णोपाद्यन्ते ॥ द्वितीयचटेशिवपाद्यन्ते ॥ तृ०च०यमपाद्यन्ते ॥ च०च०सोमराजपा-
द्यन्ते ॥ पं०च०हव्यवाहनपाद्यन्ते ॥ ष०च०कव्यवाहनपाद्यन्ते ॥स० च० मृत्योपाद्यन्ते ॥
अ०च० रुद्रपाद्यन्ते ॥ न० च० पुरुषपाद्यन्ते ॥ द०च० प्रेतपाद्यन्ते ॥ एकादशचटेविष्णो-
पाद्यन्ते ॥ विष्ण्वादिविष्णुपर्यन्तानांप्रत्येकंपाद्यंपादावनेजनंपा० ॥ पादाऽर्घोदकनिक्षेपः ॥
स्वपादप्रक्षालनम् ॥ आचम्यदिग्बन्धः—ऐन्द्र्यांनारायणो०रक्षकः ॥ २ ॥ अपवित्रःपवित्रोवा०
॥१॥ ततःकर्मार्थजलाभिमन्त्रणम् ॥ भूमौदर्भासनंतस्योपरिपात्रंनिधाय ॥ पात्रेजलपूरणं—ॐशन्नोदेवी० ॥ १ ॥
कूर्चनिक्षेपः—ॐपवित्रेस्थो० ॥२॥ यवप्रक्षेपः—ॐयवोसियवयास्मद्द्वेषोयवयारातीर्दिवेत्वान्तरिक्षाय
त्वापृथिव्यैत्वाशुन्धन्तांल्लोकाःपितृषदनाःपितृषदनमसि ॥३॥ फलप्रक्षेपः—ॐयाःफलिनी० ॥४॥
हिरण्यप्रक्षेपः—ॐहिरण्यगर्भः० ॥५॥ तूष्णींगन्धपुष्पप्रक्षेपः ॥ यद्देवेतित्रिभिर्मन्त्रैस्तिलोदकंविधाय—ॐयद्देवा०
१५ ॥१॥ यद्दिवा० ॥२॥ यद्जाग्र० ॥३॥ इतिमन्त्रैर्यवोदकमालोड्य ॥ पाकप्रोक्षणं ॥ एकादशविष्णुश्रा-

१ विष्णुःशिवोयमःसोमस्तथाचहव्यवाहनः ॥ कव्यवाहनकालौचरुद्रस्ततःपुरुषस्तथा ॥ प्रेतस्त्वेकादशोविष्णुस्त्वेतेषामेकतन्त्रतः ॥
विष्ण्वादिविष्णुपर्यन्तमर्घंपिण्डंयुतंचरेत् ॥

द्धेपिण्डद्रव्योपहाराणांपवित्रतास्तु ॥ देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ अद्यपूर्वो०अप-
सव्यंअ० गोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गति०सद्गतिप्रा० सव्यंविष्ण्वादिविष्णुपर्यन्ता-
नांएकतन्त्रेणश्राद्धमहंकरिष्ये ॥(एकादशचटे) विष्ण्वादिविष्णुपर्यन्तानांप्रत्येकमासनमिदन्ते॥
एकार्घपात्रेएकादशपवित्रपूरणम्—ॐपवित्रेस्थो० ॥ उदकपूरणं—ॐशन्नोदेवी० ॥ यवप्रक्षेपः—ॐयवोसि०
गन्धप्रक्षेपः—ॐगन्धद्वारां० ॥ पुष्पप्रक्षेपः-ॐश्रीश्चते० ॥ अर्घपात्रस्यार्चनविधेःपरिपूर्णतास्तु ॥
आपप्रदायस्वाहार्घ्याभवन्तु ॥ अस्तुस्वाहा ॥ पवित्रार्पणंपूजाच ॥ ॐयादिव्या०॥१॥ विष्ण्वा
दिविष्णुपर्यन्तेभ्यःएषवोऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ उदकस्पर्शः ॥(नार्घवन्दनं ॥ नन्युब्जीकरणम् ॥)
एकादशचटपूजनम्—विष्ण्वादिवि०भ्यःप्रत्येकंअर्चनमिदन्ते ॥ विष्ण्वादिवि०यवमाच्छादनं ॥
विष्ण्वादिवि०इमानितुलसीदलसहितानिपुष्पाणिसुपुष्पाणि ॥ विष्ण्वादिवि०धूपंदीपंनैवेद्यं
फलंताम्बूलंसहिरण्यमिदन्ते ॥ अस्यार्चनविधेःपरिपूर्णतास्तु ॥ इदमर्चितंवोज्योतिःसूर्यो-
ज्योतिःसूर्यायपुष्पंशेषोपचाराविधिवद्भवन्तु ॥ आचम्य ॥ एकतन्त्रेणपात्रेपरिवेषणं ॥ ऋतन्त्वा-
सत्येनपरिषिञ्चामि ॥ पात्रप्रोक्षणं ॥ पृथिवीतेपात्रंद्यौरपिधानंचटस्यमुखेअमृतेअमृतंजुहो

मिस्वाहा ॥ ॐइदंविष्णु० ॥१॥ विष्णवादिवि०हव्यंरक्षस्व ॥ अङ्गुष्ठेनान्नमवगाह्य ॥ अपहते-
तियवान्विकीर्य—ॐअपहता०॥१॥ विष्णवादिवि०एतद्दोन्नंदत्तंदास्यमानमिदन्ते ॥ रेपाकरणम्—
विष्णवादिविष्णुपर्यन्तानांरेषायामवनेजनमिदन्ते ॥ कुशास्तरणम्—प्रथमविष्णोपिण्डस्ते ॥ द्विती-
यशिवपिण्डस्ते ॥ तृ०यमपिण्डस्ते ॥ च०सोमराजपिं० ॥ पं०हव्यवाहनपिं० ॥ ष० कव्यवा-
हन पिं० ॥ स०मृत्योपिं० ॥ अ०रुद्रपिं० ॥ न०पुरुषपिं० ॥ द०प्रेतपिं०एका०विष्णोपिण्डस्ते
एवमेकादशपिण्डानदत्त्वा ॥ पिण्डेप्रत्यवनेजनं ॥ सूत्रवस्त्राच्छादनं ॥ हस्तप्रक्षालनं ॥ आचमनं ॥
अद्यपूर्वो०एकादशवैष्णवश्राद्धनिमित्तंपिण्डपूजनमहंकरिष्ये ॥ विष्णवादिविष्णुपर्यन्तेभ्यःपि-
ण्डेअत्रमुपतिष्ठतु ॥ एवंसर्वत्र ॥ गन्धंयवाक्षताःपुष्पंतुलसीपत्रंधूपोदीपःनैवेद्यंमुखवासार्थेपू-
गीफलंताम्बूलंसहिरण्यमुपतिष्ठतु ॥ पिण्डस्यार्चनाविधेःपरिपूर्णतास्तु ॥ अतःपरंएकादशपिण्डेजले-

---

१ शङ्खेदुग्धंसमादायसहिरण्यंतिलान्वितम् ॥ सर्वौषधीसमायुक्तंदद्याद्धारांपृथक्पृथक् ॥ अपोदेवामधुमतीयेनापावकचक्षसा ॥ येदे-
वासस्तथैवोक्ताउपयाम्यन्तर्यच्छच ॥ अग्निर्ज्योतिर्ज्योतिरग्निर्हिरण्यगर्भएवच ॥ इषेत्वाचयज्ञाग्रतोयाःफलिनीस्तथैवच ॥ विश्वतश्चक्षुरुतवि-
श्वहंसःशुचिषत्तथा ॥ मन्त्रैरंजलयोदेयापदान्येकादशैवहि ॥ दत्वानिष्कृतिद्रव्यंवाततःपिंडान्विसर्जयेत् ॥ तदनंतरंचदेवानांपश्चानांश्राद्ध-
माचरेत् ॥

धाराकर्तव्या ॥ ( ताम्रपात्रेजलदुग्धसर्वौषधीयवतिलतुलसीचन्दनहिरण्यप्रक्षेपः ) प्रतिपिण्डोपरिपृथक्पृथक्मन्त्रेणशङ्खेन-
जलधारांदद्यात्—अपोदेवामधुमतीरगृभ्णन्नूर्ज्जस्वतीराजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणावभ्य-
षिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥१॥ इतिमन्त्रेणप्रथमविष्णुपिण्डोपरिजलधारांपयोधारामह-
मुत्सृजामि ॥ द्वितीयशिवपिण्डे—ॐयेनापावकचक्षसाभुरण्यन्तञ्जनाँ२ऽअनु ॥ त्वंवरुणपश्यसि ॥२॥
द्वितीयशिवपिण्डोपरिजलधारांप० ॥ तृ०यमपिण्डे—ॐयेदेवासोदिव्येकादशस्थपृथिव्यामध्येका-
दशस्थ ॥ अप्सुक्षितोमहिनैकादशस्थतेदेवासोयज्ञमिमञ्जुषध्वम् ॥३॥ तृ०यमपिण्डेजलधा-
रांप०॥ च०सोमराजपिण्डे—ॐउपयामगृहीतोस्यन्तर्य्यच्छमघवन्पाहिसोमम् ॥ उरुष्यरायऽएषोय-
जस्व ॥४॥ च०सोमराजपिण्डेजलधारांप०॥ पं० हव्यवाहनपिण्डे—ॐअग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा
सूर्य्योज्ज्योतिर्ज्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्च्चोज्ज्योतिर्व्वर्च्चः स्वाहा सूर्य्योवर्च्चोज्ज्योतिर्व्वर्च्चः
स्वाहा ॥ ज्ज्योतिः सूर्य्यः सूर्य्योज्ज्योतिः स्वाहा ॥५॥ पं०हव्यवाहनपिण्डेजलधारांप० ॥ ष०
कव्यवाहनपिण्डे—ॐहिरण्यगर्भ० ॥६॥ ष०कव्यवाहनपिण्डेजलधारांप० ॥ स०मृत्युपिण्डे—ॐइषे-
त्वोर्ज्जेत्वावायवस्थदेवोवः सविताप्रार्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभा-

गम्प्रजावतीरनमीवाऽअयक्ष्मामावस्तेनऽईशतमाघशंꣳसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्य्यजमा
नस्यपशून्पाहि ॥७॥ स०मृत्युपिण्डेजलधारांप० ॥ अ०रुद्रपिण्डे—ॐप्रजाप्रतो०मस्तु ॥ ८ ॥ अ०
रुद्रपिण्डेजलधारांप० ॥ न० पुरुषपिंडे—ॐयाःफलिनी० ॥ ९ ॥ न० पुरुषपिंडेजलधारांप० ॥
दशमप्रेतपिण्डे- ॐविश्वतश्चक्षुरुतविश्वतोमुखोविश्वतोबाहुरुतविश्वतस्पात् ॥ सम्बाहुभ्यान्ध-
मतिसम्पतत्रैर्द्यावाभूमीजनयन्देवऽएकः ॥ १० ॥ द०प्रेतपिण्डेजलधारांप० ॥ ए०विष्णु-
पिण्डे—हꣳसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजा
ऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ ११ ॥ एकादशविष्णुपिण्डेजलधारांप० ॥ शेषोदकेनएक-
तन्त्रेणएकादशपिण्डोपरिजलधारांदद्यात्—अनादिनिधनोदेवःशङ्खचक्रगदाधरः ॥ अक्षय्यःपुण्डरीकाक्षः
प्रेतमोक्षप्रदोभवेत् ॥ १ ॥ अतसीपुष्पसंकाशंपीतवाससमच्युतम् ॥ येनमस्यन्तिगोविन्दंन-
तेषांविद्यतेभयम् ॥ २ ॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानांप्रसीद-
पुरुषोत्तम ॥ ३ ॥ नारायणसुरश्रेष्ठलक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाथप्रेतमोक्षप्रदोभव
॥ ४ ॥ हिरण्यगर्भपुरुषव्यक्ताव्यक्तस्वरूपधृक् ॥ अस्यप्रेतस्यमोक्षार्थंसुप्रीतोभवसर्वदा ॥ ५ ॥

एकादशपिण्डोपरिदानसंकल्पः—अमीषांएकादशश्राद्धानांप्रतिष्ठासिद्ध्यर्थंदास्यमानांदक्षिणांविष्ण्वादि-
विष्णुपर्यन्तानांप्रत्येकमिदन्ते ॥ एकादशपदानिअथवातन्निष्क्रयीभूतंमनसोद्दिष्टंद्रव्यंअ०
गोत्रस्यअ० प्रे० असद्गति० सद्गतिप्रा० विष्ण्वादिविष्णुपर्यन्तेभ्यः रजतप्रत्याम्नायद्वारादा-
स्येतेनएकादशदेवताःप्रीयन्ताम् ॥ अपसव्यं ॥ एततएकादशवैष्णवश्राद्धोपार्जितंपुण्यंअ०
गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो०एकादशवैष्णवश्राद्धविधेर्यन्न्यूनातिरिक्तं-
तत्सर्वंभवतांब्राह्मणानांवचनाच्छ्रीविष्णोस्तीर्थप्रसादात्सर्वंपरिपूर्णमस्तु ॥ अपसव्यं ॥ कृतेना-
नेनएकादशवैष्णवश्राद्धेनअ० गोत्रस्यअ०प्रे० प्रेतत्वनिवृत्तिःअसद्गतिमु० सद्गतिप्रा० अक्षय्या-
तृप्तिः॥ यमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अद्येतनब्रह्मादिपञ्चदेवतानांश्राद्धयोग्यतावाप्तिः ॥
पिण्डविसर्जनम्—ॐभद्रंकर्णेभिः शृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवाᳪ
संस्तनूभिर्व्यशेमहिदेवहितंयदायुः ॥ १ ॥ चरुविसर्जनम्—ॐअक्रन्कर्मकर्मकृतःसहवाचामयो-
भुवा ॥ देवेभ्यःकर्मकृत्वास्तम्प्रेतसचाभुवः ॥ २ ॥ पिण्डान्प्रवाहयन्नायात् ॥ इतिएकादश- ॥८७॥

१ हिरण्यवस्त्ररजतंगुडाज्यंलवणंतथा ॥ लोहदण्डस्तिलधान्यंमहिषीचामरंददेत् ॥

वैष्णवश्राद्धम् ॥ ॥ अथपञ्चदेवतानांश्राद्धम् ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो० अपसव्यं-
अ० गोत्रस्य० अ० प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गति० सद्गति० सव्यंब्रह्मादिपञ्चदेवतानांश्राद्धप्रारं-
भाङ्गनिमित्तंविष्णोःपञ्चोपचारैःपूजनमहंकरिष्ये ॥ श्रीविष्णवेनमःचन्दनंपुष्पंधूपंदीपंनैवेद्यंफलं
ताम्बूलंहिरण्यं०॥ विष्णुपूजनविधेःसर्वंपरिपूर्णमस्तु ॥ पञ्चघटान्संस्थाप्य ॥ प्राङ्मुखोपविश्य ॥ हस्ते-
यवान्गृहीत्वा–प्रथमंब्रह्मन्पाद्यन्ते ॥ विष्णोपाद्यन्ते ॥ रुद्रपा० ॥ यमपा० ॥ तत्पुरुषपा० ॥ ३ ॥
पाद्यंपादावनेजनंपादप्रक्षालनं० ॥ पादार्घोदकनिक्षेपः ॥ स्वपादप्रक्षालनं ॥ आचमनं ॥ दिग्ब-
न्धः–ऐंद्र्यांनारायणोरक्षे० ॥ अपवित्रःपवित्रोवा० ॥ ४ ॥ ततःकर्मार्थंजलाभिमन्त्रणम्–भूमौदर्भासनं-
तस्योपरिपात्रंनिधाय ॥ पात्रेजलपूरणं–ॐशन्नोदेवी० ॥ १ ॥ कूर्चनिक्षेपः–पवित्रेस्थो० ॥ २ ॥ यवप्रक्षेपः–
ॐयवोसि० ॥ ३ ॥ फलप्रक्षेपः–ॐयाःफलिनी० ॥ ४ ॥ हिरण्यप्रक्षेपः–ॐहिरण्यगर्भः० ॥ ५ ॥

---

१, ब्रह्माविष्णुरुद्रयमतत्पुरुषाणांचमंत्रतः ॥ अर्घपिण्डयुतंदत्वाजलधारांतुदापयेत् ॥ पञ्चकुंभोदकेनैवमन्त्रैःस्थापनसंज्ञिकैः ॥ कल्पयेत्तत्र
दानानिपिण्डोपरिपृथक्पृथक् ॥ दद्यात् सस्यंवतींभूमींब्रह्मणेविष्णवेचगाम् ॥ रुद्रायवृषभंदद्यात्तिलदानंयमायच ॥ तत्पुरुषायसौवर्णंपुण्यंप्रेता-
यदापयेत् ॥ एवंतुपञ्चदेवानांकृत्वाश्राद्धंविसर्जयेत् ॥

तूष्णींगन्धपुष्पप्रक्षेपः ॥यद्देवेतियवोदकंविधाय—ॐयद्देवा० ॥ यदिदिवा० ॥ यदिजाग्रद्य० ॥६॥ इतिमन्त्रैः-
यवोदकमालोड्य ॥ पाकप्रोक्षणं ॥ पञ्चश्राद्धपिण्डद्रव्योपहाराणांपवित्रतास्तु ॥ देशकालपाकपात्रद्र-
व्यश्रद्धासंपदस्तु ॥ अद्यपूर्वो०अपसव्यंअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गति० सद्ग-
तिप्रा० अक्षय्यविष्णुलोकफलप्राप्त्यर्थंसव्यंब्रह्मविष्णुरुद्रयमतत्पुरुषाणामेकतन्त्रेणश्राद्धमहंक-
रिष्ये॥ ब्रह्मादितत्पुरुषपर्यन्तेभ्यःआसनमिदन्ते ॥ पञ्चार्घपात्रपूरणंएकंवा ॥ एकैकंपवित्रंसर्वत्र—ॐपवित्रे०
स्थो० ॥१॥ इतिपवित्रपूरणम् ॥ उदकपूरणं—ॐशन्नोदेवी० ॥ २ ॥ यवप्रक्षेपः—ॐयवोसि० ॥ इदमत्रच-
न्दनंपुष्पं ॥ अर्घपात्रस्यार्चनविधेःपरिपूर्णतास्तु ॥ अर्घ्यंगृहीत्वा आपःप्रदाय० पूजाच ॥ ॐया-
दिव्याऽआपः० ॥१॥ ब्रह्मादितत्पुरुषपर्यन्तेभ्यःएषवोऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ ( नार्घवन्दनं ॥
नन्युब्जीकरणं ॥ ) पञ्चचटपूजनम्—ब्रह्मादितत्पुरुषपर्यन्तेभ्यःअर्चनामिदन्ते ॥ ब्र० तत्पु०भ्यःयव-
माच्छादनं ॥ ब्र० तत्पु०भ्यःधूपंदीपंनैवेद्यंफलंताम्बूलंसहिरण्यमिदन्ते ॥ अस्यार्चनाविधेःपरिपू-
र्णतास्तु ॥ इदमर्चितंत्रोज्योतिःसूर्योज्योतिःशेषोपचाराःसम्पूर्णाविधिवद्भवन्तु ॥ आचम्य ॥
पात्रेपरिवेषणम् ॥ ऋतन्त्वा० ॥ ॐपृथ्वीतेपात्रंद्यौरपिधानंचटस्यमुखेअमृतेअमृतञ्जुहोमिस्वाहा॥

ॐइदंविष्णु० ॥ १ ॥ ब्रह्मादितत्पुरुषपर्यन्तेभ्यः हव्यंरक्षस्वअंगुष्ठेनान्नमवगाह्य ॥ अपहतेतियवान्-
विकीर्य—ॐअपहता० ॥ १ ॥ ब्रह्मादितत्पुरुषपर्यन्तेभ्यः एतद्वोन्नंदत्तंदास्यमानमिदन्ते ॥ ब्र०तत्पु-
रुषपर्यन्तानांयथादास्यमानंप्रजापतिदैवतंपञ्चब्राह्मणानांभोजनम् ॥ मुखवासताम्बूलंसहिरण्य
मिदन्ते ॥ रेषाकरणम्—ब्रह्मादितत्पुरुषपर्यन्तानामवनेजनमिदन्ते ॥ कुशास्तरणं ॥ पिण्डदानम्—ब्रह्म-
पिण्डस्ते ॥ विष्णोपिण्डस्ते ॥ रुद्रपिण्डस्ते ॥ यमपिण्डस्ते ॥ तत्पुरुषपिण्डस्ते ॥ ५ ॥ पिण्डेप्रत्य-
वनेजनं ॥ सूत्रवस्त्राच्छादनं ॥ हस्तप्रक्षालनम् ॥ आचमनं ॥ अद्यपूर्वो० अ० गो० अ० प्रे०
प्रेतत्व० असद्गति० सद्गति० पञ्चदैवतश्राद्धनिमित्तंपिण्डपूजनमहंकरिष्ये ॥ पिण्डेचन्दनंपुष्पं
धूपंदीपंशेषान्नंनैवेद्यंफलंताम्बूलंसहिरण्यं ॥ पिण्डस्यार्चनविधेःपरिपूर्णतास्तु ॥ उत्तिष्ठब्रह्मणस्पते-
इतिमन्त्रेणपञ्चकुम्भानुत्थाप्य ॥ तत्रमन्त्रः—ॐउत्तिष्ठब्रह्मणस्पतेदेवयंतस्त्वेमहे॥उपप्रयंन्तुमरुतः सुदा-
नवऽइन्द्रप्राशूर्भवासचा ॥१॥ तिलदुग्धमिश्रस्वकीयकुम्भोदकेनस्वस्थापनमन्त्राभ्यांप्रतिपिण्डेजलधाराकार्या ॥ तत्र
मन्त्राः ॥ ब्रह्मपिण्डे—ॐअग्निमीळिपुरोहितंयज्ञस्यदेवमृत्विजम् ॥ होतारंरत्नधातमम् ॥ १ ॥ आब्र-
ह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामाराष्ट्रेराजन्यः शूरऽइषव्योतिव्याधीमहारथोजायतान्दोग्ध्रीधे-

नुर्वोढानड्वानाशुः सप्तिः पुरंन्धिर्योषाजिष्णूरथेष्ठाः सभेयोयुवास्ययजमानस्यवीरोजायतान्निका-
मेनिकामेनः पर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनः कल्पताम् ॥२॥ इतिमन्त्र
द्वयेनब्रह्मकलशोदकेनब्रह्मपिण्डोपरिजलधारांपयोधारामहमुत्सृजामि ॥ द्वि०विष्णुपिण्डे—ॐइषे-
त्वोर्जेत्वा० ॥१॥विष्णोरराटम्० ॥२॥ इतिमन्त्रद्वयेनविष्णुकलशोदकेनविष्णुपिण्डोपरिजलधारां
प० ॥ तृ०रुद्रपिण्डे—ॐअग्नऽआयाहिवीतयेगृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥१॥ नमः
शम्भवायच० ॥१॥ इतिमन्त्रद्वयेनरुद्रकलशोदकेनरुद्रपिण्डोपरिजलधारांप० ॥च०—यमपिण्डे—ॐ
शन्नोदेवी०॥१॥ यमायत्वामखायत्वासूर्य्यस्यत्वातपसे ॥ देवस्त्वासवितामध्वानक्तुपृथिव्याः सः
स्पृशस्पाहि ॥ अर्चिरसिशोचिरसितपोसि ॥ २ ॥ इतिमन्त्रद्वयेनयमकलशोदकेनयमपिण्डो-
परिजलधारांप० ॥ पं०तत्पुरुषपिण्डे—ॐप्रेताजयतानरऽइन्द्रोवः शर्म्मयच्छतु ॥ उग्रावः सन्तुबाह-
वोनाधृष्यायथासथ ॥१॥ अक्रन्कर्म्मकर्म्मकृतः सहवाचामयोभुवा ॥ देवेभ्यः कर्म्मकृत्वास्तम्प्रे
तसच्चाभुवः ॥ २ ॥ इतिमन्त्रद्वयेनतत्पुरुषकलशोदकेनतत्पुरुषपिण्डोपरिजलधारांपयोधारा०
॥५॥ शेषोदकेनधारांएकतन्त्रेणपञ्चपिण्डोपरिदद्यात् अनादिनिधनोदेवः शङ्खचक्रगदाधरः ॥ अक्षय्यः पुण्ड

रीकाक्षःप्रेतमोक्षप्रदोभवेत् ॥ १ ॥ अतसीपुष्पसंकाशंपीतवाससमच्युतम् ॥ येनमस्यन्तिगोवि-
न्दंनतेषांविद्यतेभयम् ॥२॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव ॥ संसारार्णवमग्नानांप्रसी-
दपुरुषोत्तम ॥३॥ नारायणसुरश्रेष्ठलक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनैवप्रेतमोक्षप्रदोभव ॥४॥
हिरण्यगर्भपुरुषव्यक्ताव्यक्तस्वरूपधृक् ॥ अस्यप्रेतस्यमोक्षार्थंसुप्रीतोभवसर्वदा ॥५॥ सव्यं ॥
दक्षिणासंकल्पः—अमीषांश्राद्धानांप्रतिष्ठासिद्ध्यर्थंदास्यमानांदक्षिणांब्रह्मादितत्पुरुषपर्यन्तेभ्यःप्रत्ये-
कमिदन्ते ॥ पञ्चपिण्डोपरिपञ्चदानानि । ब्रह्मपिण्डे—सस्यवत्याभूमेर्दानम् । विष्णुपिण्डे—धेनुदानम् ॥ रुद्रपिंडेवृष-
भदानम् ॥ यमपिंडेतिलपात्रदानम् ॥ तत्पुरुषपिंडेसुवर्णदानम् ॥ यस्यब्राह्मणस्ययस्मिन्कलशेवरणंतस्मैतंकलशंदद्यात् ॥
हस्तेजलमादाय— इमंब्रह्मकलशंजलपूरितंवस्त्रगन्धपुष्पाद्यर्चितंपूर्णपात्रफलहिरण्यसहितंब्रह्मसूक्तजा-
प्यसहितंइमांसस्यवतींभूमींचअपसव्यंअ० गोत्रस्यअ० प्रेतस्यब्रह्मलोकफलप्राप्त्यर्थंसव्यंब्रह्म-
सूक्तपाठकायब्रह्मरूपिणेब्राह्मणायतुभ्यमहंसम्प्रददेदानाधीशोब्रह्माप्रीयताम् ॥ १ ॥ इमंविष्णु
कलशंजलपूरितंवस्त्रगन्धपुष्पाद्यर्चितंपू० विष्णुसूक्तजाप्यसहितंइमांधेनुंचअपसव्यंअ०गो० प्रे०
विष्णुलोकफलप्राप्त्यर्थंसव्यंविष्णुसूक्तपाठकायविष्णुरूपिणेब्रा०तु०दे । दानाधीशोविष्णुःप्री-

 



यताम् ॥२॥इमंरुद्रकलशंजलपूरितंवस्त्रगन्धपु०रुद्रसूक्तजाप्यसहितंइमंवृषभंचअपसव्यंअ०गो०
प्रे०रुद्रलोकफलप्राप्त्यर्थंसव्यंरुद्रसूक्तपाठकायरुद्ररूपिणेब्रा०तु०दे । दानाधीशोरुद्रःप्रीयताम्
॥३॥इमंयमकलशं०यमसूक्तजाप्यसहितंइदंद्रोणपात्रतिलदानंचअपसव्यंगो०प्रे०चतुर्दशयमलो
कनिवृत्त्यर्थंसव्यंयमसूक्तपाठकायब्रा०तु०दे। दानाधीशोयमःप्री० ॥४॥इमंतत्पुरुषकलशं०तत्पु-
षसूक्तजाप्यसहितंइदंसुवर्णदानंचअपसव्यंगो० प्रे०प्रेतलोकनिवृत्त्यर्थंसव्यंतत्पुरुषसूक्तपाठकाय
ब्रा०तु०दे।दाना०तत्पुरुषःप्री०॥अपसव्यं।एतत्पञ्चदेवतानांश्राद्धोपार्जितंपुण्यंगोत्रायप्रेतायउप-
तिष्ठतु । सव्यं। अद्यपूर्वो०ब्रह्मादिपञ्चदेवतानांश्राद्धविधेःसर्वंपरिपूर्णमस्तु ॥ अपसव्यं।कृतेना
नेनपञ्चदेवतानांश्राद्धेनअ०गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्तिःअसद्गतिमृत्युविनाशःसद्गतिप्राप्तिः
अक्षयातृप्तिःयमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अप्रेतनवृषोत्सर्गयोग्यतावाप्तिः ॥ भद्रंकर्णेति-
मन्त्रेणविसर्जनम्—ॐभद्रंकर्णेभिः० ॥ पिण्डान्प्रवाह्यस्नायात् ॥ इतिपञ्चदेवतानांश्राद्धम् ॥ ॥
अथवृषोत्सर्गप्रारंभः ॥ स्नानं ॥ आचम्यप्राणानायम्य ॥ शिखाबन्धनम् ॥ विष्णुस्मरणम् ॥ अद्यपूर्वो०तिथौ

---

१ वृषोत्सर्गकालः ॥ सिन्धौ—एकादशेऽह्निमर्त्यस्ययस्यनोत्सृज्यतेवृषः ॥ प्रेतत्वंसुस्थिरंतस्यदत्तैःश्राद्धशतैरपि ॥ अयंद्वादशाहेउक्तो *

अपसव्यंअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थंरुद्रलोकफलप्राप्त्यर्थंसव्यंवृषोत्सर्गकर्माहंकरिष्ये ॥ ततःअरत्निमात्रेस्थण्डिलेपञ्चभूसंस्कारान्कृत्वारुद्रनामानंवह्निंस्थापयेत् ॥ ब्रह्मोपवेशनं । प्रणीतायाःसक्षीरंप्रणयनं । वामेदुग्धं । दक्षिणेजलं। आज्यस्थालीद्वे । चरुस्थालीद्वे । चरुद्वयं । रौद्रंपौष्णंच । रुद्रचरुस्तण्डुलैःपायसःकार्यःपौष्णश्चरुःपिष्टेनपयोघृतजलमयःकार्यः ॥ यावच्चरुर्निष्पद्यतेतावत्स्थाण्डिलादीशानकोणेरक्तवस्त्रोपरितण्डुलैःपञ्चकोणमण्डलंकृत्वाप्रेतमातॄणांतथाचवृषमातृ-

---

*भविष्ये—चैत्र्यांवापितृतीयायांवैशाख्यांद्वादशोहिवेति ॥ विष्णुधर्मेतुमृताहेप्युक्तः—विषुवद्वितयेचैवमृताहेबान्धवस्यचेति ॥ अयंगृहेनकार्यः—नगृहेमोचयेन्नीलंकामयन्पुष्कलंफलमितिकालिकापुराणात् ॥ कामधेनौ—वत्सराभ्यन्तरेपित्रोर्वृषस्योत्सर्गकर्मणि । वृद्धिश्राद्धंनकुर्वीततदन्यत्रसमाचरेत् ॥ तथा—पतिपुत्रवतीनारीभर्तुरग्रेमृतायदि । वृषोत्सर्गंनकुर्वीतगांचदद्यात्पयस्विनीम् ॥ पाणिग्रहंविनानारीव्रतबन्धाद्विनाद्विजः ।
वृषोत्सर्गःप्रकर्तव्यःसपिण्डीकरणंविना ॥ अत्राधिकारिणः—पुत्रोवाथपितावापिपौत्रोबन्धुजनस्तथा । योऋणस्यार्थभागीचेन्मृतेकुर्याद्वृषोत्सर्गं ॥ पुत्राभावेतुपत्नीस्याद्दौहित्रोदुहितापिवा । पुत्रेतुविद्यमानेपुनान्योवैकारयेद्वृषम् ॥ वृषोत्सर्गंततःकुर्यात्प्रेतत्वनाशनायच । रुद्रलोकफलावाप्त्यै-
२६ विधिवच्छ्रद्धयान्वितः ॥ स्थण्डिलेऽरत्निमात्रेचस्वगृह्योक्तविधानतः । स्थापयेद्रुद्रनामानंवृषोत्सर्गेविभावसुं ॥ सक्षीरांप्रणीतांकृत्वाचाज्यस्थालीद्वयंतथा । चरुस्थालीद्वयंतत्रस्थापयेद्विधिपूर्वकम् ॥ श्रपयेच्चैवरुद्रार्थंतण्डुलैःपायसंचरुम् । पिष्टमयंचपूषार्थंश्रपयीतचरुंततः ॥ १ ईशान्यांरक्तवस्त्रेचतण्डुलैःस्थापनंचरेत् ॥ प्रेतवृषभमातॄणांकोष्ठेषुनामाभिःपृथक् ॥

णांस्थापनंकुर्यात् ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गति०सद्गति-
प्रा० वृषोत्सर्गाख्यकर्मप्रारंभांगनिमित्तंसव्यंप्रेतमातॄणांतथाचवृषमातॄणामावाहनस्थापनप्रतिष्ठा
पूजनमहंकरिष्ये ॥ ॐभूर्भुवःस्वःनन्दिन्यैनमःनन्दिनींआवाहयामिस्थापयामि ॥ ॐभू०नलि-
न्यै०नलिनींआ० ॥ ॐरौद्र्यै०रौद्रींआ० ॥ ॐघोरायै०घोरांआ० ॥ ॐवसवे०वसुंआ० ॥ ५ ॥
ॐनन्दायै०नन्दांआ०॥ ॐसुमनसायै०सुमनसांआ० ॥ ॐसुभद्रायै०सुभद्रांआ०॥ ॐसुशी-
लकायै०सुशीलकांआ० ॥ ॐसुरभ्यै०सुरभिंआ० ॥ ५ ॥ संतवसोर्द्धाराः—ॐश्रियैनमःश्रियं-

---

१ नन्दिनीनलिनीरौद्रीघोराचैववसुस्तथा ॥ क्रियाकर्मणिकर्तव्याःपञ्चैताःप्रेतमातरः ॥ २ नन्दासुमनसाचैवसुभद्राचसुशीलका ॥ पञ्चमीसुर-
भिःप्रोक्ताःपञ्चैतावृषमातरः ॥ पूर्वादिषुचतुर्दिक्षुपञ्चमीमध्यदेशतः ॥ ३ श्रीर्लक्ष्मीश्चधृतिर्मेधास्वाहापुण्यासरस्वती ॥ तदीशानेरुद्रकुंभंस्थापयेत्स-
हिरण्यकं ॥ कृत्वाप्रतिष्ठांपूजांचनालिकेरार्घ्यमाददेत् ॥ मातरःसुप्रसन्नाहिग्रहीत्वार्घ्यंमयार्पितं ॥ प्रेतपापक्षयंकृत्वाभवतप्रेतमुक्तिदाः ॥ इत्यन्तेरुद्रक-
लशेरुद्राध्यायस्तुकेवलः ॥ जपःकार्यःसुविप्रेणततःकर्मसमाचरेत् ॥ वृषंवत्सतरीयुक्तमानीयाग्निसमीपतः ॥ प्रेतस्यैकादशाहेचरुद्रलोकफलाप्तये ॥
वृषयज्ञोमहायज्ञःसर्वेषामुत्तमोत्तमः ॥ कृत्वावैपापयोनिंचनरोनारीनविन्दति ॥ दत्त्वादानान्यनेकानिसुतीर्थेवामृतोयदि ॥ नगतिंप्राप्नुयात्का-
पितृगोत्सर्गंविनार्पयेत् ॥ नकृतोवृषयज्ञोऽपियेनेहपुण्यकर्मणा ॥ प्रेतत्वंसुस्थिरंतस्यह्यन्यैश्छिनिष्फलाभवेत् ॥ तावन्नगतिमाप्नोतिप्रेतभावंगतो-
एकादशेह्निवैकुर्यात्प्रेतस्यचवृषोत्सवं ॥ अकृत्वाचवृषोत्स-×

आ० ॥ ॐलक्ष्म्यै०लक्ष्मींआ० ॥ ॐधृत्यै०धृतिंआ० ॥ ॐमेधायै०मेधांआ० ॥ ॐस्वाहायै० स्वाहांआ० ॥ ॐपुष्ट्यै०पुष्टिंआ० ॥ ॐसरस्वत्यैनमःसरस्वतींआ० ॥ ७ ॥ इतिसप्तवसोर्धारास्थापनम् ॥ मातृणांईशानकोणेरुद्रकुंभंस्थापयेत् ॥ भूरसीतिक्रमेणकलशस्थापनम् ॥ भूरसीतिभूमींसंप्राश्यं–ॐभूरसि० ॥ कलशस्थापनम्–ॐआजिघ्रकलशं० ॥ जलंपूरयेत्–ॐवरुणस्योत्तंभनम्० ॥ गन्धंप्रक्षिपेत्–ॐत्वांगन्धर्व्वा० ॥ सर्वौषधीप्रक्षेपः–ॐयाऽओषधीः० ॥ पञ्चपल्लवप्रक्षेपः–ॐअश्वत्थेवो० ॥ फलप्रक्षेपः–ॐयाःफलिनीर्या० ॥ हिरण्यप्रक्षेपः–ॐहिरण्यगर्भःसम० ॥ रक्तसूत्रंवेष्टयेत्–ॐयुवासुवासा० ॥ पूर्णपात्रमुपरिन्यसेत्–ॐपूर्णादर्वि० ॥ वरुणंआवाहयेत्–ॐतत्त्वायामि० ॥ ॐभू०वरुणंसाङ्गंसपरिवारंआवा-

---

×र्गंयथोक्तविधिनाद्विज ॥ प्रेतत्वंसुस्थिरंतस्यदत्तैःश्राद्धैःशतैरपि ॥ जीवितोपिमृतानांचकुरुतेयोवृषोत्सवं ॥ गतास्तेपितृलोकंहिनगच्छन्तियमालयं ॥ पुत्रोवाथपितावापिपौत्रोबन्धुजनस्तथा ॥ योऋणस्यार्थभागीस्यान्मृतेकुर्याद्वृषोत्सवं ॥ पुत्राभावेतुपत्नीस्याद्दौहित्रोदुहितापिवा ॥ पुत्रेषुविद्यमानेषुनान्योवैकारयेद्वृषम् ॥ अकृत्वातुवृषोत्सर्गंकुरुतेपिण्डपातनं ॥ नोपतिष्ठतितच्छ्रेयोदातुःप्रेतस्यनिष्फलम् ॥ अतस्त्वेकादशाहेस्याद्वृषोत्सर्गोमृतस्यच ॥ कृत्वाचैववृषोत्सर्गंकुर्याच्छ्राद्धानिषोडश ॥ यथोक्तविधिनाविप्रायदात्वेकादशेहनि ॥ नकृतस्तुवृषोत्सर्गोमन्त्रमात्रेणवैकृतः ॥ तदायथोक्तविधिनाकर्तव्यःप्रथमाब्दिके ॥ समृद्धिरप्यतेवाथयदातदातुकारयेत् ॥ असंपत्तौविधिमात्रमकृत्वैकादशेहनि ॥ नकुर्यादाद्यमासस्यश्राद्धंतस्मात्प्रयत्नतः ॥ कर्ममात्रमपिकृत्वावृषोत्सर्गस्यमन्त्रतः ॥ कुर्यादाद्यादिश्राद्धानिषोडशैवनसंशयः ॥

ह्यामि ॥ वरुणायनमःसर्वोपचारार्थेगन्धाक्षतपुष्पाणिसमर्पयामि ॥ अतःपरंताम्रमयींरुद्रमूर्तिंकलशो-
परिस्थापयेत् ॥ ॐनमःशंभवायच० ॥ ॐभू०रुद्रायनमःरुद्रंआवाहयामिस्थापयामि ॥ प्रतिष्ठांकृत्वा-
ॐमनोजूतिर्जुषतां० ॥ ॐभू०नन्दिन्यादिपञ्चप्रेतमातरःनन्दादिपञ्चवृषमातरःवसोर्द्धारासहि-
ताःसुप्रतिष्ठितावरदाभवेयुः ॥ नन्दिन्यादिपञ्चप्रेतमातरःनन्दादिपञ्चवृषमातरःवसोर्द्धारासहि-
ताएतद्वःपाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽर्घःइदमत्रचन्दनंपुष्पं ॥ पादार्घोदकनिक्षेपः ॥
स्वपादप्रक्षालनं॥ आचमनं ॥ दिग्बन्धः—ऐन्द्र्यांनारायणोरक्षे० ॥ इतिदिग्बन्धः ॥अपवित्रःपवित्रोवा०॥
यद्देवेतिमन्त्रेणतिलोदककरणम्—ॐयद्देवा० ॥१॥यदिदिवा० ॥२॥ यदिजाग्रत्० ॥३॥ इतिमन्त्रेणतिलोदकंवि-
धायउपहारान्प्रोक्षयेत् ॥ उदक्यादि०भवन्तु । अद्यपूर्वो०अपसव्यंअ०गोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्त्य-
र्थंअसद्गति० सद्गति०वृषोत्सर्गाख्यकर्मसाङ्गतासिद्ध्यर्थंसव्यंनन्दिन्यादिपञ्चप्रेतमातृणांतथान- ॥१२॥
न्दादिपञ्चवृषमातृणांवसोर्द्धारासहितानांसांकल्पविधिनाश्राद्धमहंकरिष्ये ॥ नन्दिन्यादिपञ्चप्रे-
तमातृणांनन्दादिपञ्चवृषमातृणांवसोर्द्धारासहितानांआसनमिदन्ते ॥ नन्दिन्यादिपञ्चप्रेतमा-
तृणांनन्दादिपञ्चवृषमातृणांवसोर्द्धारासहितानांअर्चनमिदन्ते ॥ अस्यार्चनविधेःसर्वंपरिपूर्ण-

मस्तु ॥ कृष्णगीतिवोज्योतिःसूर्योज्योतिःदीपोपचाराःसंपूर्णतास्तु ॥ आचमनं ॥ यथादास्य मानंब्राह्मणभोजनंप्रजापतिदैवतंप्रेतमातृभ्यःवृषमातृभ्यःवसोर्द्धारासहिताभ्यःउपतिष्ठताम् ॥ मुखवासताम्बूलंहिरण्यदक्षिणांस० ॥ सुप्रोक्षितादिकं ॥ अर्घ्यदानम्–नालिकेरंगृहीत्वापठेत्–मातरः–सुप्रसन्नाहिगृहीत्वार्घंमयार्पितम् ॥ प्रेतपापक्षयंकृत्वाभवतप्रेतमुक्तिदाः ॥ १ ॥ इत्युक्त्वाप्रेतमातृणां-नालिकेरार्घंसमर्पयेत् ॥ अपसव्यं ॥ एतत्प्रेतमातृणांतथावृषमातृणांवसोर्द्धारासहितानांसांकल्पवि-धिनाश्राद्धोपार्जितंपुण्यंअ० गोत्रायअ० प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो० प्रेतमातृणांवृष-मातृणांवसोर्द्धारासहितानांसांकल्पविधिनाश्राद्धविधेःसर्वंपरिपूर्णमस्तु ॥ अपसव्यंप्रेतमातृवृष मातृश्राद्धेनअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्तिःअसद्गति० सद्गतिप्राप्तिः॥ अक्षयातृप्तिः ॥ यमया-तनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अग्रेतनवृषोत्सर्गहोमयोग्यतावाप्तिः ॥ स्थंडिलेपञ्चभूसंस्कारपूर्वकम-ग्निंप्रतिष्ठाप्य ॥ अन्वाधानम्–अद्यपूर्वो० अस्मिन्वृषोत्सर्गाख्येकर्मणिदेवतापरिग्रहार्थमन्वाधानंकरिष्ये । अस्मिन्नन्वाहितेऽग्नौपूर्वेणब्रह्मणोगमनम् ॥ उत्तरतःपात्रासादनं ॥ पवित्रेद्वे ॥ ताम्रमयीआज्य-स्थालीद्वे ॥ ताम्रमयीचरुस्थालीद्वे ॥ पालाश्यःसमिधस्तिस्रः ॥ प्राञ्चावाघारौ ॥ समिद्धतमे-

आज्यभागौ ॥ पूर्णपात्रंदक्षिणावा ॥ एतान्वैकल्पिकान्पदार्थानहंकरिष्ये ॥ अथदेवताभिध्यानम् ॥ अग्निंइन्द्रंशर्वंपशुपतिं अग्निंषड्वारंएकैकयाज्याहुत्याप्रजापतिमग्निंइन्द्रंसोमंएकैकयाज्याहुत्या ॥ अग्निंइन्द्रंशर्वंपशुपतिं उग्रंअशनंभवंमहादेवंईशानंएकैकयापायसाहुत्या ॥ पूषणंपिष्टचरुणाएकाहुत्याशेषेणस्विष्टकृत-मित्यादिवृषोत्सर्गाख्येकर्मण्यहंयक्ष्ये ॥ दक्षिणतोब्रह्मासनं ॥ ब्रह्मवरणं ॥ प्रणीतापात्रमध्येपि-ध्रेनसेतुंकृत्वा ॥ सक्षीरप्रणीताप्रणयनं ॥ परिस्तरणं ॥ पात्रासादनं ॥ पवित्रच्छेदनार्थंदर्भास्त्र-यः ॥ पवित्रेद्वे ॥ प्रोक्षणीपात्रं ॥ आज्यस्थालीद्वे ॥ चरुस्थालीद्वे ॥ संमार्गकुशाःपञ्च ॥ उपय-मनकुशाःसप्त ॥ समिधास्तिस्रः ॥ स्रुवः ॥ आज्यं ॥ तंडुलाः ॥ पौष्णःपिष्टमयःसिद्धएवचरुः ॥ पूर्णपात्रं। पवित्रच्छेदनादिपात्रप्रोक्षणान्तंकृत्वा ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ चरुस्थाल्यांस-क्षीरतंडुलप्रक्षेपः ॥ दक्षिणतआज्याधिश्रयणं ॥ चरोरधिश्रयणमाज्यस्योत्तरतः ॥ उभयोःपर्य-ग्निकरणं ॥ अर्धश्रृतेचरौस्रुवस्यप्रतपनं ॥ देशेनिधानं ॥ आज्योद्वासनंचरोःपूर्वेण ॥ चरोरुद्वा-सनंआज्यमपरेण ॥ तदुत्तरतःपिष्टचरोः ॥ आज्योत्पवनादिसमिदाधानान्तंकृत्वा ॥ द्वितीयाज्य-

॥१३॥

[illegible] ॥ [illegible] ॥ इहरतीतिषण्णांदेवाऋषयः चत्वारियजु(?)
षिद्वेउष्णिहौअग्निर्देवतावृषोत्सर्गहोमेविनियोगः ॥ ॐइहरतिःस्वाहा । इदमग्नयेनमम ॥
॥ १ ॥ ॐइहरमध्वंस्वाहा । इदम० ॥ २ ॥ ॐइहधृतिःस्वाहा । इदम० ॥ ३ ॥ ॐइहस्वधृतिः
स्वाहा । इदम० ॥ ४ ॥ ॐउपसृजन्धरुणंमात्रेधरुणोमातरंधयन्स्वाहा । इदम० ॥ ५ ॥ ॐराय-
स्पोषमस्मासुदीधरत्स्वाहा । इदम० ॥ ६ ॥ ततःअन्वारब्धः ॥ प्रथममाज्यस्थालीस्थेनाज्येनाघा-

---

१, तत्रकुशाण्डिकांसर्वांसमाप्यविधिवत्ततः ॥, होमंसमाचरेद्विद्वान्पूर्वमाज्याहुतीश्चषट् ॥, दद्यात्प्रतिपदंचेहइहरत्यादिमन्त्रतः ॥ आघारावाज्यभागौचहुत्वाचतदनन्तरं ॥, वक्ष्यमाणैस्ततोमन्त्रैर्जुहुयात्पायसंचरुं ॥, अग्नयेचैवरुद्रायशर्वायचततःपरं ॥, पशुपतयेउग्रायअश-नायभवायच ॥, महादेवायेशानायपौष्णहोमंततःपरम् ॥, पूषागान्वेतुनइतिमन्त्रेणजुहुयात्ततः ॥, उभयोःस्विष्टकृतंचहुत्वाचैवनवाहुतीः ॥ रुद्रकुंभोदकेनैववृषंवत्सतरीयुतं ॥, अभिषिञ्चेत्समुद्रोसीत्यनुवाकेनवैपुनः ॥ सहस्राक्षादिभिर्मन्त्रैःस्मार्तोक्तैश्चविधानतः ॥ वामेचक्रंसमालिख्य त्रिशूलंदक्षिणेलिखेत् ॥, ततोन्यासविधिंकुर्यादष्टाङ्गेषुवृषस्यच ॥, युंजतेमनइत्याद्यैर्मन्त्रैरष्टभिरेवच ॥, कृत्वापूजांविधानेनमधुपर्कादुपायनैः ॥ ततस्तुकारयेद्विद्वान्वह्नेश्चतुःप्रदक्षिणं ॥ वृषंवत्सतरीयुक्तंलाजाहवनपूर्वकं ॥, लाजांस्तुतिलमिश्रांश्चजुहुयात्प्रतिमंगलं ॥, रुद्रायप्रेतायहुत्वाचवि-ष्णवेब्रह्मणेनमः ॥, सर्वेभ्यश्चैवदेवेभ्यश्चतुर्थंहोमयेद्द्विजः ॥, ततोगवाह्निकंदत्वाप्रार्थनांकारयेत्सुधीः ॥ वृषवत्सतरीणांचमन्त्रेणचपृथक्पृथक् ॥, धर्मस्त्वं-वृषरूपेणजगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातन ॥, अदितिर्देवमाताचवेदमाताचधीश्वरी ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥

रावाज्यभागौ ॥ मनासि ॥ ॐप्रजापतयेस्वाहा । इदंप्र० ॥ १ ॥ ॐइन्द्रायस्वाहा । इदंइ० ॥२॥ ॐअग्नयेस्वाहा । इदम०अ॥ ३ ॥ ॐसोमायस्वाहा । इदंसो० ॥ ४ ॥ अक्षतान्गृहीत्वा–तदेत-द्वृचा०वृषोत्सर्गेरुद्रनामानंवह्निंआवाहयामि ॥ इदमत्रचंदनंपुष्पं ॥ बहिरग्नेःपूजनम् ॥ अथपाय-सचरुहोमः–ॐअग्नयेस्वाहा । इदम० ॥ १ ॥ ॐरुद्रायस्वाहा । इदंरु० ॥ २ ॥ ॐशर्वायस्वाहा । इदंश० ॥ ३ ॥ ॐपशुपतयेस्वाहा । इदंपशु० ॥ ४ ॥ ॐउग्रायस्वाहा । इदंउ० ॥ ५ ॥ ॐअश-नायस्वाहा । इदंइ० ॥ ६ ॥ ॐभवायस्वाहा । इदंभ० ॥ ७ ॥ ॐमहादेवायस्वाहा । इदंम० ॥ ८ ॥ ॐईशानायस्वाहा । इदंई० ॥ ९ ॥ ततःपौष्णचरुहोमः–पूषागाअन्वेतुनइतिवामदे-वऋषिःबृहद्गायत्रीछन्दःपूषादेवतापौष्णेहोमेवि० ॥ ॐपूषागाअन्वेतुनःपूषारक्षत्वर्वतः ॥ पूषावाजꣳसनोतुनःस्वाहा । इदंपूष्णे० ॥ उभयोःस्विष्टकृतहोमः ॥ ॐअग्नयेस्विष्ट० स्वाहा । इदमग्नयेस्वि० ॥ ततोभूराद्यानवाहुतयः ॥ ॐभूःस्वाहा । इत्यादिप्रजापत्यन्तंसमाप्यततःरुद्रकलशे-रुद्रप्रतिमांस्पृष्ट्वानमस्तेरुद्रेतिरुद्राध्यायंषोडशर्चंवापठित्वा ॥ वृषवत्सतर्योःअग्निसमीपेस्थापनम् ॥ वत्सतर्याःस्नानम्–ॐइडेरन्तेहव्येकाम्येचन्द्रेज्योतेदितिसरस्वतिमहिविश्रुति ॥ एताते॓ऽअघ्न्येनामानिदेवेभ्यो-

मासुकृतम्भूतात् ॥१॥ इतिमन्त्रेणवत्सतर्योःस्नानंकार्यं ॥ वृषस्यस्नानम्—ॐमानस्तोके० ॥१॥ इतिमन्त्रेणवृषस्यस्नानंकार्यं ॥ वह्नेः पश्चिमदिग्भागेवृषवत्सतर्योःस्थापनम् ॥ रुद्रकुंभंगृहीत्वासमुद्रोसीत्यनुवाकेनवृषवत्सतर्योःअभिषेकंकुर्यात् ॥ ॐउत्तिष्ठब्रह्मणस्पते० ॥ इतिमन्त्रेणरुद्रकलशस्योत्थापनम् ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वोत्तारणार्थंअसद्गति० सद्गतिमा० वृषोत्सर्गाख्यकर्मसाङ्गतासिद्ध्यर्थंसव्यंवृषवत्सतर्योःअभिषेकन्यासविधिनापूजनमहंकरिष्ये ॥ अथाभिषेकमन्त्राः—ॐसमुद्रोसिनभस्वानार्द्रदानुः शम्भूर्म्मयोभूरभिमावाहिस्वाहामारुतोमरुताङ्गणः शम्भूर्म्मयोभूरभिमावाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भूर्म्मयोभूरभिमावाहिस्वाहा ॥ १ ॥ यास्तेऽअग्ने सूर्य्येरुचोदिवमातन्वन्तिरश्मिभिः ॥ ताभिर्न्नोऽअद्यसर्वाभीरुचेजनायनस्कृधि ॥ २ ॥ यावोदेवाःसूर्य्येरुचोगोष्वश्वेषुयारुचः ॥ इन्द्राग्नीताभिःसर्वाभीरुचन्नोधत्तबृहस्पते ॥३॥ रुचन्नोधेहिब्राह्मणेषुरुचः राजसुनस्कृधि ॥ रुचंविश्येषुशूद्रेषुमयिधेहिरुचारुचम् ॥४॥ तत्त्वायामि० ॥५॥ स्वर्ण्णघर्म्मःस्वाहास्वर्ण्णार्कःस्वाहास्वर्ण्णशुक्रःस्वाहास्वर्ण्णज्ज्योतिःस्वाहास्वर्ण्णसूर्य्यःस्वाहा ॥६॥ आपोहिष्ठेतितिस्रः ॥९॥ अभीषुणःसखीनामविताजरितॄणाम् ॥ शतंभवास्यूतिभिः ॥१०॥

सुमित्रिया० ॥११॥ ॐतेजोसि० ॥ १२ ॥ ॐआनोभद्राःक्रतवोयन्तुविश्वतोदब्धासोऽअपरी-
तासऽउद्भिदः ॥ देवानोयथासदमिद्वृधेऽअसन्नप्रायुवोरक्षितारोदिवेदिवे ॥१३॥ इरावतीधेनु-
मतीहिभूतःसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवीमभितोम-
यूखैःस्वाहा ॥१४॥ वरुणस्योत्तं० ॥१५॥ पावकानःसरस्वतीवाजेभिर्व्वाजिनीवती ॥ यज्ञंवष्टुधि-
यावसुः ॥१६॥ युञ्जानःप्रथमम्मनस्तत्वायसविताधियः ॥ अग्नेर्ज्ज्योतिर्न्निचाय्यपृथिव्याऽ
अध्याभरत् ॥१७॥ इदमापःप्रवहतावद्यञ्चमलञ्चयत् ॥ यच्चाभिदुद्रोहानृतंयच्चशेपेऽअभीरु-
णम् ॥ आपोमातस्मादेनसःपवमानश्चमुञ्चतु ॥ १८ ॥ हविष्मतीरिमाऽआपोहविष्माँ२आविवा-
सति ॥ हविष्मान्देवोऽअध्वरोहविष्माँ२ऽअस्तुसूर्य्यः ॥१९॥ अपोदेवामधुमतीरगृभ्णन्नूर्ज्ज-
स्वतीराजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥ २० ॥
द्रुपदादिव० ॥२१॥ पुनर्म्मनःपुनरायुर्म्मऽआगन्पुनःप्राणःपुनरात्मामऽआगन्पुनश्चक्षुःपुनः
श्रोत्रम्मऽआगन् ॥ वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्न्नःपातुदुरितादवद्यात् ॥ २२ ॥ अपा७
रसम० ॥ २३ ॥ अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ॥ तासामास्थानादुज्जिहतामोष-

॥९५॥

[illegible] ॥२४॥ [illegible] ॥२५॥ [illegible] ॥२६॥ [illegible]स्तानि-
पुष्पिणी० ॥ तेषां सहस्रयोजनेऽवधन्वानितन्मसि ॥२७॥ पयः पृथि॒व्यां० ॥२८॥ दे॒वस्य॑त्वा-
सवि॒तुःप्र॑स॒वेऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णोहस्ता॑भ्याम् ॥ सर॑स्वत्यैवा॒चोय॒न्तुर्य॒न्त्रियेद॑धामि॒बृह॒-
स्पतेष्ट्वासाम्रा॑ज्येना॒भिषि॑ञ्चाम्यसौ ॥ २९॥ दे॒वस्य॑त्वा०सर॑स्वत्यैवा॒चोय॒न्तुर्य॒न्त्रेणा॒ग्नेःसाम्रा॑ज्ये
ना॒भिषि॑ञ्चामि ॥ ३० ॥ दे॒वस्य॑त्वा० अ॒श्विनो॒र्भैष॑ज्येन॒तेज॑सेब्रह्मवर्च॒साया॒भिषिं॑ञ्चामि॒सर॑स्व
त्यै॒भैष॑ज्येनवी॒र्या॒यान्नाद्या॑या॒भिषि॑ञ्चामीन्द्र॑स्येन्द्रि॒येण॒बला॑यश्रि॒यैयश॑से॒भिषि॑ञ्चामि ॥ ३१ ॥
पौराणिकमन्त्राः-सहस्राक्षंशतधारंऋषिभिःपावनंकृतं ॥ तेनत्वामभिषिञ्चामिपावमान्यःपुनन्तुते
॥१॥ यत्तेकेशेषुदौर्भाग्यंसीमन्तेयच्चमूर्द्धनि ॥ ललाटेकर्णयोरक्ष्णोरापोनिघ्नन्तुतेसदा ॥२॥ भग-
न्तेवरुणोराजाभगंसूर्योबृहस्पतिः ॥ भगमिन्द्रश्चवायुश्चभगंसप्तर्षयोविदुः ॥ ३ ॥ नारदाद्या-
ऋषिगणायेचान्येचतपोधनाः ॥ भवन्तुयजमानस्यआशीर्वादपरायणाः ॥ ४ ॥ गायत्रीचैवसा-
वित्रीशचीमेधासरस्वती ॥ मृडानीमातरःसर्वाभवन्तुवरदाःसदा ॥ ५ ॥ ॐपालाशम्भवतितेन
ब्राह्मणोभिषिञ्चतिब्रह्मणैपलाशोब्रह्मणैवैनमेतदभिषिञ्चति ॥१॥ अमृताभिषेकोस्तु ॥ इतिरुद्रकल-

शौदकेनवृषवत्सतयोस्त्रपनम् ॥ अथवृषभन्यासः[1] ॥ इषेत्वेतिमूर्ध्नि:—ॐइषेत्त्वोर्ज्जेत्वावायवस्थदेवोवः सविताप्प्रार्प्पयतुश्रेष्ठतमायकर्म्मणऽ आप्यायध्वमघ्न्याऽ इन्द्रायभागम्प्रजावतीरनमीवाऽ अयक्ष्मामावस्तेनऽईशतमाघशंसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि॥१॥इमारुद्रायेतित्रिशूले—ॐइमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टंग्रामेऽअस्मिन्ननातुरम् ॥ २ ॥ नमस्तेरुद्रेतिचक्रे—ॐनमस्ते० ॥ ३ ॥ गोमदूषुणेतिललाटे—ॐगोमदूषुणासत्याश्वावद्यातमश्विना ॥ वर्त्तिरुद्रानृपाय्यम् ॥४॥ विभ्राडितिनेत्रयोः—ॐविभ्राड्बृहत्पिबतुसोम्यंमध्वायुर्दधद्यज्ञपतावविह्रुतम् ॥ वातजूतोयोऽअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविराजति ॥ ५ ॥ कयानश्चित्रेतिकर्णयोः—ॐकयानश्चित्रऽआभुवदूतीसदावृधःसखा ॥ कयाशचिष्ठयावृता ॥६॥ परंमृत्योप्राणदामन्त्राभ्यांनासापुटयोः—ॐपरंमृत्योअनुपरेहिपन्थांयस्तेऽअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजाःरीरिषोमोतवीरान् ॥ ७ ॥ ॐप्राणदाऽअपानदाव्यानदावर्च्चोदावरिवोदाः ॥ अन्यांस्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्मभ्यंशिव-

१ अथन्यासंप्रकुर्वीतवृषदेहेक्रमेणतु ॥

वोभव ॥८॥ अवतत्येतिपृष्ठे—ॐअवतत्यधनुष्ट्वᳫंसहस्राक्षशतेषुधे ॥ निशीर्य्यशल्यानाम्मुखाशिवोनः सुमनाभव ॥ ९ ॥ नीलग्रीवाःइतिद्वौकण्ठे—ॐनीलग्ग्रीवाःशितिकण्ठादिवᳫंरुद्राऽउपश्रिताः ॥ तेषाᳫंसहस्रयोजनेवधन्न्वानितन्न्मसि ॥१०॥ नीलग्ग्रीवाःशितिकण्ठाःशर्वाऽअधःक्षमाचराः ॥ तेषाᳫंसहस्रयो० ॥ ११ ॥ मर्म्माणीतिबाहुमध्ये—ॐमर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥१२॥ समिधाग्निमितिबाह्वोः—ॐसमिधाग्निन्दुवस्यतघृतैर्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥१३॥ सप्तऋषयःइतिस्कन्धे—ॐसप्तऋषयःप्रतिहिताःशरीरेसप्तरक्षन्तिसदमप्रमादम् ॥ सप्तापःस्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥ १४ ॥ नमोवःकिरिकेभ्यइतिहृदि—ॐनमोवःकिरिकेभ्योदेवानाᳫंहृदयेभ्योनमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्योनमःऽआनिर्हतेभ्यः ॥ १५ ॥ हिरण्यगर्भेतिनाभौ—ॐहिरण्यगर्भःसम० ॥ १६ ॥ मीढुष्टमेतिकट्यां—ॐमीढुष्टमशिवतमशिवोनःसुमनाभव ॥
२७ परमेवृक्षऽआयुधन्निधायकृत्तिंवसानऽआचरपिनाकंबिभ्रदागहि ॥ १७ ॥ मानोमहान्तमितिऊर्वोः—ॐमानोमहान्तमुतमानोऽअर्भकम्मानऽउक्षन्तमुतमानऽउक्षितम् ॥ मानोवधीःपितरंमोतमा-

तरंमानः प्रियास्तन्वोरुद्ररीरिषः ॥ १८ ॥ उदुत्तमंवरुणेतिजंघयोः—ॐउदुत्तमम्वरुणपाशमस्मदवाध-
मंविमध्यमᳮश्रथाय ॥ अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितयेस्याम ॥ १९ ॥ उदुत्यमिति-
जान्वोः—ॐउदुत्यञ्जातवेदसे० ॥२०॥ ॐरक्षोहणंइतिगुदे—ॐरक्षोहणंवलगहनंवैष्णवीमिदमहन्तं-
वलगमुत्किरामियम्मेनिष्ट्योयममात्त्योनिचखानेदमहन्तंवलगमुत्किरामियम्मेसमानोयमसमा
नोनिचखानेदमहन्तंवलगमुत्किरामियम्मेसवन्धुर्य्यमसवन्धुर्न्निचखानेदमहन्तंवलगमुत्किरामि
यम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ॥ २१ ॥ यथेमांइतिवृषणयोः—ॐयथेमांवाचङ्क-
ल्याणीमावदानिजनेभ्यः ॥ व्रह्मराजन्याभ्याᳮशूद्रायचार्य्यायचस्वायचारणायच ॥ प्रि-
योदेवानान्दक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनमतु ॥२२॥ इमम्मेतिपुच्छे—
ॐइमम्मेवरुणश्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥ २३ ॥ पञ्चनद्येतिपृष्ठे—ॐपञ्चनद्यः० ॥
॥ २४ ॥ कृणुष्वपाजःइत्याद्याःपञ्चपुच्छाग्रे—ॐकृणुष्वपाजः० ॥ तवभ्रमासः० ॥ प्रतिस्पशः० ॥ उद-
ग्ने० ॥ ऊर्ध्वोभव० ॥ ५ ॥ नमोरोहितायेतिसर्वरोमसु—ॐनमोरोहितायस्थपतयेवृक्षाणांपतयेनमो-
नमोभुवन्तयेवारिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणेवाणिजायकक्षाणाम्पतयेनमोनमऽ

[illegible] ॥ १० ॥ [illegible] ॥ ॐ [illegible]० ॥ इदंविष्णु० ॥ इरावती० ॥ देवश्रुतौ० ॥ विष्णोर्नुकं० ॥ दिवोवा० ॥ प्रतद्विष्णु० ॥ विष्णोरराटमसि० ॥ ८ ॥ एवंन्यासविधिंकृत्वारुद्ररूपोभवेद्वृषः ॥ गङ्गाद्याःसरितःसर्वास्तस्यपुच्छेवसन्तिहि ॥ १ ॥ ततःवत्सतर्याःशरीरेन्यासाः—ब्रह्मणेनमःशिरसि ॥ पृथिव्यै०पार्श्वे ॥ स्कंदाय०—उरसि ॥ रुद्राय०ललाटे ॥ दिग्भ्यो०कर्णयोः ॥ देवाभ्यां०कर्णमूले ॥ शशिभास्कराभ्यां०चक्षुषोः ॥मरुद्गणेभ्यो०दन्तेषु ॥ सरस्वत्यै०जिह्वायां ॥ मेरुमंदराभ्यां०शृङ्गयोः ॥ सर्वतीर्थेभ्यो०अपाने ॥ जाह्नव्यै०-प्रस्रावे ॥ ऋषिभ्यो०रोमसु ॥ यमाय०पृष्ठे ॥ धनदाय०दक्षिणकुक्षौ ॥ वरुणाय०वामकुक्षौ ॥ यक्षेभ्यो०खुरमध्ये ॥ गन्धर्वेभ्यो०खुराग्रे ॥ अप्सरोगणेभ्यो०खुराणांपश्चिमपार्श्वे ॥ लक्ष्म्यै०गोमये ॥ चतुर्वेदेभ्यो०हुंकारे ॥प्रजापतये०हुंशब्दे ॥ क्षीरसमुद्राय०स्तनेषु ॥ जातवेदसेतिसर्वाङ्गे विन्यसेत्—ॐजातवेदसेसुनवामसोममरातीयतोनिजहातिवेदः ॥ सनःपर्षदतिदुर्गाणिविश्वानावेवसिंधुंदुरितात्यग्निः ॥ १ ॥ कामधेन्वैनमः ॥ बहुलायै० ॥ सुरभ्यै० ॥ गौर्य्यै० ॥ नन्दिन्यै० ॥ ततोवृषस्यवामभागेचक्रंअग्राङ्कु-

लम्–ॐइदंविष्णु० ॥ दक्षिणेत्रिशूलंद्वादशाङ्गुलम्–ॐइमारुद्राय० ॥ ततोवृषस्यपुरुषसूक्तंश्रावयेत् ॥ १६ ॥
(षोडशमन्त्राः) ततोवृषवत्सतर्योःषोडशोपचारैःपूजनं ॥ वृषवत्सतर्योःवस्त्रालङ्कारान्दद्यात् ॥ तद्यथा–सुवर्णशृ-
ङ्गाद्यलङ्करणंश्वेतवस्त्रवेष्टनंवृषस्यकण्ठेपदंघण्टाबन्धनंच ॥ पार्श्वयोश्चामरे ॥ वत्सतरीकण्ठेअष्टसौभाग्यं ॥ कौसुंभवस्त्रे-
णाच्छादनम् ॥ उभयोर्मदनफलबन्धनम् ॥ कुङ्कुमेनवृषस्यचक्रंत्रिशूलंचकार्यम् ॥ ततोवृषप्रार्थना–धर्मस्त्वंवृषरूपे-
णगवामानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातन ॥ १ ॥ वृषोहिभगवान्धर्मश्चतुष्पादः
प्रकीर्तितः ॥ नमामित्वंमहाभक्त्यासमांरक्षतुसर्वदा ॥ २ ॥ वृषोभीष्टप्रदस्त्वंहिधर्मस्त्वंवृषरू-
पधृक् ॥ गृहाणार्घंनमस्तेस्तुवाञ्छितंदेहिमेप्रभो ॥ ३ ॥ नमोवृषभदेवायभूतर्षिपितृपोषक ॥
त्वयिमुक्तेक्षयान्लोकान्प्रेताःसन्तुनिरामयाः ॥ ४ ॥ तीक्ष्णशृङ्गायविद्महेवेदपादायधीमहि ॥
तन्नोवृषभःप्रचोदयात् ॥ ५ ॥ इतिवृषभप्रार्थना ॥ अथवत्सतरीप्रार्थना–गावोमेअग्रतःसन्तुगावोमेस-
न्तुपृष्ठतः ॥ गावोमेहृदयेसन्तुगवांमध्येवसाम्यहम् ॥ १ ॥ पञ्चगावःसमुत्पन्नामथ्यमानेमहो-
दधौ ॥ तासांमध्येतुयानन्दातस्यैधेन्वैनमोनमः ॥ २ ॥ यालक्ष्मीःसर्वभूतानांयाचदेवेष्ववस्थि-

१ त्रिशूलंदक्षिणेपार्श्वेवामेचक्रंतुविन्यसेत् ॥ ललाटेतिलकंपुष्पमालाद्यलंकरणम् ॥

ता ॥ धेनुरूपेणसादेवीममपापंव्यपोहतु ॥ ३ ॥ अदितिर्देवमाताचवेदमातासुधीश्वरी ॥ धेनु-
रूपेणसादेवीममपापंव्यपोहतु ॥ ४ ॥ धर्मस्त्वंचैवसंभूतास्वाहापुण्याविभावसोः ॥ धेनुरूपेण-
सादेवीममपापंव्यपोहतु ॥५॥ इतिवत्सतरीप्रार्थना ॥ आचम्यप्राणानायम्य॥अद्यपूर्वो० अपसव्यंअ०
प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गति० सद्गति० रुद्रलोकफलप्राप्त्यर्थंसव्यंनीलकंठरूपिणःवृषस्यमधुप-
र्केविधिनापूजनमहंकरिष्ये ॥ इतिसंकल्प्यवृषभस्यमधुपर्केणपूजनम् ॥ ॐषडर्घ्याभवंत्याचार्य० ॥ अथ
वत्सतरीदानसंकल्पः ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअ० प्रे-
तस्यप्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्यु० सद्गतिप्रा० परलोकेकुम्भिपाकादिसमस्तनरकपतनभयनिवृ-
त्त्यर्थंरुद्रलोकफलप्राप्त्यर्थंसव्यंइमांगौरीरूपांवत्सतरींसुवर्णशृङ्गाद्युपस्कारैरलंकृतांतीक्ष्णशृङ्गाय-
वेदपादायमधुपर्केणपूजितायरुद्ररूपिणेवृषभायतुभ्यमहंसंप्रददेतेनश्रीरुद्ररूपीभगवानवृषभः प्री-
यताम् ॥ ॐस्वस्तिइत्याचार्यःपठेत् ॥ पुनर्जलमादाय—वत्सतरीदानप्रतिष्ठासिद्ध्यर्थंसुवर्णदक्षि-
णांवृषभायतुभ्यमहंसंप्रददे ॥ ततःपुष्पाञ्जलिंगृहीत्वावृषवत्सतर्योस्त्रिःप्रदक्षिणीकृत्यप्रार्थयेत्—अयन्तेहिमया-
दत्तस्तरुणःपतिरुत्तमः । तुभ्यञ्चेयंमयादत्तापत्नीचसुमनोरमा ॥ अथाशीर्वादः—ॐकोदात्कस्माऽ

अदात्कामोदात्कामायादात् ॥ कामोदाताकामःप्रतिग्रहीताकामैतत्ते ॥ १ ॥ अपसव्यंकृतेनानेनवृषवत्सतर्योःदानेनोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो० वत्सतरीदानविधौयन्न्यूनातिरिक्तंभवतांब्राह्मणानांवचनात्श्रीविष्णोःप्रसादात्सर्वंपरिपूर्णमस्तु ॥ अपसव्यं ॥ कृतेनानेनवृषवत्सतर्योर्दानेनअ०गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्तिःअसद्गति० सद्गतिप्रा० अक्षयातृप्तिःयमयातनाभयकष्टनिवृत्तिः ॥ सव्यं अप्रेतनवृषवत्सतरीणांपुच्छेतर्पणयोग्यतावाप्तिः ॥ ततःआशुःशिशानेतिमन्त्रेणवृषवत्सतर्योःवह्नेःप्रदक्षिणांकारयेत् ॥ अथ तिलमिश्रलाजाहोमः—ॐरुद्रायस्वाहाइदंरुद्रायनमम ॥ ॐविष्णवेस्वाहाइदंविष्णवेनमम ॥ ॐब्रह्मणेस्वाहाइदंब्रह्मणेनमम ॥ ॐसर्वेभ्योदेवेभ्यःस्वाहाइदंस०॥४॥अथतर्पणप्रयोगः ॥ ( ततोयजमानःत्रीन्कुशान्गृहीत्वातिलदुग्धजलैःपुरुषसूक्तेनवृषवत्सतर्योःपुच्छेतर्पणंकुर्यात् ॥ आचम्यप्राणानायम्य ॥अद्यपूर्वो०अपसव्यंअ०गोत्रस्यअ०प्रेतस्यप्रे- ॥९९॥

---

१ ततस्तिलदुग्धजलैस्तर्पणंकारयेत्सुधीः ॥ वृषस्य वत्सतर्याश्चपुच्छेपुरुषसूक्ततः ॥ मनोमेतर्पयतेतिमन्त्रेणचततःपरं ॥ प्राचीनोपवीतिभूत्वाचतुर्दशयमांस्तथा ॥ प्रेतंचतर्पयेत्तत्रपिपासादिनिवृत्तये ॥ ततोविसर्जयेद्देनंवृषंवत्सतरीयुतं ॥ एतंयुवानंमन्त्रेणपर्यटस्वयथेप्सितं ॥ ततःप्रणीताविमोकान्तंकृत्वाब्रह्मविसर्जनं ॥ न्यूनातिरिक्तपूर्णार्थंविप्रभोजनमिष्यते ॥ वृषोत्सर्गकर्मजंचपुण्यंप्रेतायदापयेत् ॥

तत्त्वनिवृत्त्यर्थंअसद्गतिं० सद्गतिप्रा० पिपासादोषशान्त्यर्थंसव्यंवृषवत्सतर्योः पुच्छेतर्पणमहं करिष्ये ॥ ॐसहस्त्रशीर्षा०षाण ॥२२॥ मन्त्रान्तेअपसव्यंकृत्वाअ०गोत्रंअ०प्रेतंवृषवत्सतरीपुच्छेतर्पयामि ॥ (अनयारीत्याद्वाविंशतिर्मन्त्रान्पठित्वातर्पयेत्) सव्यं ॐमनोमेतर्प्पयतवाचम्मेतर्प्पयतप्राणम्मेतर्प्पयतचक्षुर्म्मेतर्प्पयतश्रोत्रम्मेतर्प्पयतात्मानम्मेतर्प्पयतप्रजाम्मेतर्पयतपशून्मेतर्प्पयतगणान्मेतर्पयतगणामेमावितृषन् ॥१॥ अपसव्यंअ० गोत्रंअ०प्रेतंवृषवत्सतरीपुच्छेतर्पयामि ॥ ततोयमतर्पणम्—ॐयमायनमः ॥ ॐधर्मराजाय०॥मृत्यवे० ॥अन्तकाय०॥ वैवस्वताय०॥ कालाय०॥सर्वभूतक्षयाच०॥औदुम्बराय०॥ दध्नाय० ॥ नीलाय०॥ परमेष्ठिने०॥वृकोदराय०चित्राय०॥ चित्रगुप्ताय०॥१४॥ इतिचतुर्दशयमानांपूर्ववत्तर्पणम् ॥ ततःप्रेतंतर्पयेत्—अ०गोत्रस्यअ०प्रेतस्यपिपासादोषशान्त्यर्थंसद्गतिप्राप्त्यर्थंवृषवत्सतर्योःपुच्छेतिलोदकमिदन्ते ॥ अनादिनिधनोदेवःशङ्खचक्रगदाधरः ॥ अक्षय्यःपुण्डरीकाक्षःप्रेतमोक्षप्रदोभवेत् ॥ १ ॥ अतसीपुष्पसंकाशंपीतवाससमच्युतम् ॥ येनमस्यन्तिगोविन्दंनतेषांविद्यतेभयम् ॥२॥ कृष्णकृष्णकृपालोत्वमगतीनांगतिर्भव॥ संसारार्णवमग्नानांप्रसीदपुरुषोत्तम ॥३॥ नारायणसुरश्रेष्ठलक्ष्मीकान्तवरप्रद ॥ अनेनतर्पणेनाथप्रेतमोक्षप्रदोभव

॥ ४ ॥ हिरण्यगर्भपुरुषव्यक्ताव्यक्तस्वरूपधृक् ॥ अस्यप्रेतस्यमोक्षार्थंसुप्रीतोभवसर्वदा ॥ ५ ॥ अ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्त्यर्थंउत्तमलोकप्राप्त्यर्थंवृषवत्सतरीपुच्छेतर्पणमिदन्ते ॥ सव्यं॥अद्यपूर्वो०वृषवत्सतर्योः पुच्छेतर्पणविधौयन्न्यूनातिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनाच्छ्री विष्णोस्तीर्थप्रसादात्सर्वंपरिपूर्णमस्तु अथउत्सर्गः ॥ उदङ्मुखउपविश्य ॥ अद्यपूर्वो० अपसव्यंअ० गो० अ० प्रे० प्रेतत्वनिवृत्त्यर्थंअसद्गति० सद्गतिप्रा० परलोकेनानासौख्यफलप्राप्त्यर्थं इमंवृषंरुद्रदैवतंयथाशक्त्यालङ्कृतंगन्धपुष्पाद्यर्चितंत्रिशूलचक्राङ्कितंवत्सतरीयुतंप्रेतत्वमुक्तिपूर्व-काक्षय्यस्वर्गलोकप्राप्तिकामःअहमुत्सृजामि ॥ सव्येनपाणिनावृषपुच्छंगृहीत्वा ॥ दक्षिणेनपाणिनासहिरण्याःसतिलाःसकुशाःअपआदाय एतंयुवानमितिपठेत्–ॐएतंयुवानंपतिंवोददामितेनक्रीडन्तिश्चरथप्रियेण ॥ मानःसाप्तजनुषाऽसुभगारायस्पोषेणसमिषामदेम ॥ इत्युच्चार्यसहिरण्यंसतिलमुदकंभूमौनिक्षिपेत् ॥ ततई-शानदिशिपञ्चपदानिवृषंचालयेत् ॥ सव्यं ॥ ततोवृषभस्यदक्षिणकर्णेजपः–ॐइडेरन्तेहव्येकाम्येचन्द्रेज्योतेदि-तिसरस्वतिमहिविश्रुति ॥ एताते‌ऽअघ्न्येनामानिदेवेभ्योमासुकृतम्ब्रूतात् ॥ १ ॥ तीक्ष्णशृ-ङ्गायविद्महेवेदपादायधीमहि ॥ तन्नोवृषभःप्रचोदयात् ॥ १ ॥ ततोवत्सतरीदक्षिणकर्णेजपः–तीक्ष्णशृ

ङ्गयैविद्महेवेदपादायैधीमहि ॥ तन्नोगौरीप्रचोदयात् ॥ १ ॥ हेवत्सतरिअमुक०गोत्रस्य अ०प्रे०
यममार्गेसुकृतंब्रूहि ॥ अथवृषभप्रार्थना–नन्दिनीकुलसम्भूतोवृषस्त्वंरुद्रवाहनम् ॥ गवांकोटिसहस्रा-
णांतासांत्वंवृषभस्तथा ॥ १ ॥ ततोवत्सतरीप्रार्थना–यालक्ष्मीःसर्वभूतानांयाचदेवीव्यवस्थिता ॥
धेनुरूपेणसादेवीतस्यपापंव्यपोहतु ॥ १ ॥ ततोमयोभूरभीत्यादिवक्ष्यमाणानुवाकमन्त्रैःवृषममभिमन्त्रयेत्–
ॐमयोभूरभिमांवाहिस्वाहामारुतोसिमरुतांगणः शम्भूर्मयोभूरभिमांवाहिस्वाहावस्यूरसिदुवं-
स्वांच्छम्भूर्मयोभूरभिमांवाहिस्वाहा ॥ १ ॥ यास्तेऽअग्नेसूर्य्येरुचोदिवमातन्वन्तिरश्मिभिः ॥
ताभिर्न्नोऽअद्यसर्वाभीरुचेजनायनस्कृधि ॥ २ ॥ यावोदेवाःसूर्य्येरुचोगोष्वश्वेषुयारुचः ॥
इन्द्राग्नीताभिःसर्वाभीरुचन्नोधत्तबृहस्पते ॥ ३ ॥ रुचन्नोधेहिब्राह्मणेषुरुचꣳराजसुनस्कृधि ॥
रुचंविश्यैषुशूद्रेषुमयिधेहिरुचारुचम् ॥ ४ ॥ तत्वायामित्र० ॥ ५ ॥ स्वर्णघर्म्मःस्वाहास्व
र्णार्कःस्वाहास्वर्णशुक्रःस्वाहास्वर्णज्योतिःस्वाहास्वर्णसूर्य्यःस्वाहा ॥६॥ अथविसर्जनमन्त्रः–मुक्त
स्त्वंभोमयावत्सगच्छत्वंयत्ररोचते ॥ चरवनसहस्रेषुकुरुक्रीडांचगोकुले ॥१॥ ततोनमस्कारमन्त्राः–धर्म

१। यद्यपिमयोभूरभीत्यनुवाकेनवृषाभिमन्त्रणंमूलेनोक्तम् ॥ तथापिसूत्रोक्तत्वाद्गृहीतमिति ॥

स्त्वंवृषरूपेणब्रह्मणानिर्मितः पुरा ॥ तवोत्सर्गप्रभावेणप्रेतोद्धारोभवार्णवात् ॥ १ ॥ नमोवृषभ
देवेशभूतर्षिपितृपोषक ॥ त्वयिमुक्तेऽक्षयान्लोकान्प्रेतासन्तुनिरामयाः ॥ २ ॥ धारणाद्धर्ममि
त्याहुर्धर्मेणविधृताःप्रजाः ॥ चरत्वंधर्मरूपेणवृषवत्सतरीयुतः ॥ ३ ॥ ततस्तृणंभक्षयजलंपिब ॥ यथेष्टं
पर्यटेतिवदेत् ॥ इशानींप्राचींवाप्रेरयेत् ॥ हस्तेजलंगृहीत्वा—अपसव्यंअ० गोत्रस्यअ०प्रेतस्यवृषोत्सर्गोपा-
र्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ सर्वंपरिपूर्णमस्तु ॥ इत्युत्सर्गः ॥ ततोहोम
सङ्कल्पः—इहरत्यादिप्राजापत्यान्तंयद्यतद्रव्यंयावद्यावत्संख्याकंयेनयेनमन्त्रेणहुतंयस्यैयस्यैदेवता-
यैसासादेवताप्रीयताम् ॥ तेदेवाःशान्तिदाःपुष्टिदाःतुष्टिदाःकल्याणदावरदाभवेयुः ॥ संस्रव
प्राशनम् ॥ पवित्राभ्यांमार्जनम् ॥ पवित्रस्यअग्नौप्रतिपत्तिः ॥ बर्हिर्होमः ॥ प्रणीताविं-
मोकः ॥ ब्रह्मणेपूर्णपात्रदानम्—कृतस्यवृषोत्सर्गकर्मणःसाङ्गतासिद्ध्यर्थंपूर्णपात्रंब्रह्मन्तुभ्यमहं-
सम्प्रददे ॥ आचार्यायदक्षिणां० ॥ भोजनसङ्कल्पः—अद्यपूर्वो०वृषोत्सर्गसाङ्गतासिद्ध्यर्थंयथा-

---

१, अत्रपूर्णाहुतिहोमोबर्हिर्होमश्चकृताकृतः कात्यायनसूत्रादावनुक्तत्वात् ॥, केषुचिन्मैथिलग्रंथेषूक्तंकिन्तुतदतीवमन्दंयथाचप्रयोगरत्ने विवाहादिक्रियायांचशालायांवास्तुपूजने ॥ नित्यहोमेवृषोत्सर्गेपूर्णाहुतिंनकारयेत् ॥

संख्याकान्ब्राह्मणान्भोजयिष्येतेनश्रीकर्माङ्गदेवताःप्रीयन्ताम् ॥ तेभ्योदक्षिणांदद्यात् ॥ अग्नि विसर्जनम्—ॐयज्ञंयज्ञंगच्छ० ॥१॥ गच्छगच्छसुरश्रेष्ठ० ॥ १ ॥ अपसव्यंअ०गोत्रस्यअ०प्रे०वृषोत्सर्गोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो०भवतांब्राह्मणानांवचनात् श्रीविष्णोःप्रसादाच्चवृषोत्सर्गविधेःपरिपूर्णतास्तु ॥ अपसव्यं ॥ कृतेनानेनवृषोत्सर्गकर्मणा अ०गोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्तिःअसद्गति०सद्गतिप्रा० अक्षयातृप्तिःयमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥ अग्रेतनमहैकोदिष्टश्राद्धयोग्यताप्राप्तिः ॥ इतिवृषोत्सर्गविधिः ॥ ॥

अथैकादशाहेमहैकोद्दिष्टश्राद्धप्रारंभः ॥ स्नानं ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो०अपसव्यं-

---

१, ओंशिवोद्विगुणादर्भाः प्रणवःस्वस्तिवाचनं ॥ विश्वेदेवास्तथानीवीचावाहनमथोल्मुकम् ॥ विकिरोथस्वधाप्रश्नःपितृशब्दोथशर्मच॥ अग्नौकरणमुच्छिष्टं ( शेषमन्नं ) प्रदक्षिणाविसर्जनम् ॥ ओंसीमान्तस्यव्रजनंप्रेतश्राद्धेसदैवहि ॥ इत्यष्टादशकर्माणिनिषिद्धानिमनीषिभिः ॥ ततोवृषपदेश्राद्धमाद्यंचैकादशेऽहनि ॥ एकोदिष्टविधानेनकर्तव्यंचार्य्यपंडितः ॥ ऋजुदर्भैस्तुप्रेतायमूलभागेनकल्पयेत् ॥ यत्किञ्चिदपसव्येनकर्तव्यंकर्मतत्रवै ॥ नियमेनप्रकर्तव्यमाद्यमेकादशेहनि ॥ कुर्याच्चदानवश्राद्धंयुगपत्पिण्डवर्जितं ॥ दक्षिणाभिमुखोभूत्वाश्राद्धमाद्यंचकारयेत् ॥ उत्तराभिमुखंविप्रमुपवेश्यविधानतः ॥ अन्नंचाशाकरसाढ्यंमधुदुग्धसमन्वितम् ॥ राजतेकांस्यपात्रेवापरिविष्यप्रकल्पयेत् ॥ प्रेतश्राद्धेषुभुंजाना-×

अ० गोत्रस्य अ० प्रेतस्य प्रेतत्वनिवृत्त्यर्थं असद्गति० सद्गतिप्रा० महैकोद्दिष्टश्राद्धप्रारंभाङ्गनिमित्तं सव्यं विष्णोः पञ्चोपचारैः पूजनमहं करिष्ये ॥ विष्णुं सम्पूज्य ॥ श्रीविष्णुपूजनविधेः सर्वं परिपूर्णमस्तु ॥ आचम्य ॥ दक्षिणाभिमुख उपविश्य ॥ आत्मसन्मुखः एकः कुशचटः स्थापनीयः ॥ अपसव्यं अ० गोत्र अ० प्रेत महैकोद्दिष्टश्राद्धनिमित्तं पाद्यन्ते ॥ पादावनेजनं पादप्रक्षालनं एष तेऽर्घः ॥ इदमत्र चन्दनं पुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादप्रक्षालनं ॥ सव्यं ॥ आचम्य ॥ दिग्बन्धः—ऐन्द्र्यां नारायणो० ॥ ३ ॥ अपवित्र० ॥ १ ॥ श्राद्धभूमौ० ॥ अथ यद्देवेति मन्त्रेण तिलोदककरणम्—ॐ यद्देवा० ॥ १ ॥ यदि दिवा० ॥ ॥२॥ यदि जाग्र० ॥३॥ इति मन्त्रैस्तिलोदकं विधाय पाकप्रोक्षणं कुर्यात् ॥ अपसव्यं ॥ उदक्यादिक्षुद्रदृष्टिनि-

---

*दीनार्तीद्रविणेप्सवः ॥ तेभ्यो भोजनपात्राणि पाकभाण्डानि चार्पयेत् ॥ सुवर्णराजतान्येव ताम्राण्येव विशेषतः ॥ देयानि पाकभाण्डानि मृन्मयानि च दापयेत् ॥ देहोत्पादनिकं श्राद्धं सपिण्ड्यां प्रेतसंभवम् ॥ मासिकान्नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत् ॥ तत्र पिण्डं प्रकुर्वीत कृसरान्नेन चोक्तं ॥ तिलोदकदुग्धमधुघृतमिश्रेण तत्र वै ॥ पिण्डं कपित्थमात्रं हि प्रेतश्राद्धेषु कारयेत् ॥ पार्वणे बिल्वमात्रं हि वृध्यां वामलकैः समम् ॥ महालये गयाश्राद्धे प्रेतश्राद्धे दशाहिके ॥ पिण्डशब्दः प्रयोक्तव्य अन्नमन्यत्र कीर्तयेत् ॥ कुंभैकं जलपूर्णं हि हविश्यमापपूरकम् ॥ गोधूमान्नयुतं तत्र कल्पयेद्वस्त्रसंयुतम् ॥ शय्यादानं विशेषेण पददानानि दापयेत् ॥ उपानद्वस्त्रदानानि निरूप्यं चैवात्र कल्पयेत् ॥ पिं० विसर्जनं कृत्वा स्नानं कृत्वा ततः परम् ॥ त्याज्यं परिधानवस्त्रं परिधायान्यवाससी ॥ गृहं गत्वा द्विजान्सर्वान्भोजयेद्विविधाशनैः ॥ तच्छिष्टं हि स्वयं भुक्त्वा यथाशुचिश्च संविशेत् ॥ २ प्रेतकर्मणि सपिण्डीकरणात्प्राक् नीवीबन्धविसर्गो न भवतः ॥ "नीवी" पितृणामिति श्रुतेः । प्रेतस्यापितृत्वात् ॥

पतनादिदोषतोदूषितानांपाकादीनांपवित्रतास्तु ॥ सव्यं ॥ देशकालपाकपात्रद्रव्यश्रद्धासम्पद-
स्तु ॥ सर्वोपहाराःशुचयोभवन्तु ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रस्यअ०प्रे०प्रेतत्वनिवृत्त्यर्थंअसद्ग-
ति०सद्गतिप्रा० महैकोद्दिष्टश्राद्धमहंकरिष्ये ॥ महैकोद्दिष्टश्राद्धनिमित्तंअ०गोत्रअ०प्रेतआसनमि-
दन्ते ॥ ततोमण्डलादिकंविधायार्घपात्रपूरणम् ॥ पात्रंनिधाय ॥ पवित्रेस्थो० ॥१॥ इत्यनेनमन्त्रेणपवित्रप्रक्षेपः ॥
शन्नोदेवीत्युदकपूरणम्–ॐशन्नोदेवी० ॥ २ ॥ तिलप्रक्षेपः–तिलोसि०स्वाहा ॥१॥ तूष्णींगन्धपुष्पैःप्रच्छाद्य ॥
प्रेतपात्रंसंपन्नंसुसंपन्नं ॥ अर्घपात्रस्यार्चनविधेःसर्वं० ॥ अ० गोत्रअ० प्रेतपवित्रन्ते ॥
पूजनन्ते ॥ अर्घंगृहीत्वा–ॐयादिव्याऽआपःपयसासंबभूवुर्याऽअन्तरिक्षाउतपार्थिवीर्याः ॥
हिरण्यवर्णायाज्ञियास्तानऽआपःशिवासꣳस्योनाःसुहवाभवन्तु ॥ १ ॥ अ०गोत्रअ०प्रेत-
महैकोद्दिष्टश्राद्धनिमित्तंएषतेऽर्घः ॥ पात्रमुत्तानमेवस्थापनीयं न तस्यन्युब्जीकरणम् ॥ चटपूजनम् ॥
यथादत्तंगन्धाद्यर्चनंसोमसूर्यवायुदैवतंअ०गोत्रायअ०प्रे०इदन्ते ॥ अस्यमहैकोद्दिष्टश्राद्धस्या-
१८ र्चनविधेःसर्वंपरिपूर्णमस्तु ॥ इदमर्चितंवोज्योतिःसूर्योज्योतिःशेषोपचाराःसम्पूर्णाविधिवन्तो-
भवन्तु ॥ आचम्य ॥ पात्रान्नपरिवेषणादिकंविधाय ॥ अपसव्यंयथादास्यमानंतृप्तिपर्यन्तंब्राह्मण

भोजनंप्रजापतिर्दैवतंअ०गोत्रायअ०प्रे०क्षुधातृषानिवारणार्थमिदन्ते ॥ मुखवासताम्बूलंसहि-
रण्यमिदन्ते ॥ अ०प्रे०महैकोद्दिष्टश्राद्धनिमित्तमवनेजनमिदन्ते ॥ समूलकुशास्तरणम् ॥ पिण्डदानम्—
अ०गोत्रअ०प्रेतमहैकोद्दिष्टश्राद्धनिमित्तंपिण्डस्ते ॥ पिण्डेप्रत्यवनेजनम् ॥ सूत्रवस्त्राच्छादनम् ॥ हस्तप्रक्षा-
लनम् ॥ सव्यं ॥ आचम्य ॥ अद्यपूर्वो०अपसव्यंअ०गोत्र० अ०प्रे०महैकोद्दिष्टश्राद्धनिमित्तंपिण्ड
पूजनमहंकरिष्ये ॥ पिण्डेचन्दनमिदन्तेतिलाक्षतपुष्पंधूपंदीपंनैवेद्यंशेषान्नंफलंताम्बूलंहिरण्य-
मिदन्ते ॥ पिण्डपूजनविधेःसर्वंपरिपूर्णमस्तु ॥ सव्यं ॥ सुप्रोक्षितादिकंकुर्यात् ॥ तद्यथा—
एकस्मिन्पत्रपुटेसुप्रोक्षितादिकरणम् ॥ सुप्रोक्षितोयंप्रदेशोऽस्तु ॥ शिवादर्भाआपःसन्तु ॥ सौमनस्य-
मस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ अपसव्यं ॥ सुप्रोक्षितजलस्यपिण्डोपरिसिञ्चनम् ॥ कृतेना-
नेनसुप्रोक्षितजलसिञ्चनेनअ०गोत्रस्यअ०प्रे०सद्गतिः ॥ उत्तमलोकप्राप्तिः ॥ सव्यं ॥ कुशचटस्यो-
परिअक्षय्योदकदानम्—अ० गोत्रस्यअ०प्रेतस्ययद्दत्तंअन्नादिकंतदक्षय्यमस्तु ॥ तूष्णींपिण्डोपरिपवित्रंनियो-
जयेत् ॥ अपसव्यं पिण्डोपरिदुग्धमिश्रिततिलोदकेनजलधारांकुर्यात् ॥ अनादिनिधनोदेवेत्यादिपौराणिकमन्त्रान्पठेत् ॥
अ०गोत्रस्यअ०प्रे०महैकोद्दिष्टश्राद्धोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ अस्यमहै-

कोद्दिष्टश्राद्धस्यप्रतिष्ठासिद्ध्यर्थंयथादास्यमानंदक्षिणादानंअ० गोत्रायअ० प्रेतायमयादीयते इदन्ते ॥ ब्राह्मणभोजनसंकल्पः—अद्यपूर्वो०यथासंख्याकान्ब्राह्मणान्यथासम्पन्नेनाहंतर्पयिष्ये ॥ तत्पुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ कुम्भमेकंजलपूरितंब्राह्मणायदास्येतेनअ०गोत्रस्य अ०प्रे०पिपासादोषनिवृत्तिः ॥ एतन्मदैकोद्दिष्टश्राद्धोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अस्यमदैकोद्दिष्टश्राद्धविधेःसर्वंपरिपूर्णमस्तु ॥ अपसव्यं ॥ कृतेनानेनअ०गोत्रस्य अ०प्रे०प्रेतत्वनिवृत्तिः॥असद्गति०सद्गतिप्रा०अक्षय्यातृप्तिःयमयातनाभयकष्टनिवृत्तिः ॥ सव्यं॥ अद्येतनद्वादशाहकर्मयोग्यतावाप्तिः ॥ अभिरम्यतामितिपिण्डविसर्जनम् ॥ स्नानंकृत्वा ॥ मुखावलोकनम् ॥ गृहेगत्वाद्विजान्सर्वान्भोजयेद्विविधाशनैः ॥ तच्छिष्टंहिस्वयंभुक्त्वायथाशुचिचसंविशेत् ॥ इतिएकादशाहश्राद्धप्रयोगः ॥

॥ अथ षोडशमासिकश्राद्धप्रयोगः ॥ ( उपहारान्गृहीत्वातीर्थंगत्वाभूमीशोधनंविधाय-

---

१/ द्वादशाहेश्राद्धमेकमूनमासनिमित्तकम् ॥ एकोद्दिष्टविधानेनकुर्यान्मासादिपूर्वकम् ॥ यदातुवत्सरेपूर्णेकुर्यात्सपिण्डनंद्विजः ॥ तदाब्दिकपर्यन्तंस्वकालेमासिकानिच ॥ यदार्वाक्द्वादशाहेचसपिण्डीकरणंतदा ॥ ऊनाब्दिकपर्यंतानिश्राद्धानिषोडशैवहि ॥ सपिण्डीकरणादर्वाक्कर्त्तव्यानिमनीषिभिः ॥ एककालैकपाकेनचैकतंत्रेणतान्यपि ॥ तथाचगोभिललौगाक्षी—श्राद्धानिषोडशादत्त्वानैवकुर्यात्सपिण्डनम् *

स्नानविधिना स्नानं कार्यम् ॥ सन्ध्यावन्दनादि माध्याह्निकं विधाय ॥ आचम्य प्राणानायम्य ॥ शिखाबन्ध-
नम् ॥ विष्णुस्मरणम् ॥ अद्यपूर्वो० अपस० व्यं अ० गोत्रस्य अ० प्रेतस्य प्रेतत्वनिवृत्त्यर्थं असद्गति०
सद्गतिप्रा० स० व्यं प्रेतस्यैकादशाहे द्वादशाहे वा मासिकश्राद्धप्रारंभाङ्गनिमित्तं विष्णोः षोडशोपचारैः
पूजनमहं करिष्ये ॥ विष्णुं सम्पूज्य ॥ श्राद्धारम्भः ॥ दक्षिणाभिमुख उपविश्य मण्डलं कृत्वा मण्डलोपरि प्रागग्रेषु कुशेषु उद-

---

*श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम् ॥ तत्रैव जातूकर्ण्यः—द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ॥ त्रैपाक्षिकाब्दिके चेति श्राद्धा-
न्येतानि षोडश ॥ ( आद्यषाण्मासिकाब्दिकशब्दा ऊनमासिकोनषष्ठोनाब्दिकपराः ) ॥ द्वादश प्रतिमास्यानि द्वादशाहं त्रिपाक्षिकं ॥
न्यूनाब्दं न्यूनषण्मासं श्राद्धान्येतानि षोडश ॥ ऊनाब्दमूनषण्मासं त्रिपक्षं चोनमासिकं ॥ चतुर्भिर्मिलिता मासाः श्राद्धान्येतानि षोडश ॥ आद्य-
मेकादशेऽह्नि स्याद्द्वादशे ऊनमासिकम् ॥ मासपूर्णे द्वितीयादि त्रिपक्षं सार्द्धमासके ॥ न्यूनषण्मासिकं श्राद्धं मासे वै पञ्चमे तथा ॥ सार्द्धैकादशे न्यूना-
ब्दं श्राद्धं कुर्यात्प्रयत्नतः ॥ ऊने त्रिदिवसे वापि न्यूनैकदिवसे तथा ॥ न्यूनसंज्ञादि कुर्वीत श्राद्धान्येव विचक्षणः ॥ तथा च मदनरत्ने कालादर्शे च गौ-
तमः—एकद्वित्रिदिनैरूनं त्रिभागेनोन एव वा ॥ श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः ॥ ( अत्र देशकुलशाखाभेदाद्व्यवस्थेति सर्वे-
निबन्धाः ) याज्ञवल्क्यस्तु—मृतेऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ॥ ( वत्सरमभिव्याप्य ) प्रतिसंवत्सरं चैवमाद्यमेकादशेऽहनि ॥ लौगाक्षिरपि—
मासादौ मासिकं कार्यमाब्दिकं वत्सरे गते ॥ आद्यमेकादशे कार्यमधिके त्वधिकं भवेत् ॥ यदा स्यादधिमासस्तु मासिकं तद्विशेषयेत् ॥ आब्दिकं-
हि स्वकाले स्यात्कुर्यान्नात्र विचारणा ॥

त्सुखाःपञ्चदशचटाःस्थाप्याः ॥ अधिकमाससंभवेषोडशचटाः ॥ आचम्यप्राणानायम्य ॥ अपसव्यंअ०गोत्र-
अ०प्रेतऊनमासिकानिमित्तंपाद्यन्ते ॥१॥ अ०गोत्र०अ०प्रे०द्वितीयमासिकनिमित्तंपाद्यन्ते ॥२॥
अ०गो०प्रे०त्रैपाक्षिकनिमित्तंपा० ॥ ३ ॥ अ०गो०प्रे०तृतीयमासिकनि०पा० ॥ ४ ॥ अ०गो०
प्रे०चतुर्थमासिकनि०पा० ॥५॥ अ०गो०प्रे०पञ्चममासिकनि०पा० ॥ ६ ॥ अ०गो०प्रे०ऊनषा-
ण्मासिकनि ॥ ७ ॥ अ०गो०प्रे०षाण्मासिकनि०पा० ॥ ८ ॥ गोत्रप्रे०सप्तममासिकनि०पा०
॥ ९ ॥ अ०गोत्रप्रे०अष्टममासिकनि०पा० ॥ १० ॥ अ०गोत्रप्रेतनवममासिकनि०पा० ॥ ११ ॥
अ०गोत्रअ०प्रेतदशममासिकनि०पा० ॥ १२ ॥ अ०गोत्रप्रेतएकादशमासिकनि०पा० ॥ १३ ॥
अ०गोत्रप्रेतद्वादशमासिकनि०पा० ॥ १४ ॥ अ०गोत्रअ०प्रेतऊनाब्दिकनि०पा० ॥ १५ ॥ अ०
गोत्रअ०प्रेतऊनमासादिऊनाब्दिकनि०पाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽर्घः ॥ इदमत्रचन्द
नंपुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादप्रक्षालनम् ॥ सव्यं ॥ आचम्य ॥ दिग्बन्धः—ऐंद्र्यांनारा-
यणोरक्षे० ॥ ३ ॥ इतिदिग्बन्धः ॥ अपवित्रःपवित्रोवा० ॥ १ ॥ तिलोदककरणम्—ॐत्रद्देवा० ॥ १ ॥

यदिदिवा० ॥ २ ॥ यदिजाग्रद्य० ॥३॥ इतिमन्त्रैस्तिलोदकंविधाय ॥ पाकप्रोक्षणंकुर्यात् ॥ अपसव्यं ॥
उदक्यादिक्षुद्रदृष्टिनिपतितपाकादिदोषाणांपवित्रतास्तु ॥ सव्यं ॥ देशकालपाकपात्रद्रव्यश्रद्धा-
सम्पदस्तु ॥ सर्वोपहाराःशुचयोभवन्तु ॥ अद्यपूर्वो०अपसव्यंअ० गोत्रस्यअ०प्रेतस्यप्रेतत्व-
निवृत्त्यर्थंअसद्गति०सद्गतिप्रा० ऊनमासिकमारभ्यऊनाब्दिकपर्यंतानिपञ्चदशश्राद्धानिसपिण्डी-
करणाधिकारसिद्ध्यर्थंकालापकर्षेणैकोद्दिष्टविधिनाऐकतन्त्रेणाहंकरिष्ये ॥ आसनम्—अ०गोत्रअ०

---

१ एतानिचयदासपिण्डनात्पूर्वंयुगपत्कुर्यात्तदादेशकालकर्त्रैक्येतन्त्रत्वादेकःपाकइतिसम्प्रदायः ॥ पाकभेदइतिभट्टाः ॥ केचित्तुदेश-कालदेवतैक्येतन्त्रत्वात्श्राद्धकालातिक्रमापत्तेः ॥द्वादशाहेऽथसर्वाणिसंक्षेपेणसमाचरेत् ॥तान्येवतुपुनःकुर्यात्प्रेतशब्दंनकारयेत् ॥ इतिकात्याय-नोक्तेः ॥ श्राद्धंकृत्वातुतान्येवपुनःश्राद्धंनकारयेत् ॥ इतिजाबालोक्तेश्चषोडशसंख्यायाश्चवाजपेयेप्राजापत्ययागसप्तदशत्ववत्सान्नाय्ययागद्वित्व-वच्चदर्श—पात—संक्रान्तिश्राद्धवत्युगपदनुष्ठानेऽप्युपपत्तेः ' ऊनमासिकाद्यूनाब्दिकान्तश्राद्धेषुभवान्मयानिमन्त्रितइत्येवंप्रयोगेणएकोविप्रः पिण्डोऽर्घ्यश्चेत्याहुः ॥ तन्न ॥ द्वादशाहेनवाभोज्याएकाहेद्वादशापिवा ॥ इतिहेमाद्रौहारीतवचोविरोधात् ॥ तेनविप्रभेदात्पिण्डार्घ्यादिकं-भिन्नमेवेति ॥ तेनात्रपृथक्प्रयोगएवोत्कृष्टःप्राकृतेष्ट्याग्रयणप्रयोगवत् ॥ सौकर्यार्थंतुतत्प्रयोगसमासःअग्नीषोमीयप्रायश्चित्तपशुप्रयोगसमासवत् ।१०५। इतिबोध्यम् ॥ इमानिचयेषांमतेमहैकोद्दिष्टात्भिन्नंप्रथममासिकंतेषांमतेषोडशदाक्षिणात्यादीनाम् ॥ येषांमतेप्रथममासिकस्यमहैकोद्दिष्टरूपा-द्याद्यश्राद्धात्नपृथक्प्रयोगः, तेषांमतेऊनमासिकादीनिऊनाब्दिकान्तानिपञ्चदशैवश्राद्धानि ॥ आद्यश्राद्धेनमिलित्वातुषोडशभवन्ति ॥ इदमेव च उत्तमंषोडशकमितिगीयते ॥ द्वादशप्रतिमासेषुपाक्षिकंचत्रिपाक्षिकम् ॥ न्यूनषाण्मासिकंपिण्डंदद्यात्न्यूनाब्दिकंतथा ॥ उत्तमषोडशं-=

प्रे०ऊनमासादिऊनाब्दिकपर्यन्तंप्रत्येकंआसनमिदन्ते ॥ ( आवाहनंनास्ति : पात्रार्घपूरणम्—पञ्चदशपवि-

=चैतत्मयातेपरिकीर्तितम् ॥ श्रपयित्वाचरुंतार्क्ष्यकुर्यादेकादशेहनि ॥ इतिगारुडात् ॥ पाक्षिकशब्देनऊनमासिकम् ॥ पक्षेऽतीतेनद्विधा-नात् ॥ मलिनषोडशकंतुस्थानादिषट्पिण्डाः, दशाहिकादशपिण्डाश्च ॥ मध्यमंषोडशकंच—प्रथमंविष्णवेदद्यात्द्वितीयंश्रीशिवायच ॥ इत्यादिनागारुडेकथितम् ॥ षोडशकत्रयानन्तरंचपितृत्वप्राप्तिःतत्रोक्तं ॥ चत्वारिंशत्तथैवाष्टौश्राद्धंप्रेतत्वनाशनम् ॥ यस्यजातंविधानेनसभवेत् पितृपङ्क्तिभाक् ॥ इति । एतानिद्वादशाहादौसपिण्डनात्पूर्वंकृतान्यपिवृद्धिंविनाअपकर्षेपुनःस्वकालेकार्याणि ॥ यस्यसंवत्सरादर्वाक्सपि-ण्डीकरणंकृतम् ॥ मासिकंचोदकुंभंचदेयंतस्याऽपिवत्सरम् ॥ इतिमदनरत्नेअङ्गिरसोक्तेः ॥ यद्यपि—यस्यसंवत्सरादर्वाक्विहितातुसपिण्डता ॥ विधिवत्तानिकुर्वीतपुनःश्राद्धानिषोडश ॥ अर्वाक्संवत्सराद्यस्यसपिण्डीकरणंकृतम् ॥ षोडशानांद्विरावृत्तिंकुर्यादित्याहगौतमः ॥ इत्यादिवच-नानुरोधात्सपिण्डनोत्तरंषोडशानामेकादशाहेसपिण्डने, द्वादशाहेसपिण्डनेपञ्चदशानांत्राआवृत्तिःप्रतीयते, ' अनुमासिकानितुचरेत्तान्येवसा-पिण्ड्यतःपश्चात्द्वादश ' इत्युक्तेरूनानांनपुनःकृतिः ॥ इतिदीपिकोक्तेऊनमासिकादीनिचत्वारिनपुनःकार्याणितथापियोगात्रूढेर्बलीयस्त्वात् केषुचिद्देशेषुक्रियन्तेकेषुचिन्नक्रियन्तेअतोदेशाचारतोव्यवस्थाप्रतिभाति ॥ द्वादश " इत्युक्तिस्तु " एकादशाहसपिण्डनाभिप्रायेण ॥ अत-एव ॥ ततःसपिण्डनादूर्ध्वंअर्वाक्संवत्सरादपि ॥ प्रतिमासंप्रदातव्योजलकुम्भःसपिण्डकः ॥ कृतस्यकरणंनास्तिप्रेतकार्यादृतेखग ॥ प्रेतार्थंतु पुनःकुर्यात् अक्षयतृप्तिहेतवे ॥ इतिगारुडेसपिण्डनोत्तरंप्रतिमासमेवसपिण्डकजलकुम्भदानमुक्तम्, नतुऊनमासिकादौ ॥ आङ्गिरसवचन स्वारस्यंचतत्रैव ॥ तस्मात्सपिण्डनोत्तरंप्रतिमासमेवमासिकश्राद्धसमाचारोदृश्यते ॥ वृद्धिप्राप्तौतुपुनरपिमासिकापकर्षःकर्तव्यःकार्ष्णाजिनि-वचनात् ॥ वृद्ध्यनन्तरंकात्यायनेनतन्निषेधाच्चेतिबोध्यम् ॥

 



त्राणि—ॐपवित्रेस्थो० ॥ १ ॥ उदकपूरणम्—ॐशन्नोदेवी० ॥ २ ॥ तिलप्रक्षेपः—तिलोसि०स्वाहा ॥ तूष्णींगन्धपुष्पैःप्रच्छाद्य ॥ अर्घ्यंगृहीत्वा—ॐयादिव्याआपःपयसासम्बभूवुर्याऽअन्तरिक्षाऽउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानऽआपःशिवासꣳस्योनाःसुहवाभवन्तु ॥ १ ॥ अ०गोत्रअ०प्रेत ऊनमासादिऊनाब्दिकपर्यंतंप्रत्येकंपवित्रन्तेअर्घस्ते ॥ अ०गोत्रअ०प्रे०ऊनमासादिऊनाब्दिकपर्यन्तंप्रत्येकंअर्चनम् ॥ अस्यार्चनाविधेःसर्वंपरिपूर्णमस्तु ॥ सव्यं ॥ इदमर्चितंवोज्योतिःसूर्योज्योतिःशेषोपचाराःसम्पूर्णाविधिवन्तोभवन्तु ॥ आचम्य ॥ अपसव्यं ॥ यथादास्यमानंपञ्चदश ब्राह्मणानांभोजनंप्रेतदैवतंअ०गोत्रायअ०प्रेतायमयादीयतेइदन्ते ॥ नैवेद्यमात्रभोजनम् ॥ सुखवासताम्बूलंसहिरण्यमिदन्ते ॥ अवनेजनम्—अ०गोत्रअ०प्रेतऊनमासादिऊनाब्दिकपर्यन्तंप्रत्येकं अवनेजनमिदन्ते ॥ कुशास्तरणम्—पिण्डदानम्—अ०गोत्रअ०प्रेतऊनमासिकनिमित्तंपिण्डस्ते ॥ १ ॥

अ०गो०अ०प्रे०द्वितीयमासिकनि०पि० ॥ २ ॥ अ०गो०अ०प्रे०त्रिपाक्षिकमासिकनि०पि० ॥३॥ 

अ०गो०अ०प्रे०तृतीयमासिकनि०पि० ॥ ४ ॥ अ०गो०अ०प्रे०चतुर्थमासिकनि०पि० ॥ ५ ॥

अ०गो०अ०प्रे०पञ्चममासिकनि०पि० ॥ ६ ॥ अ०गो०अ०प्रे०ऊनषाण्मासिकनि०पि० ॥ ७ ॥

अ० गो० अ० प्रे० षाण्मासिकानि० पि० ॥ ८ ॥ अ० गो० अ० प्रे० सप्तममासिकानि० पि० ॥९॥ अ० गो० अ० प्रे० अष्टममासिकानि० पि० ॥१०॥ अ० गो० अ० प्रे० नवममासिकानि० पि० ॥११॥ अ० गो० अ० प्रे० दशममासिकानि० पि० ॥ १२ ॥ अ० गो० अ० प्रे० एकादशमासिकानि० पि० ॥ १३ ॥ अ० गो० अ० प्रे० द्वादशमासिकानि० पि० ॥ १४ ॥ अ० गो० अ० प्रे० ऊनाब्दिकानि० पिण्डस्ते॥१५॥ पिण्डेप्रत्यवनेजनम् ॥ सूत्रवस्त्राच्छादनम् ॥ हस्तप्रक्षालनम् ॥ पिण्डपूजनम् ॥ सव्यं ॥ आचम्य ॥ अद्यपूर्वो० अपसव्यंअ० गो० अ० प्रे० असद्गति० सद्गतिप्रा० पञ्चदशश्राद्धनिमित्तंपिण्डपूजनमहंकरिष्ये ॥ ऊनमासादिऊनाब्दिकपर्यन्तंपिण्डेगन्धंतिलाक्षतयुतपुष्पंतुलसीपत्रंधूपंदीपमिदन्ते ॥ नैवेद्यम्—शेषान्नंअ० गोत्रायअ० प्रेतायक्षुधातृषादोषनिवृत्त्यर्थंऊनमासादिऊनाब्दिकपर्यन्तंपिण्डे-नैवेद्यमिदन्ते ॥ फलताम्बूलंसहिरण्यमिदन्ते ॥ अस्यपिण्डपूजनाविधेःसर्वंपरिपूर्णमस्तु ॥ सव्यं ॥ एकस्मिन्पत्रपुटेसुप्रोक्षितादिकंकृत्वा ॥ तद्यथा—शिवाआपःसन्तु ॥ सौमनस्यमस्तु ॥ अक्षतंचारिष्टंचास्तु ॥ अपसव्यं ॥ सुप्रोक्षितजलस्यपिण्डोपरिसिञ्चनम् ॥ अ० गोत्रस्य० अ० प्रे० असद्गति० सद्गतिप्रा० उत्तमलोकप्राप्तिः ॥ सव्यं ॥ अक्षय्योदकदानम्—अ० गोत्रस्यअ० प्रे० यद्दत्तमन्नादिकंतदक्षय्यमस्तु ॥

कुशोदकंगृहीत्वा—अपसव्यंअ०गोत्रस्यअ०प्रे०कृतानिइमानिपञ्चदशश्राद्धानिउपतिष्ठतु ॥ तूष्णीं पिण्डोपरिपवित्रंनियोजयेत् ॥ एतत्पञ्चदशश्राद्धप्रतिष्ठासिद्ध्यर्थंमुखवासताम्बूलदक्षिणाअ०गोत्राय-



अ०प्रे०मयादीयतेइयंते ॥ अथकुंभदानेसंकल्पः—अ०गोत्रस्यअ०प्रे०पिपासादोषनिवृत्त्यर्थंऊनमासा-दिऊनाब्दिकपर्यन्तंपञ्चदशपिण्डेषुप्रत्येकंएकंएकंकुम्भंपरिकल्पयामि ॥ तथाद्वादशकुंभान्परि-कल्पयामि ॥ त्रैपाक्षिकेसप्तकुम्भान्परिकल्पयामि ॥ ऊनषाण्मासिकपिण्डेद्वादशकु० ॥ ऊन-मासादिचतुर्षुऊनश्राद्धेषुब्राह्मणभोजनेविशेषःकार्यः॥ अथदानेकाण्डः ॥ ऊनमासादिकपिण्डेनित्यान्नादीनां

---

१ संवत्सरपर्यन्तंप्रत्यहमपिसान्नोदकुम्भदानंप्रेतस्यप्रेतत्वनिवृत्तिमुद्दिश्यदीपदानंचसंवत्सरावधि । २ आद्यादिषुषोडशेषुश्राद्धेषुचैवक-ल्पयेत् ॥ कुंभान्षोडशसंख्याकान्प्रत्येकमेकसंख्यया ॥ सोमालिकादिगाषान्नैर्हविष्यान्नैश्चपूरितान् ॥ चन्दनैरार्चितान्वस्त्रैःसंवीतान्सफलान्द-देत् ॥ ऊनमासेसप्तसंख्यान्माषान्नैर्वटकैर्युतान् ॥ हविष्यान्नपूरितान्दद्याद्वस्त्रचन्दनचर्चितान् ॥ एतावत्संख्ययापत्रिनत्रिपक्षेवटकैर्युतान् ॥ कुम्भान्प्रदद्याद्वस्त्रैस्तुवेष्टितांश्चन्दनार्चितान् ॥ ऊनषाण्मासिकेश्राद्धेकरकान्द्वादशैवहि ॥ फलमोदकपूर्णांस्तुसवस्त्रान्परिकल्पयेत् ॥ कुम्भान्द्वा-दशसंख्याकान्न्यूनाब्देपरिकल्पयेत् ॥ माषान्नवटकैःपूर्णान्वस्त्रचन्दनचर्चितान् ॥ तत्रैवविप्रभोज्यानिदानानिचविशेषयेत् ॥ आब्दिकेप्रथमे कुर्यात्संपत्यानीलमोक्षणम् ॥ एकादशेद्वादशेचप्रेतोभुंक्तेदिनद्वयम् ॥ तस्माद्द्वादशाहपिण्डेयत्किञ्चित्परिकल्पयेत् ॥ यमयातनानिवृत्त्यर्थंपरलो-कसुखाप्तये ॥ क्षुधातृषानिवृत्त्यर्थंसंपत्यातत्समर्पयेत् ॥ त्रयोदशाहादारभ्यदद्यात्संवत्सरंयदि ॥ नित्यान्नंनित्यकुम्भंचनव्यंफलंनवोदकम् ॥÷

सङ्कल्पः—अद्यदिनंपूर्णसंवत्सरंयावन्मार्गेगच्छतःअ० गोत्रस्यअ०प्रेतस्यक्षुधातृषानिराकरणार्थंनित्यान्नंनित्यकुम्भंमयादीयते ॥ अनेननित्यान्ननित्यकुम्भदानेनअ०गोत्रस्यअ०प्रे० क्षुधातृषादोषनिवृत्तिः ॥ अद्यदिनंपूर्णसंवत्सरंयावन्मार्गेगच्छतःअ० गोत्रस्यअ०प्रे० नूतनफलंनूतनधान्यं-

---

÷नवान्नंजलदानंचप्रत्यहंदीपदानकम् ॥ अब्दावाब्यानिपर्वाणिविशिष्टानिप्रकल्पयेत् ॥ आषाढासितदर्शेचकुम्भान्नवोदकैर्युतान् ॥ गोधूमापूपकैर्युक्तान्यथासंख्यान्प्रदापयेत् ॥ दूर्वाष्टम्यांचदेयानिपङ्गुदोषनिवृत्तये ॥ वंशपात्राणिशुभ्राणिविरूढसप्तधान्यकैः ॥ पूरितानिसवस्त्राणिफलखर्जूरमोदकैः ॥ चन्दनोपवीतानिचदद्याद्रव्ययुतानिच ॥ आश्विनासितदर्शेचअन्धदोषनिवृत्तये ॥ कुम्भान्सदीपकान्दद्यान्मोदकापूपपूरितान् ॥ दद्यान्मकरसंक्रान्तौअपूपवटकैःसह ॥ हविष्यान्नयुतान्येवभाण्डानिक्षुन्निवृत्तये ॥ तथाक्षयतृतीयायांक्षुधातृषानिवृत्तये ॥ रक्तमृन्मयभाण्डानिहविष्यान्नैश्चमण्डकैः ॥ माषान्नापूपकैःसार्द्धंयथासंख्यंप्रकल्पयेत् ॥ यथाशक्त्यायथासंख्यंदद्यात्पात्राणिपर्वसु ॥ कुम्भादिषुचपात्रेषुपक्वपक्वैवसंख्यया ॥ सोमालिकादीन्यन्नानितत्रैवोक्तानिपूरयेत् ॥ स्वेस्वेकालेनवान्नानिफलानिचैवदापयेत् ॥ दद्याच्चऋषिपञ्चम्यांनीवारश्यामकादिकम् ॥ नवम्यांकार्तिकेशुक्लेनव्यव्रीहिभवानपि ॥ तण्डुलान्पृथुकांश्चैवब्राह्मणेभ्योनिवेदयेत् ॥ मार्गशीर्षेष्टकायांयावनालसमुद्भवाम् ॥ प्रसुकंप्रचुरंदद्याद्गुडाज्यसहितंद्विजे ॥ पौषेष्टकायांसगुडंगोधूमप्रसुकंददेत् ॥ माघेष्टकायांसगुडांस्तिलान्दद्यान्नवानपि ॥ फाल्गुनान्तेमावास्यायांनव्ययवसमुद्भवम् ॥ सक्तुदानंद्विजेभ्यस्तुदेयंसाज्यंसशर्करम् ॥ तथाऋतुभवान्येवफलानिविविधानिच ॥ विप्रेभ्यश्चप्रदेयानिप्रेतस्यचसुतृप्तये ॥ बृहत्फलंचिर्भटिकाकर्कफलंचकर्कटी ॥ तथैवोर्वारुकर्कन्धूपनसादीनियानिच ॥ भोज्यानिद्विजमुख्येभ्योदद्याच्छ्रेयोर्थमात्मनः ॥ रौप्यंचदक्षिणांदद्यात्ततःपिण्डान्विसर्जयेत् ॥

 



नूतनजलंनानादैवतंमयादीयतइदन्ते ॥ अनेननूतनफलनूतनधान्यनूतनजलदानेनअ० गो०
अ० प्रे० सर्वसौख्यफलप्राप्तिः ॥ अद्यादिनंपूर्णसंवत्सरंयावन्मार्गेगच्छतःअ० गो० अ० प्रे०
तमोदोषनिराकरणार्थंप्रत्यहंसांवत्सरंदीपदानंमयादीयतेइदन्ते ॥ अनेनदीपदानेनअ० गो०
अ०प्रे०तमोदोषनिवृत्तिः ॥ अद्यदीनंपूर्णसंवत्सरंयावन्मार्गेगच्छतःअ० गो० अ० प्रे०तृषादो
षनिराकरणार्थंप्रत्यहंसंवत्सरंजलदानंमयादीयतेइदन्ते ॥ अनेनप्रत्यहंजलदानेनअ० गो०
अ०प्रे०तृषादोषनिवृत्तिः ॥ आषाढासितामावास्यायांनवोदकैःपूर्णान्गोधूमापूपकैःयुक्तान्प-
ञ्चकुम्भान्पञ्चब्राह्मणेभ्योविभज्यदास्येतत्पुण्यंअ० गोत्रायअ० प्रेतायउपतिष्ठतु ॥ अनेनकु-
म्भदानेनअ०गोत्रस्यअ०प्रे०क्षुधातृषादोषनिवृत्तिः ॥ दूर्वाष्टम्यांपङ्गुदोषनिवृत्त्यर्थंपञ्चवंशपात्रा-
णिविरूढसप्तधान्यवस्त्रकांस्यपात्रच्छुरिकानालिकेरखर्जूरमोदकचन्दनोपवीतहिरण्यादिभिः पू-
रितानिसङ्कल्पितानिब्राह्मणेभ्योविभज्यदास्येतत्पुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ अनेन-
पञ्चवंशपात्रदानेनअ० गोत्रस्यअ०प्रे० पङ्गुदोषनिवृत्तिः ॥ आश्विनासितामावास्यायांअन्धदोष-
निवृत्त्यर्थंपञ्चकुम्भान्दीपमोदकादियुक्तान्सङ्कल्पितान्पञ्चब्राह्मणेभ्योविभज्यदास्येतत्पुण्यंअ०

गोत्रायअ०प्रे०उपतिष्ठतु ॥ अनेनपञ्चदीपकुम्भदानेनअ०गोत्रस्यअ०प्रे०अन्धदोषनिवृत्तिः ॥
मकरसंक्रान्तौक्षुधादोषनिवृत्तयेपञ्चभाण्डानिअपूपवटकहविष्यान्नैःपूरितानिपञ्चब्राह्मणेभ्यःवि-
भज्यदास्येतत्पुण्यंअ०गोत्रायअ०प्रे०उपतिष्ठतु ॥ अनेनपञ्चभाण्डदानेनअ०गोत्रस्यअ०प्रे०
क्षुधादोषनिवृत्तिः॥ अक्षयतृतीयायांक्षुधातृषादोषनिवृत्तयेपञ्चरक्तमृन्मयभाण्डानिहविष्यान्नमो
दकयुक्तानिजलपूरितानिव्यजनयुतानि पञ्चब्राह्मणेभ्यःविभज्यदास्येतत्पुण्यंअ०गोत्रायअ०प्रे०
उपतिष्ठतु ॥ अनेनपञ्चभाण्डदानेनअ०गोत्रस्यअ०प्रे०क्षुधातृषादोषनिवृत्तिः ॥ अथछत्रोपान-
दानम्—अद्यपूर्वो०अपसव्यंअ० गोत्रस्यअ० प्रे०परलोकेआतपनिवारणार्थंछत्रंसदक्षिणाकंदास्ये-
तत्पुण्यंअ०गोत्रायअ०प्रे०उपतिष्ठतु ॥ अनेनछत्रदानेनअ०गोत्रस्यअ०प्रे०आतपदोषनिवृत्तिः॥
दास्यमानमुपानद्युगलंउत्तानागिरोदैवतंयममार्गेतप्तवालुकाकंटकादिदोषनिवारणार्थंकस्मैचि
१९ द्ब्राह्मणायदास्येतत्पुण्यंअ०गोत्रायअ०प्रे०उपतिष्ठतु ॥ अनेनउपानद्दानेनअ०गोत्रस्यअ०प्रे०
यममार्गेतप्तवालुकादिदोषनिवृत्तिः॥ उपानद्दानमन्त्रः—असिपत्रवनेघोरेतप्तभूकण्टकैर्युते ॥ तस्यो
पानहदानेनसुखीभवसुनिश्चितम् ॥ कमण्डलुदानम्—दास्यमानंकमण्डलुपात्रंसजलंवरुणदैवतंअ०

गोत्रस्यअ०प्रे०परलोकेमहातृषानिवृत्यर्थंकस्मैचिद्ब्राह्मणायदास्येतत्पुण्यंअ०गोत्रायअ०प्रे०उप प्रदीपः
अ० क० तिष्ठतु ॥ अनेनकमण्डलुदानेनअ०गोत्रस्यअ०प्रे०परलोकेमहातृषादोषनिवृत्तिः॥कमण्डलुदानमन्त्रः—
बहुधर्मसमाकीर्णेनिर्वातितोयवर्जिते ॥ कमण्डलुप्रदानेनसुखीभवसुनिश्चितम् ॥ पददानम्—दास्य
।१०९। मानानित्रयोदशअथवायथासंख्यान्यष्टविधानिपदानिसभोज्यानिगन्धाद्यर्चितानिनानादैवतानि
नानानामगोत्रेभ्योब्राह्मणेभ्योविभज्यदास्येतत्पुण्यंअ०गोत्रायअ०प्रे०उपतिष्ठतु ॥ एभिःपददा
नैःअ०गोत्रस्यअ०प्रे०प्रेतत्वनिवृत्तिः॥सद्गतिप्राप्तिः॥ शय्यादानम्—अद्यपूर्वो०दास्यमानांशय्यांयथो
पस्करसहितांविश्वकर्मदैवतांसदक्षिणांअ०गोत्रस्यअ०प्रे०परलोकेअशून्यशयनप्राप्त्यर्थंसुखशय-
नार्थंकस्मैचिद्ब्राह्मणायसपत्नीकायदास्येतत्पुण्यंअ०गोत्रायअ०प्रे०उपतिष्ठतु ॥ अनेनशय्यादा
नेनअ०गोत्रस्यअ०प्रे०सुखशयनप्राप्तिः॥ शय्यादानमन्त्रः—यथाकृष्णस्याशून्यंशयनंरमयातथा ॥
शय्यातवाप्यशून्यास्तुभूयोजन्मनिजन्मनि ॥ १ ॥ प्रेतसंबंधिवस्त्राभरणादीनांदानम्—दास्यमानानिइ- ।१०९।
मानिप्रेतसम्बन्धीनिवस्त्राभरणानिसदक्षिणानिकस्मैचिद्ब्राह्मणायदास्ये ॥ शय्यांगांगृहंआसनंदा
सींआयुधानिअश्वंरथंगजंमहिषींभूमींतिलान्हिरण्यंताम्बूलं॥ अयमश्वोयमदैवतोगन्धपुष्पाद्य-

र्चितोयथोपस्करसंयुक्तःकस्मैचिद्ब्राह्मणाय० ॥ ( एवंसर्वत्रदानेषुप्रयोगोयुक्तः ) अयंरथोविश्व-
कर्मदैवतः ॥ अयंगजः ॥ इयंमहिषीयमदैवता ॥ स्त्रीमरणेवंशपात्रदानम्—इमानिवंशपात्राणिह्युपयो
ग्यसर्ववस्तुसंयुक्तानिगन्धाद्यर्चितानिसुवासिनीभ्योदास्येतत्पुण्यंअ०गोत्रायैअ०प्रे०उपतिष्ठतु ॥
ब्राह्मणभोजनसंकल्पः—अद्यपूर्वो०यथासंख्याकान्ब्राह्मणान्यथासम्पन्नेनान्नेनाहंतर्पयिष्ये ॥ तत्पुण्यं
अ०गोत्रायअ०प्रे०उपतिष्ठतु ॥ कृतैतन्मासिकश्राद्धोपार्जितंपुण्यंअ०गोत्रायअ०प्रे०उपतिष्ठतु ॥
सव्यं ॥ अद्यपूर्वो०ऊनमासादिऊनाब्दिकपर्यन्तश्राद्धविधौयन्यूनातिरिक्तंतत्सर्वंभवतांब्राह्मणा-
नांवचनात्श्रीविष्णोःप्रसादात्परिपूर्णमस्तु ॥ अपसव्यं ॥ कृतेनानेनमासिकश्राद्धेनअ०गोत्र-
स्यअ०प्रे०प्रेतत्वनिवृत्तिःअसद्गति०सद्गति०अक्षयातृप्तिःयमयातनाभयकष्टनिवृत्तिः ॥ सव्यं ॥
अद्येतनसमानयश्राद्धयोग्यतात्वासिः ॥ अभिरम्यतामितिपिण्डविसर्जनम् ॥ इतिषोडशमासिक
श्राद्धप्रयोगः ॥ ॥ ॥ ॥ ॥ ॥ ॥

॥ अथसपिण्डीकरणम् ॥ अत्रकात्यायनः—ततःसंवत्सरेपूर्णेत्रिपक्षेद्वादशाहेवायदहर्वावृद्धिरापद्येतेति ।
रेणुः—पूर्णेसंवत्सरेवापिसपिण्डीकरणंभवेत् । यजमानोऽग्निमांस्तत्रप्रेतश्चाप्यग्निमान्भवेत् । द्वादशाहेस्मृतंतस्यसपिण्डी-

करणंबुधैः । अनग्निमान्यदाकर्ताप्रेतश्चेदग्निमान्भवेत् । सपिण्डनंत्रिपक्षेस्यादित्युक्तंहिसुमंतुना । यजमानोनिरग्निश्चेत्प्रमीतश्चाप्यनग्निमान् । सपिण्डीकरणंतस्यवृद्धिर्वायदहर्भवेत् । निरग्निश्चेद्यदाकर्ताप्रेतऔपासनाग्निमान् । सपिण्डीकरणंतस्यपूर्णेब्देनात्रसंशयः । भविष्यसंज्ञकेत्वेवंव्यवस्थितंसुमंतुना । श्राद्धानिषोडशान्यादौविदधीतसपिण्डनं । तान्यदत्वान कुर्वीतवसिष्ठोवृद्धआहतदिति । कालादर्शे—एकादशेद्वादशेऽह्नित्रिपक्षेवात्रिमासिवा । षष्ठेवैकादशेवाब्देसंपूर्णेवाशुभागमे । सपिण्डीकरणस्यैवमष्टौकालाःसमीरिताः । साग्नौकर्तर्युभावाद्यौप्रेतेसाग्नौतृतीयकः । अनग्नेस्तुद्वितीयाद्याःसप्तकालाःसमीरिताः ॥ तथाच—पृथ्वीचन्द्रोदयेबौधायनः—( त्रिपक्षेवातृतीयेवामासिषष्ठेचैकादशेवाद्वादशेवाद्वादशाहेचेति ) ऋष्यशृंगः—सपिण्डीकरणंश्राद्धमुक्तकालेनचेत्कृतं । रौद्रेहस्तेचरोहिण्यांमैत्रभेवासमाचरेत् । ( रौद्रंआर्द्रामैत्रंअनुराधा )व्याघ्रः—आनन्त्यात्कुलधर्माणांपुंसांचैवायुषःक्षयात् । अस्थिरत्वाच्चदेहस्यद्वादशाहेप्रशस्यते ॥ तथाचगारुडे—द्वादशाहेत्रिपक्षेवाषण्मासेवत्सरेपिवा । सपिण्डीकरणंप्रोक्तंमुनिभिस्तत्वदर्शिभिः । मयातुप्रोच्यतेतार्क्ष्यशास्त्रधर्मानुसारतः । चतुर्णामेववर्णानांद्वादशाहेसपिण्डनम् । कर्मलोपात्प्रत्यवायीभवेत्तस्मात्सपिण्डनम् । निरग्निकःसाग्निकोवाद्वादशाहेसमाचरेत् । अतःस्नात्वामृतस्थानेगोमयेनोपलेपिते । शास्त्रोक्तेनविधानेनसपिण्डींकारयेत्सुतः ॥ इतिसपिण्डीकरणकालः ॥ ॥

अथसपिण्डीकरणप्रयोगेदेवताक्रमः ॥ कात्यायनः—चत्वारिपात्राणिसतिलगन्धोदकानिपूरयित्वात्रीणिपितॄणामेकंप्रेतस्यएतेनैवपिण्डोव्याख्यातइतिच । अत्रगदाधरदीक्षिताः—वाजसनेयिभिस्तुपूर्वंपितृभ्योदेयंपश्चात्प्रेतायदानमिति । प्रयोगोप्येवमेव । काशिकावृत्तिः—त्रीणिपितॄणामेकंप्रेतस्येतिक्रमः । तेनवैश्वदेवकृत्यानंतरंपितृकृत्यंततः

प्रेतकृत्यमित्यर्थः । अत्रैकेवर्णयंति—वैश्वदेवकृत्यानंतरंप्रेतकृत्यंततःपितृकृत्यमिति । एकोद्दिष्टस्यसपिण्डीकरणांतर्भावात् । तथाचबैजवापः—चत्वार्युदकपात्राणिप्रयुनक्तितत्रैकंप्रेतायत्रीणिपितृभ्यइति । तदुक्तं । सूत्रोक्तक्रमस्यवैयर्थ्यात् । नचबैजवापवचनंवाजसनेयिविषयं । बह्वृचविषयत्वात् । तथाचतत्सूत्रं । चत्वार्युदकपात्राण्येकंमृतस्यत्रीणीतरेषामिति । अतोऽत्रतिषयानवबोधादयुक्तमित्युक्तम् । तथाचकठश्रुतिः—दत्वापिण्डान्पितृभ्यस्तुपश्चात्प्रेतायपार्श्वतः । तन्तुपिण्डंत्रिधाकृत्वाआनुपूर्व्यांचसंततं । निदध्यात्रिषुपिंडेषुएषसंसर्जनेविधिः । चतुर्थंपिण्डमुत्सृज्यत्रिधाकृत्वापिंडेपुनिदध्यादितिलौगाक्षिवचनेपिचतुर्थपिण्डस्यपश्चाद्दानप्रतीतेः । नचैकोद्दिष्टस्यदैवपूर्वत्वंयुक्तं । तथाचशातातपः—सपिंडीकरणंश्राद्धंदैवपूर्वंनियोजयेत् । पितॄनेवाशयेत्तत्रपुनःप्रेतंचानिर्दिशेदिति । यत्तुप्रेतपूर्वकंपितृश्राद्धमाचरंतितद्भ्रातिनिबंधनमित्युपेक्षणीयं । तथाचमार्कंडेयपुराणं—तिलगंधोदकैर्युक्तमर्घपात्रचतुष्टयं । कुर्यात्पितॄणांत्रितयमेकंप्रेतस्यपुत्रकः । धर्मप्रदीपेपि—श्राद्धद्वयमुपक्रम्यकुर्वीतसहपिंडनम् । तयोस्त्रिपुरुषंपूर्वमेकोद्दिष्टंततःपरमिति । यत्पुनः—पूर्वंकृत्वातुतंप्रेतमुत्तरांस्तुपितामहान् । चतुर्भिःपितृभिर्युक्तंपार्वणंतुविधिवतइतिचतुर्विंशतिमतमुक्तंतद्वैश्वदेवात्पूर्वंप्रेतश्राद्धानुष्ठानविषयं । कचित्तथाचरणात् । बह्वृचविषयंच । तस्मात्पूर्वोक्तएवक्रमइतिसिद्धम् ॥ सपिण्डीकरणंमासिकानिचान्नेनैव । नत्वामादिना ॥ तच्चपुत्रेसतिनान्यःकुर्यात् । श्राद्धानिषोडशादत्वानतुकुर्यात्सपिण्डतां । प्रोषितावसितेपुत्रेकालादपिचिरादपीतिवायवीयोक्तेः । षोडशश्राद्धानांवर्षादूर्ध्वंकालाभावेपितान्यदत्वानकुर्यात् किंतुदत्वैव । तानियदाकनिष्ठभ्रात्रादिनाकृतानितदासपिण्डनमेवकुर्यादित्याहापरार्कः । सपिण्डनेतुकनिष्ठानांनैवाधिकारइत्यर्थः । तेष्वपिज्येष्ठस्यैवाधिकारः । आहिताग्निःकनिष्ठोपिकुर्यादेवअन्यथापितृयज्ञासिद्धेः । एवमावश्यकत्वाद्वापिकनिष्ठोन्यःसपिण्डोवाकुर्यात् । इतिसिंधुः । रेणुः—भ्रातावाभ्रातृपुत्रोवासपिण्डःशिष्यएववा । सपिंडीकरणंकुर्या-

त्पुत्रहीनेमृतेसति । सर्वबंधुविहीनस्यपत्नीकुर्यात्सपिण्डनं । ऋत्विजंकारयेद्वापिपुरोहितमथापिवा ।। अपुत्रायांमृतायान्तुपतिः
कुर्यात्सपिण्डनमिति । अन्योविशेषस्त्वन्यत्रावगंतव्यः ।। इतिसपिण्डीकरणम् ।। सपिण्डीश्राद्धेविभक्त्यादिविचारः–श्रद्धा-
न्वितःश्राद्धंकुर्वीत ।। श्रद्धयादीयतेतत्–श्रद्धाअस्तियत्रतच्छ्राद्धमितिवा ।। श्रद्धाच–धर्मकार्येषुफलावाप्तिनिश्चयः ।। मनुः–
प्रत्ययोधर्मकार्येषुसद्भिःश्रद्धेत्युदाहृता । साचस्मृत्युक्तधर्मोपलक्षणम् । अतस्तद्धर्मैर्युक्तःश्राद्धंकुर्यात् । विधिहीनमनुष्ठानंम-
न्त्रहीनमदक्षिणम् । अश्रद्धयाकृतंदत्तंतद्वैरक्षांसिभुञ्जते ।। तथा–विभक्तिभिस्तुयत्किञ्चिद्दीयतेपितृदैवते । तत्सर्वंसफलंह्याहु-
र्विपरीतंनिरर्थकम् ।। तथाच–संबंधंप्रथमंब्रूयान्नामगोत्रमतःपरम् । रूपंततोविजानीयादेषधर्मःसनातनः ।। मृतनामसमु-
च्चार्यतस्यगोत्रमुदीरयेत् ।। बृहस्पतिरपि–आसनेचार्घदानेचपिण्डदानेऽवनेजने । संबंधनामगोत्राणियथार्हमनुकीर्तयेत् । वसू-
रुद्रस्तथादित्यःपित्रादित्रितयेक्रमात् । मातामहादिमात्रादित्रितयेस्मृतिमर्हति । तत्र–संबंधेचभवेत्षष्ठीचतुर्थीसम्प्रदानइति ।
सामान्येनषष्ठीचतुर्थ्योःप्राप्तयोर्विशेषमाहस्मृतिः–पृच्छाक्षय्यासनेषष्ठीचतुर्थीचैव “ कल्पने ” ( संकल्पे ) ।। आवाहने
द्वितीयाचशेषाःसम्बुद्धयःस्मृताः । यत्तुसंग्रहकारवचनमपि–अक्षय्यासनयोःषष्ठीद्वितीयावाहनेस्मृता ।। अन्नदानेचतुर्थी
स्याच्छेषासम्बुद्धयःस्मृताइत्यन्नदानेचतुर्थीविधानंतच्छेषान्नदानविषयम् ।। “ शेषाः ” संकल्पव्यतिरिक्तार्घदानावनेजना-
दयः । सङ्कल्पेचतुर्थ्याएवविधानात् ।। तथाचधर्मप्रदीपे–गोत्राणामासनेऽक्षय्येगोत्रानावाहनेतथा ।। अर्घेगोत्रपितस्तद्वत्पि-
ण्डदानेऽवनेजने ।। अन्नसंकल्पनेगोत्रामहाःशर्माणएवच ।। “ त्यागे ” “ दाने ” चगोत्रेभ्योदैवेष्वेतदुदाहृतम् ।।
( त्यागेसंकल्पे–दानेदक्षिणायां ) इत्यलम्ग्रंथगौरवेण ।।

अथसमानयश्राद्धप्रयोगः ॥ तत्रादौश्राद्धकर्त्तास्नानादिमाध्याह्निकंकृत्वा ॥ आचम्यप्राणानायम्य ॥ शिखाबन्धनम् ॥ कुशपवित्रधारणम्-ॐपवित्रेस्थो० ॥ १ ॥ अद्यपूर्वो० तिथौअपसव्यंगोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थंसमानयश्राद्धप्रारंभांगनिमित्तंसव्यंश्रीविष्णोःषोडशोपचारैःपूजनमहंकरिष्ये ॥ इतिसंकल्प्यदेहन्यासदेवन्यासपूर्वकपूजांकृत्वा ॥ श्रीविष्णोःषोडशोपचारपूजनविधेःपरिपूर्णतास्तु ॥ आचम्य ॥ कुशोपग्रहःदक्षिणजानुनिपात्यविश्वेदेवास्थानेद्वौब्राह्मणौप्राङ्मुखौतत्समीपेप्रेतपितृपितामहप्रपितामहस्थानेत्रीन्ब्राह्मणानुदङ्मुखान्कृत्वा "ब्राह्मणाभावेसर्वेषांस्थानेकुशचटाःस्थाप्याः" यवकुशान्गृहीत्वाद्विजस्यदक्षिणहस्ते देवेक्षणःक्रियतां ॥ यथाप्राप्नोतुभवान्प्राप्नवानि ॥ अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्राद्धकारिणा ॥ १ ॥ सर्वायासविनिर्मुक्तैःकाम

---

१ स्नात्वाचबहिर्निर्गत्यपरिधायान्यवाससी ॥ गत्वागृहेवातीर्थेवासपिण्डीकरणंचरेत् ॥ श्राद्धंब्राह्मणहस्तेषुकुर्याच्चैवचटेषुवा ॥ श्राद्धंपित्रादिकेकुर्याद्विश्वेदेवैःसमन्वितम् ॥ कालकामनामानश्वविश्वेदेवास्तुतत्रवै ॥ उपवेश्याःपूर्वमुखाःपित्राद्याश्चउदङ्मुखाः ॥ प्रेतोद्देशेतदन्तेचप्रेतश्चोदङ्मुखोभवेत् ॥ प्रत्यङ्मुखमतिथिंचविष्णुंवाथप्रपूजयेत् ॥ एवंक्रमेणकर्तव्यंश्राद्धंसमानयाह्वयम् ॥ मण्डलंतत्रकर्तव्यं ॥ द्वौविप्रौदेवे ॥ पित्रादिषुत्रयोब्राह्मणाः ॥ प्रेतस्थानेएकः ॥ अशक्तौचेद्देवेपित्र्येवैकैकोविप्रः ॥ साग्निकश्चेत्श्राद्धकर्तातदातर्पणानन्तरंश्राद्धात्पूर्वंवैश्वदेवंकृत्वाइदंकुर्यात् ॥ निरग्निकश्चेत्कर्तातदाश्राद्धंसमाप्यतंकुर्यात् ॥ सपिण्डीकरणश्राद्धार्थंचरुपाकद्वयंकार्यं ॥

क्रोधविवर्जितैः ॥ भवद्भिःदेवकार्यंनःसंपाद्यंमेप्रसीदत ॥ १ ॥ अपसव्यंअ०गोत्रस्यअ०प्रेतस्य
सपिण्डीकरणश्राद्धनिमित्तंसव्यंकालकामसंज्ञिकाःविश्वेदेवाःआगतंवःसुस्वागतम् ॥ एतद्वःपाद्यं
पादावनेजनंपादप्रक्षालनंएषवोऽर्घःइदमत्रचन्दनंपुष्पं ॥ ॐसहस्रशीर्षा०गुलम् ॥१॥ कालका-
मसंज्ञकाःविश्वेदेवाःएषवःपादार्घः ॥ अस्तुपादार्घः ॥ एवंद्वितीयेक्षणअर्घ्यंचदद्यात् ॥ ततोदक्षिणाभिमुखउप-
विश्य ॥ अपसव्यं । सव्यजानुनिपात्यातिलकुशानादाय—प्रेतपितुःस्थानेक्षणःक्रियतांयथाप्राप्नोतुभवान्प्राप्न-
वानि ॥ अक्रोधनैः०भवद्भिः (प्रेत) पितृकार्यंनःसंपाद्यंमेप्रसीदत ॥ अ०गोत्रस्यअ०प्रेतस्यसपि-
ण्डीकरणश्राद्धनिमित्तंप्रेतपिताअमुकशर्मावसुरूपआगतंवःसुस्वागतम् ॥ एतद्वःपाद्यंपादावनेजनं
पादप्रक्षालनंएषवोऽर्घः ॥ इदमत्रचन्दनंपुष्पं ॥ ॐपितृभ्यः स्वधायिभ्यः स्वधानमः पिता-
महेभ्यः स्वधायिभ्यः स्वधानमः प्रपितामहेभ्यःस्वधायिभ्यः स्वधानमः ॥ अक्षन्पितरोमीम-
दन्तपितरोतीतृपन्तपितरः पितरः शुन्धध्वम ॥ १ ॥ अ०गोत्रस्यअ०प्रेतस्यसपिण्डीकरणश्राद्ध- ।११२।

---

१ पादार्घमासनंचार्घ्यमर्चनंचान्नकल्पनम् ॥ अवनेजनंपिण्डदानंप्रत्यवनेजनार्चनम् ॥ सुप्रोक्ष्यदक्षिणादानंप्रच्छादीपंतुकारयेत् ॥ त्रयोदशैवकर्माणिकर्तव्यानिमनीषिभिः ॥ २ अत्रगदाधरदीक्षिताः—वाजसनेयिभिस्तुपूर्वंपितृभ्योदेयंपश्चात्प्रेतायदानमिति ॥ प्रयोगोप्येवमेव ॥

निमित्तंप्रेतपितएषवःपादार्घः ॥ अस्तुपादार्घः ॥ १ ॥ तिलकुशानादाय—प्रेतपितामहस्थानेक्षण० यथाप्रा० ॥ अक्रोधनै० ॥ अमुकगोत्रस्यअ०प्रेतस्यसपि०श्राद्ध०प्रेतपितामहःअ०श०रु० आगतंवःसुस्वागतम् ॥ एतद्वःपाद्यंपादा० ॥ ॐपितृभ्यः० ॥१॥ अ०गो०अ०प्रे०सपि०श्राद्ध० प्रेतपितामहएषवःपादार्घः ॥ अस्तुपा० ॥ २ ॥ तिलकुशानादाय—प्रेतप्रपितामहस्थानेक्षण०यथा प्रा० ॥ अक्रोधनै० ॥ अ०गो०अ०प्रे०सपि०श्राद्ध०प्रेतप्रपितामहःअ०श०आ०आगतंवःसुस्वा-गतम् ॥ एतद्वःपाद्यंपादा० ॥ ॐपितृभ्यःस्वधा० ॥१॥ अ०गो०अ०प्रे०सपि०श्राद्ध०प्रेतप्रपितामह एषवःपादार्घः ॥ अस्तुपा० ॥ ३ ॥ तिलकुशानादाय—अ०गोत्रस्यअ०प्रेतस्यस्थानेक्षण०यथाप्रा० ॥ अक्रोधनैः० ॥ अ०गो०अ०प्रेतस्यसपि०श्राद्ध०आगतंवःसुस्वागतम् ॥ एतद्वःपाद्यंपादावनेज-नंपादप्रक्षालनंएषतेऽर्घः ॥ इदमत्रचन्दनंपुष्पं ॥ एषतेः पादार्घःअस्तुपादार्घः ॥ ४ ॥ सव्यं ॥ यवकुशानादाय—अतिथिस्वरूपिन्श्रीविष्णोआगतंवःसुस्वागतम् ॥ एतद्वःपाद्यं०इदमत्र० ॥ ॐ सहस्रशीर्षा० ॥१॥ एषवःपादार्घःअस्तुपादार्घः ॥ पादार्घोदकनिक्षेपः ॥ स्वपादौप्रक्षाल्य ॥( पूर्वोपग्रहकुशा-

१ अत्रावसरेब्रह्मचारी, अतिथिर्वायदिसमागच्छेत्तर्हितमपिपङ्क्त्यामुपवेश्यपूजयेत् ॥ अकरणेनदोषःकृतेमहत्फलंभवति ॥

दिकंसंत्यज्यपवित्रान्तरंधृत्वा ) आचम्यप्राणानायम्य ॥ सव्याहृतिपूर्वकंगायत्रीमन्त्रंजपित्वा ॥ ॐमधुवाता० मधु-
नक्तमुतो० मधुमान्नो० ॥२॥ प्रतिब्राह्मणंदीपस्थापनम् ॥ अपसव्यं तिलदर्भान्गृहीत्वादिग्बन्धनंकुर्यात्—अग्नि-
ष्वात्ताःपितृगणाःप्राचींरक्षन्तुमेदिशम् ॥ तथाबर्हिषदःपान्तुयाम्यांयेपितरस्तथा ॥ प्रतीचीमा-
ज्यपास्तद्वदुदीचीमपिसोमपाः ॥ ऊर्ध्वतस्त्वर्यमारक्षेत्कव्यवाडनलोप्यधः ॥ रक्षोभूतपिशाचे-
भ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषांयमोरक्षांकरोतुमे ॥ वायुभूतपितॄणांचतृप्तिर्भवति-
शाश्वती ॥ यइदंश्राद्धकालेतुकुर्याद्वैपितृपञ्जरम् ॥ अक्षय्यंतद्भवेच्छ्राद्धंपितृभ्यःपरिरक्षतु ॥
इतिमन्त्रेणतिलान्विकिरेत् ॥ तिलारक्षन्त्वसुरान्दर्भारक्षन्तुराक्षसान् ॥ सव्यं ॥ पङ्क्तिंवैश्रोत्रियो-
रक्षेद्तिथिः सर्वरक्षकः ॥ इतिमन्त्रेणद्वारदेशेतिलकुशप्रक्षेपः ॥ अपसव्येननीवीबन्धनम् ॥ कुशत्रयंद्विगुणंतिलसहि-
तंगृहीत्वासोमस्यनीविरसीतिमन्त्रेणनीवीबन्धनम्—ॐसोमस्यनीविरसिविष्णोःशर्म्मासिशर्मयजमानस्ये-
न्द्रस्ययोनिरसिसुसस्याःकृषीस्कृधि ॥१॥ निहन्मिसर्वंयदमेध्यवद्भवेद्धताश्चसर्वेसुरदानवामया॥ ।११३।

---

१ श्राद्धारम्भेचयेदर्भाःपादशौचेविसर्जयेत् ॥ आवाहनेतुयेदर्भाविकिरान्तेविवर्जयेत् इति ॥ २ नीवीबन्धनविचारः—
अत्रावसरेनीवीबन्धोविधेयःइतिहेमाद्रिप्रभृतयः ॥ शिष्टास्तुविकिरणान्तेकुर्वन्ति ॥ सचपिण्डपितृयज्ञेविहितत्वात्पिण्डोत्थानपर्यन्तंपिण्ड-×

यक्षाश्चरक्षांसिपिशाचगुह्यकाहतामयायातुधानाश्चसर्वे ॥१॥ (इतिमन्त्रेणकुशतिलान्वितानांपरिहितवस्त्रपुरस्थितदशानांवामकटिसंलग्नवस्त्रबहिर्भागेनसंवेष्ट्यगोपनंकुर्यात् )॥ सव्यं॥श्राद्धभूमौगयांज्ञात्वाध्यात्वादेवंगदाधरम्॥ताभ्यांचैवनमस्कारंततःश्राद्धंप्रवर्त्तयेत् ॥१॥ ससव्याधादशार्णेषुमृगाःकालञ्जरेगिरौ ॥ चक्र-

×पितृयज्ञोक्तधर्मोभवति, सचापसव्येनैवकर्तव्यः इतिहेमाद्रिः ॥ तत्रैतत्संदिह्यते—किं, नीवीबन्धनंकर्मदैविकंपित्र्यंवेति, यदिदैवंतदा_पिण्डपितृयज्ञेऽनुष्ठानविरोधः पित्र्यंतर्ह्युपवीतवदपसव्याङ्गउचितमिति, तथाचमनुः—प्राचीनावीतिनासम्यगपसव्यमतन्द्रिणा ॥ पित्र्य_मानिधनात्कार्यंविधिवद्दर्भपाणिना ॥ अत्रप्राचीनावीतिनेत्यपसव्यत्वेप्राप्तेअपसव्यग्रहणंनीवीबन्धनवामजानुपातादिधर्मप्राप्तिपूर्वकंपितृदैव_त्यंद्योतयति ॥ अपिच—सर्वकर्मापसव्येनदक्षिणादानवर्जितमितिस्मृतिरिति ॥ पिण्डपितृयज्ञाधिदेशात्पितृदैवत्यात्वेनीवी, इतिशतपथीय लिङ्गदर्शनेनपितृदैवत्यंकर्मनीवीमता ॥ कर्तव्यमित्यवगमात्--आश्वलायनोऽपिनीवी, वामवासोदशान्तेनस्वरक्षार्थंप्रबंधयेत् ॥ वृद्धयाज्ञवल्क्यस्तु--दक्षिणेकटिदेशेतुतिलैःसहकुशत्रयम् ॥ तर्जयन्तीहदैत्यानांयथानृणांयमस्तथा ॥ श्राद्धकाशिकायामपि -दशासंगोपनंनीवीसाराग्रे मानुषीस्मृता ॥ पितॄणांदक्षिणेपार्श्वेविपरीताचदैविके ॥ तथाचकात्यायनः--नीवीकार्यादशागुप्तिर्वामकुक्षौकुशैःसदा ॥ पितृकर्मणिचैवोक्तावेदवेदाङ्गवेदिभिरिति ॥ अत्रवामेदक्षिणेवा, इत्युभयतःप्राप्तौआचाराद्व्यवस्थेतिमदनपारिजातः ॥ तथाचतत्सूत्रं—नीवींविस्रस्यनमोवइत्यञ्जलिंकरोतीतिविस्रंसनोपदेशात्पूर्वमेवनीवीमत्परिधानमितिकर्कः ॥ पिण्डपितृयज्ञवदुपचारःपित्र्य, इत्यधिदेशादापरपाक्षिकादौसर्वत्रप्राप्तः ॥ तथाचदेवयाज्ञिकभाष्येकर्कः--कुशतिलसंयुतानांवस्त्रदशानां " सव्यभागे " परिहितवस्त्रेणसंवेष्ट्यावगाहनंनीवीकरणम् (सव्यभागेवामकुक्षौ) नीवीनाम--अत्रतिलकुशान्वितानाम्परिहितवस्त्रोत्तराञ्चलदशानांवामकटिसंलग्नवस्त्रबहिर्भागेनसंवेष्ट्यगोपनमिति ॥

वाकाःशरद्वीपेहंसाःसरसिमानसे ॥२॥ तेऽपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः ॥ प्रस्थितादीर्घम-
ध्वानंयूयंकिमवसीदथ॥३॥ देवताभ्यश्च ॥ अपसव्यं॥ प्रेतपितृपितामहप्रपितामहेभ्यश्च ॥सव्यं॥
विष्णवेमहायोगिभ्यएवच॥नमःस्वाहायैस्वधायैनित्यमेवनमोनमः॥गयायैनमः॥गदाधरायनमः
गयायांपितृरूपेणस्वयमेवजनार्दनः ॥ तंध्यात्वापुण्डरीकाक्षंमुच्यतेचऋणत्रयात् ॥१॥ पञ्चक्रो-
शंगयाक्षेत्रंक्रोशमेकंगयाशिरः ॥ यत्रयत्रस्मरिष्यामिपितॄणांदत्तमक्षयम् ॥२॥ अपवित्र० ॥ अच्यु-
तायनमः ॥ ताम्रपात्रेसतिलजलंपूरयित्वातज्जलंदर्भैश्चआलोड्यत्रिःगायत्रिमन्त्रेणअभिमन्त्र्य ॥ तिलोदककरणम्—यद्देवे-
तितिसृणांकूष्माण्डऋषिःगायत्र्युष्णिगनुष्टुप्छन्दांसिअग्निवायुसूर्यादेवताः तिलोदककरणेविनि
योगः ॥ ॐयद्देवा०॥१॥ यदिदिवा० ॥२॥ यदिजाग्रत्० अपसव्यंउदक्यादिदृष्टिदोषनिपातशूद्र
सूकरश्वानकुक्कुटमार्जारादिदुष्टदृष्टिनिपातदूषितानांसपिण्डीकरणश्राद्धनिमित्तपाकाद्युपहाराणां
पवित्रतास्तु ॥ सव्यंदेशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ सर्वेउपहाराःशुचयोभवन्तु ॥ अद्य
पूर्वो० अपसव्यंअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गति० सद्गतिप्राप्तिपूर्वकवसुरुद्रादित्य-
लोकप्राप्त्यर्थंअ० गोत्रस्यप्रेतस्यपितृपितामहप्रपितामहानांअमुकामुकशर्मणांवसुरुद्रादित्यस्व-

रूपाणांविश्वेदेवपूर्वकंअर्घ्यपिण्डसहितंसाग्नौकरणमेकोद्दिष्टपार्वणैकविधिनासपिण्डीकरणश्राद्धं-युष्मदनुज्ञयाहंकरिष्ये ॥ ॐकुरुष्व ॥ सव्यं ॥ विष्टरार्थेऋजुकुशयवानादाय—सपिण्डीकरणश्राद्धनिमित्तं कालकामसंज्ञिकानांविश्वेषांदेवानामिदमासनंसुखासनं ॥ हस्तप्रक्षालनार्थमुदकंउपग्रहविष्ट-रार्थाइमेकुशाःदैवेक्षणःक्रियतांयथाप्राप्नोतुभवान्प्राप्नवानि ॥ १ ॥ एवंद्वितीये—कालकामसंज्ञिकानांवि० ॥ २ ॥ अपसव्यं ॥ विष्टरार्थेद्विगुणकुशतिलानादाय—अ० गोत्रस्यअ०प्रेतस्यसपिण्डी०प्रेतपितुःअ०शर्मणःवसुरूपस्यइदमासनंस्वधा ॥ हस्तप्रक्षालनार्थमुदकंउपग्रहविष्टरार्थाइमेकुशाःपित्र्येक्षणःक्रियतांयथा प्राप्नोतुभवान्प्राप्नवानि ॥ १ ॥ एवंसर्वत्र ॥ पुनःविष्टरार्थेतिलद्विगुणकुशानादाय—अ०गो०अ०प्रे०सपिण्डी०प्रेतपितामहस्यअ०शर्मणःरुद्ररूपस्यइदमासनंस्वधा ॥ हस्तप्र०पि-

१ अत्राहबौधायनः—प्रदक्षिणंतुदेवानांपितॄणामप्रदक्षिणं ॥ देवानामृजवोदर्भाःपितॄणांद्विगुणाःस्मृताः ॥ कात्यायनस्मृतौविशेषः—सपिण्डीकरणंयावदृजुदर्भैःपितृक्रिया ॥ सपिण्डीकरणादूर्ध्वंद्विगुणैर्विधिवद्भवेत् ॥ दर्भाःकिमर्थंदीयन्तेश्राद्धकालेषुकिंतिलाः ॥ किमर्थंवेदवि-
२० च्छ्राद्धेकिमर्थंयतिरुच्यते ॥ रक्षन्तिराक्षसान्दर्भास्तिलारक्षन्तिचासुरान् ॥ वेदविद्रक्षयेच्छ्राद्धंयतीनांदत्तमक्षयम् ॥ ( दर्भाभावेकाशादिगृहीत्वाकर्मकुर्यात् ) ॥ तथाचस्मृतौ—कुशकाशशरादूर्वायवगोधूमवल्वजाः ॥ सुवर्णरजतंताम्रंदशदर्भाःप्रकीर्तिताः ॥ स्नानेदानेतथाहोमेस्वाध्यायेतर्पणेऽपिच ॥

न्ये० ॥ २ ॥ तिलद्विगुणकुशानादाय–अ०गो०अ०प्रे०सपिण्डी०प्रेतप्रपितामहस्यअ०शर्मणःआदित्यरूपस्यइदमा० ॥ हस्तप्र०पित्र्ये० ॥ ३ ॥ तिलकुशानादाय–अ०गो०अ०प्रेतस्यआसनमिदन्ते ॥ हस्तप्रक्षालनार्थमुदकंउपतिष्ठतु ॥ ४ ॥ सव्यं ॥ अतिथिस्वरूपिश्रीविष्णोःइदमासनंसु० ॥ हस्तप्र०इमेकुशाःअतिथिस्वरूपिवैष्णवेक्षणःक्रियतांयथाप्रा० ॥ ५ ॥ यवानादायद्विजस्यदक्षिणंजान्वालभ्यकालकामसंज्ञिकान्विश्वान्देवान्भवत्सुआवाहयिष्ये ॥ ॐआवाहय ॥ तत्रमन्त्रः–ॐविश्वेदेवासऽआगतशृणुतामऽइमꣳहवम् ॥ एदंबर्हिर्निषीदत ॥ १ ॥ विश्वेदेवाःशृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥ येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ २ ॥ आगच्छन्तुमहाभागाविश्वेदेवामहाबलाः ॥ येयत्रविहिताःश्राद्धेसावधानाभवन्तुते ॥ १ ॥ ॐभवामः ॥ एवंद्वितीये ॥ कालकाम०आवाहयिष्ये ॥ ॐआवाहय ॥ ॐविश्वेदेवासऽआगत० ॥ १ ॥ विश्वेदेवाःशृणुते० ॥ २ ॥ आगच्छंतु० ॥ १ ॥ अपसव्यं ॥ तिलानादायद्विजस्यसव्यजान्वालभ्यअ०गोत्रस्यअ०प्रे०सपिण्डी०प्रेतपितरंअ०शर्माणंवसुरूपंभवत्सुआवाहयिष्ये ॥ ॐआवाहय ॥ तत्रमन्त्रः–ॐउशन्तस्त्वानिधीमह्युशन्तःसमिधीमहि ॥

उशन्तंस्त्वाउशतऽआवहपितृन्हविषेऽअत्तवे ॥ १ ॥ आयन्तुनःपितरःसोम्यासोऽग्निष्वात्ताःपथिभिर्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोऽधिब्रुवन्तुतेवन्त्वस्मान् ॥ २ ॥ ( इतिमन्त्रद्वयेनावाहनम् ) पुनःतिलानादाय-अ०गो०अ०प्रे०सपिण्डी०प्रेतपितामहंअ०शर्माणंरुद्ररूपंभवत्सुआवा०आवा० ॥ ॐउशन्तस्त्वा० ॥ १ ॥ आयन्तुनः० ॥ २ ॥ तिलानादाय-अ०गो०अ०प्रे०सपिण्डी०प्रेतप्रपितामहंअ०शर्माणंआदित्यरूपंभवत्सुआवा०आवा० ॥ ॐउशन्तस्त्वा० ॥ १ ॥ आयन्तुनः० ॥ २ ॥ ( प्रेतस्यावाहनंनास्ति ॥ विष्णोरावाहनंसिद्धम् ॥ ) सव्यं ॥ अद्यपूर्वो०सपिण्डीकरणश्राद्धाङ्गभूतंदेवादिमण्डलाद्यर्चनंपात्रासादनंचकरिष्ये ॥ मण्डलानिकुर्यात् ॥ तद्यथा-देवमण्डलंचतुरस्रं ॥ पितॄणांवर्तुलं ॥ प्रेतमण्डलंत्रिकोणंकुर्यात् ॥ ( एवंमण्डलानिविरच्यपूजनंकुर्यात् ) मण्डलस्थदेवताभ्योअत्रंनमः ॥ इतिगन्धपुष्पतिलयवैर्मण्डलानिसव्याऽपसव्याभ्यांसम्पूज्य ॥ अर्घ्यपात्राणिपूरयेत्-देवमण्डलोपरिअर्घ्यपात्रद्वयंनिधाय ॥ तदुपरिपवित्रेस्थो

---

१ अत्राहशङ्खः-चतुष्कोणंद्विजाग्र्यस्यत्रिकोणंक्षत्रियस्यतु ॥ मण्डलाकृतिर्वैश्यस्यशूद्रस्याभ्युक्षणंस्मृतम् ॥ ब्रह्मपुराणे-मण्डलानिचकार्याणिनैवारैस्चूर्णकैःशुभैः ॥ गौरमृत्तिकयावापि "प्रणीतेन"चभस्मना ( प्रणीतआवसथ्याग्निः ) बह्वृचपरिशिष्टेतु-दैवेचतुरस्रंपित्र्येवृत्तंमण्डलमिति ॥

इतिमन्त्रेणद्वौद्वौकुशौप्रागग्रौनिधाय–ॐपवित्रेस्थो० ॥ १ ॥ शन्नोदेवीतिमन्त्रेणद्विर्जलंनिक्षिप्य–ॐशन्नोदेवी०
॥ २ ॥ गन्धद्वारेतिगन्धम्–ॐगन्धद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहो
पह्वयेश्रियम् ॥ ३ ॥ यवोसीतिमन्त्रेणयवप्रक्षेपः–ॐयवोसियवयास्मद्द्वेषोयवयारातीर्दिवेत्वान्तरिक्षाय
त्वापृथिव्यैत्वाशुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि ॥ ४ ॥ श्रीश्चतेतिमन्त्रेणपुष्पम्–ॐश्रीश्चते०
॥ ५ ॥ देवपात्रयोरर्घार्चनविधेःसर्वंपरिपूर्णमस्तु ॥ अपसव्यं ॥ ततःपितृमण्डलोपरिपात्रत्रयंनिधायपात्रा-
णांपूरणम् ॥ प्रेतपित्रादिपात्रेषुत्रीणित्रीणिपवित्राणिपवित्रेस्थोइतिमन्त्रेणनिधाय–ॐपवित्रेस्थो० ॥ १ ॥ शन्नोदेवी
तिमन्त्रेणउदकपूरणम्–ॐशन्नोदेवी० ॥ २ ॥ गन्धद्वारेतिगन्धम्–ॐगन्धद्वारां० ॥३॥ तिलोसीतितिलप्रक्षेपः–
तिलोसिसोमदैवत्योगोसवोदेवनिर्मितः ॥ प्रत्नमद्भिःपृक्तःस्वधयापितॄँल्लोकान्प्रीणाहिनःस्वाहा
॥ ४ ॥ श्रीश्चतेतिपुष्पम्–ॐश्रीश्चते० ॥ ५ ॥ पितृपात्राणांअर्घार्चनाविधेःसर्वंपरिपूर्णमस्तु ॥ प्रेतपात्रे-
एकंपवित्रंसचिह्नंनिधायपूर्ववत्पूरयेत् ॥ सव्यं ॥ अतिथिस्वरूपिणःश्रीविष्णोःअर्घपात्रेएकंपवित्रंमुक्त्वा

---

१ अत्रदेवपात्रेद्वेपवित्रेपितृपात्रेत्रीणिभवन्ति ॥ तदुक्तंचतुर्विंशतिमते–द्वेद्वेशलाकेदेवानांतिस्रस्तिस्रस्तुपार्वणे ॥ एकोद्दिष्टेशलाकै-
काश्राद्धेष्वेतेषुनिक्षिपेदिति ॥

देवपात्रवत्पूरयेत् ॥ ततोवैश्वदेविकब्राह्मणहस्तेजलप्रक्षेपः ॥ वैश्वदेविकपात्रस्थेद्वेपवित्रेगृहीत्वा स्वाहार्घ्याभवन्तु ॥ अस्तुस्वाहा ॥ पवित्रेप्रतिगृह्यतां ॥ प्रतिगृह्णामि ॥ पवित्रेद्विजहस्तेनिधाय ॥ सहस्रशीर्षेतिपूजनं ॥ ततअर्घ्यपात्रमादाय–ॐयादिव्याऽआपःपयसासंबभूवुर्याऽआन्तरिक्षाऽउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानआपःशिवाःशꣳस्योनाःसुहवाभवन्तु ॥ १ ॥ कालकामसंज्ञिकाःविश्वेदेवाःसपिण्डीकरणश्राद्धनिमित्तंएषवोऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ उदकस्पर्शः ॥ १ ॥ एवंद्वितीये ॥ २ ॥ ततःअर्घसंयोजनंकुर्यात् ॥ अद्यपूर्वो०अपसव्यंगोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्त्यर्थंअसद्गति०सद्गतिप्राप्तिपूर्वकवसुरुद्रादित्यलोकफलप्राप्त्यर्थंसपिण्डीकरणश्राद्धनिमित्तंप्रेतपितृपितामहप्रपितामहानामर्घैःसहार्घसंयोजनमहंकरिष्ये ॥ संयोजयेत्यनुज्ञातोर्घंसंयोजयेत् ॥

---

१ अर्घसंयोजनंकुर्यात्प्रेतपात्रोदकेनच ॥ त्रिधाविभक्तेनकिञ्चिच्छेषंतत्रैवधारयेत् ॥ ततस्तर्वविधिंकुर्यात्पित्रादीनांक्रमेणतु ॥ षष्ठ्यन्तंपूर्वमुच्चार्यद्वितीयान्तमतःपरम् ॥ तृतीयासहसंयोगेसंयोजनेसमुच्चरेत् ॥ अत्रान्येकप्रकारोऽपिब्रह्मपुराणेदर्शितः–चतुर्भ्यश्चार्घपात्रेभ्य एकंवामेनपाणिना ॥ गृहीत्वादक्षिणेनैवपाणिनासतिलोदकम् ॥ संसृजेच्चतथान्येषुयेसमानाइतिस्मरन् ॥ प्रेतंप्रेतस्यहस्तेषुचतुर्भागजलंक्षिपेत् ॥ ततःपितामहादेस्तुतन्मन्त्रैश्चपृथक्पृथगिति ॥ वाजसनेयिभिस्तुपूर्वंपितृभ्योदेयंपश्चात्प्रेतायदानम् ॥ “एतेनैवपिण्डोव्याख्यातः” यथाप्रेतार्घपात्रस्थंजलंयेसमानाइतिद्वाभ्यांमन्त्राभ्यांपात्रत्रयेस्थापितमेवमेवप्रेतपिण्डमपित्रेधाकृत्वापिण्डत्रितयेदध्यादिति ॥

( प्रेतपात्रस्थंपवित्रंसचिह्नंकृत्वाप्रेतपितृपात्रेनिधायप्रेतार्घपात्रस्थितंस्वल्पंजलंदत्त्वार्घ्यंदद्यात्पुनश्चतत्पवित्रंप्रेतपितामहादिपात्रे यथाक्रमंकृत्वास्वल्पंजलंचदत्वातत्पवित्रंप्रेतपात्रेनिधायअर्घसंयोजनंकुर्यात्-अत्रविश्वनाथोभाष्यकारोऽपिप्रेतपवित्रंत्वखण्डमेव प्रतिपात्रंसंचारयेदिति ) तद्यथा–प्रेतपवित्रंपितृपात्रेनिधाय ॥ प्रेतार्घ्यपात्रंगृहीत्वा–ॐयेसमानाःसमनसःपितरोय मराज्ये ॥ तेषाँल्लोकःस्वधानमोयज्ञोदेवेषुकल्पताम् ॥ १ ॥ येसमानाःसमनसोजीवाजीवेषुमा-मकाः ॥ तेषा(१)श्रीर्मयिकल्पतामस्मिँल्लोकेशतꣳसमाः ॥ २ ॥ इतिमन्त्रद्वयंपठित्वाविष्णुप्रसादात् अ० गोत्रस्यअ० प्रेतस्यप्रेतत्वानिवृत्त्यर्थंअसद्गति०सद्गतिप्रा० प्रेतार्घस्यप्रथमांशंअ० गोत्रस्यप्रेतपि-तुःअमुकशर्मणःवसुरूपिणःअर्घेणसहसंयुनज्मिसंयुज्यतामितिवदेत् ॥ वसुलोकप्राप्तिरस्तु ॥ स्वल्पंजलंपितृपात्रेनिनयेत् ॥ प्रेतपवित्रंप्रेतपितामहपात्रेनिधाय ॥ प्रेतार्घपात्रंगृहीत्वा–ॐयेसमाना० ॥ १ ॥ येसमा-ना० ॥ २ ॥ इतिमन्त्रद्वयंपठित्वाविष्णुप्रसादात्अ०गो०अ० प्रेतस्यप्रेतत्व०असद्गति०सद्गतिप्रा०प्रेता-र्घस्यद्वितीयांशंअ० गो०प्रेतपितामहस्यअ०शर्मणःरुद्ररूपिणःअर्घेणसहसंयुनज्मिसंयुज्यताम् ॥ ।११७। रुद्रलोकप्राप्तिरस्तु ॥ स्वल्पंजलंपितामहपात्रेनिनयेत् ॥ प्रेतपवित्रंप्रपितामहपात्रेनिधाय–ॐयेसमाना० ॥ २ ॥

---

१ अत्रार्घसंयोजनेचतुर्विंशतिपद्धतौढोण्डुपद्धतौपटवर्धनकृतपद्धतौचप्रेतपात्रेचत्वारिपवित्राणिनिदध्यादित्युक्तंतत्समंजसमितिममनुप्र-तिभातिअतः “ अत्रभवन्तोविद्वांसः ” प्रार्थयेविस्तरेणविशेषस्फोटनाय, प्रयोगेतुपद्धतिमनुसृत्यानिर्दिष्टामितिदिक् ॥

इतिमन्त्रद्वयंपठित्वा—विष्णुप्रसादात्अ०गो० अ०प्रे० प्रेतत्व० असद्गति० सद्गतिप्रा०प्रेतार्घस्यतृतीयांशंअ० गोत्रस्यप्रेतप्रपितामहस्यअ० शर्मणः आदित्यरूपिणः अर्घेणसहसंयुनज्मिसंयुज्यताम् ॥ आदित्यलोकप्राप्तिरस्तु ॥ स्वल्पंजलंप्रपितामहपात्रेनिनयेत् ॥ तत्पात्रंप्रेतसमीपेउत्तानमेवसपवित्रंस्थापयेत् ॥ ततोर्घ्यंदद्यात् ॥ पितृब्राह्मणहस्तेजलप्रक्षेपः ॥ पितृपात्रस्थानिपवित्राणिगृहीत्वास्वधार्घ्याभवन्तु ॥ पवित्रार्पणंपूजाच ॥ पवित्राणिप्रतिगृह्यताम् ॥ प्रतिगृह्णामि ॥ पवित्राणिद्विजहस्तेनिधायपितृभ्यःस्वधेतिमन्त्रेणपूजांकृत्वाअर्घ्यमादाय—यादिव्येतिमन्त्रेणार्घ्यंदद्यात् ॥ ॐयादिव्या० ॥ १ ॥ अ०गोत्रअ०प्रेतपितः अ०शर्मन्वसुरूपसपिण्डीकरणश्राद्धनिमित्तंएषवोर्घःअर्घेपुनःप्रत्यर्घः ॥ उदकस्पर्शः ॥ (एवं सर्वत्र) पितामहपात्रास्थितपवित्राणिगृहीत्वास्वधार्घ्याभवन्तु ॥ पवित्रार्पणंपूजाच ॥ ॐपितृभ्यःस्वधेति० अर्घ्यंगृहीत्वा—ॐयादिव्या० ॥ १ ॥ अ०गो०अ०प्रेतपितामहअ०शर्मन्रुद्ररूपसपिण्डी०श्रा०एषवोऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ उदकस्पर्शः ॥ प्रपितामहपात्रस्थितपवित्राणिगृहीत्वास्वधार्घ्याभवन्तु ॥ पवित्रार्पणंपूजाच ॥ ॐपितृभ्यःस्वधा० अर्घ्यंगृहीत्वा—ॐयादिव्या० ॥१॥ अ०गो० अ०प्रेतप्रपितामहअ०शर्मन्आदित्यरूपसपिण्डी०श्रा०एषवोऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ उदक

स्पर्शः ॥ प्रेतब्राह्मणहस्तेअवशिष्टार्घजलप्रक्षेपः ॥ प्रेतब्राह्मणहस्तेपवित्रंदत्वा **तूष्णींपूजनं** ॥ प्रेतार्घ्यंगृहीत्वा—
**ॐयादिव्या० ॥१॥ अ०गोत्र०अ०प्रेतसपिण्डी०श्राद्ध०एषवोऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ सव्यं॥**
विष्णुपात्रस्थमेकंपवित्रंगृहीत्वा**स्वाहार्घ्याभवन्तु ॥ अस्तुस्वाहा ॥ पवित्रार्पणंपूजाच** ॥ अर्घ्यंगृहीत्वा—
**ॐयादिव्या० ॥ १ ॥ इतिमन्त्रान्तेअतिथिस्वरूपिन्श्रीविष्णोसपिण्डी०श्राद्ध०एषवोऽर्घः ॥**
**अर्घेपुनःप्रत्यर्घः॥ उदकस्पर्शः॥अपसव्यं ॥** प्रथमेपितृपात्रेसव्यापसव्याभ्यांस[१]स्रवान्समवनीयसंस्रवोदकंपात्रा-
न्तरेकृत्वादक्षिणाग्रान्त्रीन्कुशान्देवपित्रोरन्तरालेभूमौनिधायतदुपरि**शुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमसि,**
इतिन्युब्जंपात्रंकरोत्यधः ॥ **ॐपितृभ्यःस्थानमसि** ॥ तदुपरिस्वधावाचनीयान्त्रीन्कुशान्निधायतदुपरिअर्घ्यपवित्रा-
णिनिदध्यात् ॥ **स्थानमसीति**गन्धपुष्पैःसम्पूज्य ॥ **सव्यं॥** पात्रान्तरकृतसंस्रवोदकंभूमौनिषिंच्य ॥ अर्घोदकवन्दनम्—

---

१ अत्राहयमः—पैतृकंप्रथमंपात्रंतस्मिन्पैतामहंन्यसेत् ॥ प्रपितामहंततोन्यस्यनोद्धरेन्नविचालयेत् ॥ स्मृतिरपि—प्रथमेपितृपात्रेतुसर्वा-न्सम्भृत्यसंस्रवान् ॥ पितृभ्यःस्थानमित्युक्त्वाकुर्याद्भूम्यामधोमुखम् ॥ पुराणेविशेषः—आलभ्यप्रथमेपात्रेसर्वपात्रस्थसंस्रवाः ॥ ताभिरद्भिर्मुखं-सिञ्चेद्यदिपुत्रमभीप्सति ॥ चतुर्विंशतिमते--संस्रवान्प्रथमेपात्रेनिर्णीयाद्भिर्मुखंस्पृशेदिति ॥ २ तच्चन्युब्जीकरणम् पित्र्यब्राह्मणस्यवामपार्श्वे ॥ मत्स्यपुराणे--यादिव्येत्यर्घमुत्सृज्यदद्याद्गन्धादिकंततः ॥ वक्ष्योत्तरंचानुपूर्व्येदत्त्वासंस्रवमादितः ॥ पितृपात्रेप्रदायाथन्युब्जमुत्तरतोन्यसेदिति ॥ ( उत्तरशब्दोवामवचनम्--सचाचाराह्णोक्तुरेव )

ॐसंवर्चसा०॥१॥ ॐआपःशिवाःशिवतमाःशान्ताःशान्ततमास्तास्तेकृण्वन्तुभेषजम्॥ इतिमन्त्रद्वयेनयजमानस्यअमृताभिषेकोस्तु ॥ अत्रावसरेगन्धादिदानम्—कालकामसंज्ञिकाःविश्वेदेवाःयथादत्तंगन्धाद्यर्चनंवःस्वाहा ॥ एवंद्वितीये ॥ २ ॥ अपसव्यं ॥ गोत्राःप्रेतपितृपितामहप्रपितामहाःअमुकामुकशर्माणोवसुरुद्रादित्यस्वरूपाःयथादत्तंगधाद्यर्चनंवःस्वधा ॥ अ०गोत्रअ०प्रेतयथादत्तंगन्धाद्यर्चनंइदन्ते ॥ सव्यं ॥ अतिथिस्वरूपिन्विष्णोयथादत्तंगन्धाद्यर्चनंतेस्वाहा ॥ अपसव्यं ॥ अत्रचन्दनपुष्पधूपदीपादीनांप्रदत्तानांअस्यश्राद्धस्यार्चनविधेःसर्वंपरिपूर्णमस्तु ॥ इदमर्चितंवोज्योतिःसूर्योज्योतिःसूर्यायपुष्पं ॥ शेषोपचाराःसंपूर्णाविधिवन्तोभवन्तु ॥ आचम्य ॥ मण्डलानिपूर्ववत्कृत्वातस्योपरिभोजनपात्राणिस्थापयेत् ॥ ततोभस्मनापितृपात्रेपंक्तिवारणम् ॥ अपसव्यं ॥ प्रथमादक्षिणारेखाद्वितीयावामतोन्यसेत् ॥ तृतीयाचाग्रभागेतुमेलनंकुरुदक्षिणे ॥ १ ॥ ॐपरीत्यभूता-

१ श्राद्धारम्भेवसानेचपादशौचेतथार्चने ॥ विकिरेपिण्डदानेचषट्सुचाचमनंस्मृतमितिकात्यायनः ॥ २ श्राद्धकाशिकायाम् दैवपूर्वंभवेच्छ्राद्धंवर्जयित्वाविसर्जनम् ॥ प्रश्नंचदक्षिणांचैवमुक्तौचाचमनंविना॥ तथा--हस्तोच्छिष्टापनयनमाह्वानंचविसर्जनम् ॥ दक्षिणांसौमनस्यंचविनान्यद्दैवपूर्वकम् ॥ धर्मप्रदीपेऽपि—विसर्गश्चुलकाश्चाशीकरणंपङ्क्तिवारणम् ॥ करशुद्धिरपोशानंपितृपूर्वाणिवद्भवेदिति ॥

नाचमनम् ॥ कुशपवित्रधारणम्—ॐपवित्रेस्थो० ॥ १ ॥ ( ताम्रपात्रेतुलसीकुशतिलयवगन्धाक्षतपुष्पाणिप्रक्षिप्य प्रयोगंकुर्यात् ) ॥ अथतीर्थप्रयोगः । तीर्थानिनमस्कृत्यनमामिगङ्गेतवपादपङ्कजंसुरासुरैर्वन्दितदिव्यरूपम् ॥ भुक्तिञ्चमुक्तिञ्चददासिनित्यंभावानुसारेणसदानराणाम् ॥ १ ॥ पुष्कराद्यानितीर्थानि० ॥ श्रीपुष्करदेवतेएषतेऽर्घः ॥१॥ तीक्ष्णदंष्ट्र० ॥ श्रीभैरवदेवतेएषतेऽर्घः ॥ २ ॥ गंगागङ्गेतियो० ॥ श्रीगंगे० ॥३॥ प्रभातेवहतिगंगा० ॥ श्रीनर्मदे० ॥४॥ अयोध्यामथुरा० ॥ श्रीअयोध्ये० ॥५॥ गोमतीगोमय० ॥ श्रीगोमति० ॥ ६ ॥ षष्टीवर्षसहस्राणि० ॥ श्रीगोदावरि० ॥ ७ ॥ असीवरणयोर्मध्ये० ॥ श्रीवाराणासि० ॥ ८ ॥ इतितीर्थप्रयोगंकृत्वा ॥ अद्यपूर्वो०तिथौअपसव्यंअ०गोत्रस्य अस्मत्पितुः ( मातुः ) षोडशमासिकश्राद्धनिमित्तंसव्यंअमुकतीर्थेगृहेवास्नानविधिनास्नानमहं करिष्ये ॥ हरिर्भागीरथीविप्रा० ॥ इतिपठित्वाकुशैर्जलमालोड्य ॥ अपवित्रःपवित्रेतिमन्त्रेणसर्वाङ्गंमार्जयेत्—अपवित्रः० ॥ १ ॥ तिथिर्विष्णु०जगत् ॥ अद्यपूर्वो०तिथौअपसव्यंअ०गोत्राणांअस्मत्पितृपिता-

---

१ सांवत्सरिकश्राद्धे ( क्षयाहे ) महालयश्राद्धेचविशेषः—अ० गोत्रस्यअस्मत्पितुः ( मातुःवा ) सांवत्सरिकश्राद्धनिमित्तं, महालयेतु अपरपक्षेकन्यागतेसवितरिमहालयश्राद्धाङ्गनिमित्तंसव्यं अमुकतीर्थे० ॥ अत्रावसरेघृतपूरितं तैलपूरितं वा दीपंश्राद्धसमाप्तिपर्यन्तं प्रज्वालयेत् ॥ २ महालयेसङ्कल्पः—तिथ्यादिसंकीर्त्य अपसव्यं अ०गोत्राणांअस्मत्पितृ०महानांसपत्नीकानांअमुकामुकशर्मणांवसु०=

महत्प्रपितामहानांअमुकामुकशर्मणांवसुरुद्रादित्यस्वरूपाणांऊनमासादिऊनाब्दिकमासिकश्रा-
द्धनिमित्तंसव्यं ( सूर्योपस्थान ) ब्रह्मयज्ञपूर्वकंदेवऋषिमनुष्यपितृतर्पणमहंकरिष्ये ॥ इतिसंक
ल्प्यसूर्योपस्थानंब्रह्मयज्ञंतर्पणंचविधायविष्णुपूजांकुर्यात् ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअस्मत्पितुः
अ०शर्मणः ( मातुः ) ऊनमासादिऊनाब्दिकश्राद्धनिमित्तंसव्यंश्रीविष्णोःषोडशोपचारैःपूजनं
करिष्ये ॥ तदङ्गत्वेनदिग्रक्षणंकलशाराधनंशंखघण्टार्चनंपुरुषसूक्तेनदेहन्यासान्देवन्यासांश्चक-
रिष्ये ॥ इतिसंकल्पविष्णोःपूजादिकंविधायश्राद्धारंभंकुर्यात् ॥ श्राद्धारंभेदक्षिणाभिमुखउपविश्य ॥ आचम्यप्राणा-
नायम्य ॥ कुशपवित्रधारणम् ॥ पवि० ॥ संकल्पः–अद्यपूर्वो० तिथौअपसव्यंअ० गोत्राणांअस्मत्पितृपि-
तामहप्रपितामहानांअमुकामुकामुकशर्मणांवसुरुद्रादित्यस्वरूपाणांऊनमासिकंद्वितीयमासिकं

---

=स्वरूपाणां (द्वितीयगोत्राणां) अ० गोत्राणांमातामहप्र० महानांसपत्नीकानांअमुका० शर्मणांवसु० स्वरूपाणांएकोद्दिष्टसमस्तपूर्वजानांममपितुः
[ मातुःवा ] कन्यागतेसवितरिमहालयापरपक्षश्राद्धनिमित्तं सव्यं ब्रह्मयज्ञपू० ॥ क्षयाहे तु–अ० गोत्राणामारभ्यसमस्तपूर्वजानामित्यन्तंपठित्वा
ममपितुः [ मातुःवा ] सांवत्सरिकश्राद्धनिमित्तमित्यूहःकार्यः ॥१ महालयेसंकल्पः–तिथ्यादीन्संकीर्त्य अपसव्यं ॥ अ० गोत्राणांअस्मत्पितृ०
महानांअमुका० शर्मणांवसु० स्वरूपाणां, अ० गोत्राणां अस्मन्मातृ० महीनांअमुका० दानांवसु० स्वरूपाणां, अ० गोत्राणांअस्मन्मातामह०
महानांसपत्नीकानांवसु० स्व०, एकोद्दिष्टसमस्तपूर्वजानां सव्यं ममपितुः [ मातुःवा ] कन्यागतेसवितरिमहालयापरपक्षश्राद्धंविश्वेदेवपूर्वं।-

त्रैपाक्षिकंतृतीयमासिकंचतुर्थमासिकंपञ्चममासिकंषाणमासिकंऊनषाण्मासिकंसप्तममासिकंअ-
ष्टममासिकंनवममासिकंदशममासिकंएकादशमासिकंद्वादशमासिकंऊनाब्दिकंपञ्चदश (यदि-
मलमासश्चेत्तर्हिऊनाब्दिकान्तानांषोडश ) मासिकश्राद्धानांपार्वणेनविधिना ( शुद्ध ) षोडश-
मासिकश्राद्धंसद्यःकरिष्ये ॥ ॐकुरुष्व ॥ सव्यं ॥ हस्तेयवकुशानादाय–दैवेक्षणःक्रियतांतथाप्राप्नु-
वन्तुभवन्तःप्राप्नवाम ॥ अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्रा-
द्धकारिणा ॥ सर्वायासविनिर्मुक्तैःकामक्रोधविवर्जितैः ॥ भवाद्भिर्दैवकार्यंनःसंपाद्यंमेप्रसीदत ॥
॥१॥ पुरूरवार्द्रवसंज्ञकाःविश्वेदेवाःआगतंसुस्वागतंएतद्वःपाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽ-
र्घःइदमत्रचंदनंपुष्पम् ॥ एवंद्वितीयेक्षणंदत्त्वा ॥ अपसव्यं ॥ कुशतिलानादाय–पित्र्येक्षणःक्रियतां..था

---

नकमर्घ्यपिण्डसहितंपार्वणैकोद्दिष्टविधिनासद्यःकरिष्ये ॥ क्षयाहे तु—अ० गोत्राणामस्मत्पितृ० महानांसपत्नीकानांअमुका० शर्मणांवसु०स्वरू-
पाणां [ मातुःश्राद्धेमात्रादीनामहः ] ममपितुः [ मातुःवा ] सांवत्सरिकश्राद्धंपार्वणैकविधिनासद्यःकरिष्ये ॥ १ इष्टिश्राद्धेक्रतुदक्षौनान्दीसत्य-
वसूतथा ॥ पुरूरवार्द्रवौचा'देर्तीर्थेभूरिविलोचनौ ॥ कालकामौसपिण्डयांच कुरुकुत्सौमहालये ॥ तर्पणेचैवविज्ञेयाविश्वेदेवास्त्रयोदश ॥

प्राप्नुवन्तुभवंतःप्राप्नवाम ॥ अक्रोधनै० भवद्भिःपितृकार्यंनःसंपाद्यंमेप्रसीदत ॥१॥ अ०गोत्राः
अस्मत्पितृपितामहप्रपितामहाःअमुकामुकामुकशर्माणः ( मातृपितामहीप्रपितामह्यः ) वसुरुद्रा
दित्यस्वरूपाःआगतंसुस्वागतम् ॥ एतद्वःपाद्यंपा०पुष्पम् ॥ सव्यं ॥ यवकुशानादाय—दैवेक्षणःक्रि-
यतांतथाप्राप्नोतुभवान्प्राप्नवानि ॥ अक्रोधनै०भवद्भिःदेवकार्यंनःसं० ॥ १ ॥ अतिथिस्वरूपिन्
श्रीविष्णोपाद्यंपादा०इदम०पु० ॥ पादार्घोदकनिक्षेपः ॥ स्वपादप्रक्षालनं ॥ आचमनंदिग्बन्धः ॥
तिलयवान्गृहीत्वा—अग्निष्वात्ताःपितृगणाःप्राचींरक्षंतुमेदिशम् ॥ तथाबर्हिषदःपान्तुयाम्यांयेपितर-
स्तथा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपिसोमपाः ॥ ऊर्ध्वंतस्त्वर्यमारक्षेत्कव्यवाडनलोऽप्य-
धः ॥ रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषांयमोरक्षांकरोतुमे ॥ वायुभूत-
पितृणांचतृप्तिर्भवतिशाश्वती ॥ यइदंश्राद्धकालेतुकुर्याद्वैपितृपंजरम् ॥ अक्षय्यंतद्भवेच्छ्राद्धंपितृ-
भ्यःपरिरक्षतु ॥ इतिमन्त्रेणदशदिशिविकीर्य ॥ पुनःतिलान्गृहीत्वा—तिलारक्षंत्वसुरान् ॥ अपसव्यं ॥
दर्भपिञ्जलीकांगृहीत्वा—दर्भारक्षन्तुराक्षसान् ॥ सव्यं ॥ पंक्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्षकः ॥ अ-

पसव्यं ॥ तिलकुशानादायवामकटौनीवीबन्धनंकुर्यात्-निहन्मिसर्वंयदमेध्यकृद्भवेद्धताश्चसर्वेऽसुरदानवा मया ॥ यक्षाश्चरक्षांसिपिशाचगुह्यकाहतामयायातुधानाश्चसर्वे ॥१॥ ॐसोमस्यनीविरसिविष्णोः शर्म्मासिशर्म्मयजमानस्येन्द्रस्ययोनिरसिसुसस्याःकृषीस्कृधि ॥१॥ सव्यंश्राद्धभूमिप्रार्थना—श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरम् ॥ ताभ्यांकृत्वानमस्कारंततःश्राद्धंप्रवर्तयेत् ॥ सप्तव्याधादशार्णेषुमृगाःकालंजरेगिरौ ॥ चक्रवाकाःशरद्वीपेहंसाःसरसिमानसे ॥ तेऽपिजाताःकुरुक्षेत्रे ब्राह्मणावेदपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसीदथ ॥ देवताभ्यश्च ( अपसव्यं ) पितृभ्यश्च ( सव्यं ) महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ गयायांपितृरूपेणस्वयमेवजनार्दनः ॥ तंध्यात्वापुण्डरीकाक्षंमुच्यतेचऋणत्रयात् ॥ इतिनमस्कृत्य ॥ ( ईशानकोणेत्रिदर्भासनंनिधायतस्योपरिपात्रंनिधायतन्मध्येकर्मार्थंतिलोदककरणम् ) जलपूरणम्—ॐशन्नोदेवी०तुनः ॥ १ ॥

---

१ का०प०सू०श्राद्धप्रयोगे तिलकुशान्वितानां (पलाशपत्रेआच्छादितां) परिहितवस्त्रपुरःस्थितदशानांवामकटिसंलग्नवस्त्रबहिर्भागेन-संवेष्ट्य ( गोपनं ) कुर्यादिति ' नीवीबन्धन 'मुच्यते ॥

कुशकूर्चः–कुशमूलेस्थितोब्रह्माकुशमध्येजनार्दनः ॥ कुशाग्रेशंकरंविद्यात्त्रयोदेवाःकुशेस्थिताः ॥ ॐपवित्रेस्थो० ॥ तुलसीपत्रपुष्पाणि–तुलसीशतपत्राणिभृंगराजस्तथैवच ॥ मालतीमोगरंचैवपितॄणांदत्तमक्षयम् ॥ तिलाः–तिलोसिसोमदैवत्योगोसवोदेवनिर्मितः ॥ प्रत्नमद्भिःपृक्तःस्वधयापितॄँल्लोकान्प्रीणाहिनः ॥ यवाः–ॐयवोसियवयास्मद्द्वेषोयवयारातीर्दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वाशुन्धन्ताँल्लोकाःपितृषदनाःपितृषदनमासि॥तूष्णींगन्धपुष्पप्रक्षेपः ॥ ॐयद्देवेतितिसृणांकूष्माण्डऋषिःअग्निवायुसूर्यादेवताःतिलोदककरणेविनियोगः ॥ ॐयद्देवा० ॥ यदिदिवा० ॥ यदिजाग्रद्० ॥ ३ ॥ इतिमन्त्रैस्तिलोदकंविधायवामहस्तेपत्रपुटेतिलोदकंगृहीत्वागायत्र्याभिमन्त्र्यपाकशालायांगत्वाअपसव्येनपाकप्रोक्षणंकुर्यात् ॥ अपसव्यं ॥ उदक्यादिशुद्रदृष्टिनिपतनजपाकादिदोषाणांपवित्रतास्तु ॥ सव्यं ॥ आसनेउपविश्य ॥ देशकालपाकपात्रद्रव्यषोडशमासिकश्राद्धोपहाराणांपवित्रतास्तु ॥ सर्वेपाका०

१ प्रथमाब्देपञ्चभिर्दर्भैः प्रत्यब्देसप्तभिस्तथा ॥ तीर्थेमहालयेचैवनवदर्भैःप्रकीर्तितः ॥ एवंकूर्चंविजानीयाच्छ्राद्धकर्मसुपावनम् ॥ रत्निदर्भाङ्कुरैरत्निमात्रैर्ग्रन्थियुतस्तथा ॥ तुलसीदलसंयुक्तःकुशकूर्चोऽम्बुकर्मणि ॥

भवन्तु ॥ अपपूर्वी० लिपी अपसव्यं अ० गोत्राणां अस्मत्पितृपितामहप्रपितामहानां ऊनमासिकं द्वितीयमासिकं त्रैपाक्षिकं तृतीयमासिकं चतुर्थमासिकं पञ्चममासिकं षाण्मासिकं ऊनषाण्मासिकं सप्तममासिकं अष्टममासिकं नवममासिकं दशममासिकं एकादशमासिकं द्वादशमासिकं ऊनाब्दिकं पञ्चदश ( यदि मलमासश्चेत्तर्हि ऊनाब्दिकान्तं षोडश ) मासिकश्राद्धं पार्वणयुतं विश्वेदेवपूर्वकमर्घ्यपिण्डसहितं युष्मदनुज्ञयाहं करिष्ये ॥ ॐ कुरुष्व ॥ स० ॥ आसनदानम्–आसनार्थे द्वौ द्वौ दर्भौ गृहीत्वा पुरूरवार्द्रवसंज्ञकानां विश्वेषां देवानामिदमासनं सुखासनम् ॥ हस्तप्रक्षालनार्थे उदकं ॥ उपग्रहविष्टरार्थे विष्टरः ॥ एवं द्वितीये च घटेऽपि ॥ अपसव्यं ॥ पितॄणां आसनार्थे द्विभुग्नीकृतान् त्रीन् दर्भान्गृहीत्वा अ० गोत्राणां अ० पितृ० महानां अ० शर्मणां वसुरु० णां आसनं सुखासनम् ॥ हस्तप्रक्षा-

१ महालये प्रधानसङ्कल्पः–तिथ्यादिकं संकीर्त्य अपसव्यं अ० गोत्राणामस्मत्पितृ० महानां० समस्तपूर्वजानां कन्यागते सवितरि महालयापरपक्षश्राद्धं विश्वेदेवपूर्वकमर्घ्यपिण्डसहितं पार्वणैकोद्दिष्टविधिना युष्मदनुज्ञयाहं करिष्ये ॥ क्षयाहे–अ० गोत्राणामारभ्य समस्तपूर्वजानामित्यन्तं पठित्वा मम पितुः ( मातुःवा ) प्रतिसांवत्सरिकश्राद्धं पार्वणं विश्वेदेवपूर्वकमर्घ्यपिण्डसहितं युष्मदनुज्ञयाहं करिष्ये ॥ एवमग्रेपि [ अग्नौकरणादौ ] यत्र यत्र ऊनमासिकश्राद्धं तत्स्थाने महालयश्राद्धाङ्गभूतं सांवत्सरिकश्राद्धाङ्गभूतं वेत्यूहः कार्यः ॥

लनार्थंउदकं ॥ उपग्रहविष्टरार्थेविष्टरः ॥सव्यं॥ आसनार्थंद्वौदर्भौगृहीत्वा–अतिथिस्वरूपिणः महाविष्णोःआसनंसुखासनम् ॥ हस्तप्रक्षालनार्थंउदकं ॥ उपग्रहविष्टरार्थेविष्टरःसुविष्टरः ॥ इत्यासनदानंदत्त्वावाहनंकुर्यात् ॥ हस्तेयवाक्षतानादाय–पुरू०कान्विश्वान्दे० भवत्सुआवाहयिष्ये ॥ ॐ आवाहय ॥ तत्रमन्त्रः–ॐविश्वेदेवासऽआ० ॥१॥ विश्वेदेवाःशृणु० ॥ २ ॥ आगच्छन्तु०श्राद्धे साव०ते ॥ इतिमन्त्रेणप्रदक्षिणंयवान्विकीर्य ॥ एवंद्वितीये ॥ अपसव्यं ॥ तिलाक्षतानादाय–अ०गोत्रान् अ०पितृपि० प्र० महान्अमुकामु० शर्मणःवसुरु०पान्भवत्सुआवाहयिष्ये ॥ ॐआवाहय ॥ तत्रमन्त्रः–ॐउशन्तस्त्वा०अत्तवे ॥ ॐआयन्तुन० इतिमन्त्रद्वयेनअप्रदक्षिणंतिलान्विकीर्य ॥ सव्यं ॥ विष्णवेआवाहनंनास्ति ॥ पूर्णार्घ्यदानम् ॥ [ देवपितृविष्णुसन्निधौपलाशपत्रनिर्मितषट्पात्राणिस्थापयित्वातन्मध्ये अधोलिखितद्रव्याणिनिक्षिपेत् ॥ इच्छाचेत् अधोदर्शितप्रकारेणदेवपित्रोरग्रेमण्डलानिविधायतानिचसंपूज्यपात्राणिस्थापयेत् ] अद्यपूर्वो० तिथौषोडशमासिकश्राद्धाङ्गभूतंदेवादिमण्डलाद्यर्चनंपात्रासादनंचकरिष्ये ॥ मण्डलानिकुर्यात् ॥ तद्यथा–देवमण्डलंचतुरस्रं ॥ पितृणांवर्तुलं॥ [ एवंमण्डलानिविरच्यपूजनंकुर्यात् ] मण्डलस्थदेवताभ्यःअत्रंनमः ॥ इतिगंधपुष्पतिलयवैर्मण्डलानिसव्याऽपसव्याभ्यांसम्पूज्य ॥ अर्घ्यपात्राणिपूरयेत्–देवम

ण्डलोपरिअर्घपात्रद्वयंनिधायतदुपरिपवित्रेस्थइतिमन्त्रेणद्वौद्वौकुशौप्रागग्रौनिधाय ॥ ॐपवित्रेस्थो० ॥१॥ शन्नोदेवीति मन्त्रेणद्विर्जलंनिक्षिप्य—ॐशन्नोदेवी० ॥२॥ गंधद्वारेतिगंधम्—ॐगंधद्वारां० श्रियम् ॥३॥ यवोसीतिमन्त्रेणयवप्रक्षेपः—ॐयवोसि०॥४॥ श्रीश्चतेतिपुष्पम्—ॐश्रीश्चते० ॥ ५ ॥ अनयोःदेवपात्रयोरर्घार्चनविधेःसर्वं परिपूर्णमस्तु ॥ अपसव्यं ॥ पितृमण्डलोपरिअर्घ्यपात्रत्रयंनिधायतदुपरिपवित्रेस्थइतिमन्त्रेणत्रीणिपवित्राणिदक्षिणाग्राणिनिधाय ॥ ॐपवित्रे० ॥१॥ उदकपूरणं—ॐशन्नोदेवी० ॥२॥ गंधम्—गंधद्वारां० ॥३॥ तिलाः—तिलोसि० ॥४॥ पुष्पम्—ॐश्रीश्चते० ॥५॥ एषांपितृपात्राणामर्घार्चनविधेःसर्वंपरिपू०॥ सव्यं ॥ अतिथिस्वरूपिणःश्रीविष्णोरग्रेएकमर्घ्यपात्रंएकंपवित्रंनिधायदेवपात्रवत्पूरयित्वा ॥ अर्घ्यदानम्—आपःप्रदायस्वाहार्घ्याभवन्तु ॥ अस्तुस्वाहा ॥ देवेभ्योनमःपवित्रार्पणंपूजाच ॥ ॐसहस्रशीर्षा०॥ अर्घ्यंगृहीत्वा—ॐयादिव्याऽआपःपयसासंबभूवुर्याऽअन्तरिक्षाऽउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानऽआपःशिवाःशꣳस्योनाःसुहवाभवन्तु ॥ पुरूरवार्द्रवसंज्ञकाःविश्वेदेवाःएषवोऽर्घः ॥ अर्घ्येपुनःप्रत्यर्घ्यः ॥ एवंद्वितीयचटे ॥ अपसव्यं ॥ आपःप्रदायस्वधार्घ्याभवन्तु ॥ अस्तुस्वधा ॥ पितृभ्यो नमःपवित्रार्पणंपूजाच ॥ ॐआयन्तु० ॥१॥ अर्घ्यंगृहीत्वा—ॐयादिव्या०भवन्तु ॥ १ ॥ अ०गोत्र

अ० पितः अ० शर्मन्वसुरूपएषतेऽर्घः ॥ अर्घ्येपुनःप्रत्यर्घ्यः ॥ एवंपितामहप्रपितामहयोः ॥ सव्यं ॥ विष्णुपात्रस्थमेकंपवित्रंगृहीत्वाआपः प्र० तु॥१॥ अस्तु०॥ अतिथिस्वरूपिणोविष्णवेनमःपवित्रार्पणंपूजाच ॥ ॐसहस्रशीर्षा० ॥ अर्घ्यंगृहीत्वा-ॐयादिव्या० भवन्तु॥अतिथिस्वरूपिन्श्रीमहाविष्णो एषतेऽर्घः ॥ अर्घ्येपुनःप्रत्यर्घ्यः ॥ अपसव्यं ॥ दत्तार्घोदकादीनांएकीकरणंपूजनंच ॥ प्रथमेपितृपात्रेसंस्रवानेकीकृत्यतत्पात्रंपितृचटस्यवामेप्रथमदेवचटस्यदक्षिणेअपसव्येन ॐपितृभ्यःस्थानमसीति अर्घ्यसहितंन्युब्जंकरोतितदुपरि पितृपवित्राणिअन्यानित्रीणिचानिदधाति॥पूजनम्—स्थानमसिअत्रंनमः॥ स्थानमसिगंधाक्षतपुष्पाणिनमः ॥ स्थानमसिनमोनमः ॥सव्यं ॥ पात्रोदकवन्दनम्—ॐआपःशिवाःशिवतमाःशान्ताःशान्ततमास्तास्ते कृण्वन्तुभेषजम् ॥ इतिमन्त्रेणयजमानस्यअमृताभिषेकोऽस्तु ॥ अत्रावसरेगन्धादिदानम्—पुरूरवार्द्रवसंज्ञकेभ्योवि० दे० भ्योअत्राःस्वत्राः ॥ गंधःसुगंधः ॥ इमानिपुष्पाणिसु० ॥ यवाक्षताःस्वक्षताः ॥ एवंधूपदीपाच्छादनं ॥ आच्छादनार्थेयत्किञ्चिद्धिरण्यंसु० ॥ ततःकुशकूर्चेनतिलोदकंगृहीत्वा—पुरू० वि० दे० भ्यइदमनुलेपनंएतावत्सुमनोधूपदीपहिरण्यादिदानंस्वाहासंपद्यतांनमम ॥ एवंद्वितीयचटे ॥ अपसव्यं ॥ पितृभ्योगंधादिदानम्—अ० गोत्रेभ्यःअ० पितृ०महेभ्यःअ० शर्मभ्यःवसु०स्व-

रूपेभ्यः ॥ अत्राःस्वत्राः ॥ गंधाः सुगंधाः ॥ तिलाक्षताःस्वक्षताः ॥ इमानिपुष्पाणिसु० ॥ शेषंपूर्ववत्हिरण्यान्तंदत्त्वा ॥ कुशकूर्चेनतिलोदकंगृहीत्वा—अ० गोत्रेभ्यःअ०पितृ० महेभ्यःअ० शर्मभ्यःवसु० भ्यःइदमनुलेपनंएतावत्सु०नमम ॥ सव्यं ॥ अतिथि०श्रीविष्णवेअत्राःस्वत्राः ॥ इतिपूर्वोक्तदेवपूजनदर्शितक्रमेणमहाविष्णोःपूजनम् ॥ अद्यपूर्वो० ॥ अपसव्यं ॥ अ० गोत्राणांअ० पितृ० महानांअ० शर्मणांवसु०णां (अस्मत्पितुःमातुर्वा) ऊनमासादिऊनाब्दिकान्तषोडशमासिकश्राद्धाङ्गभूतंभवदनुज्ञयाअग्नौकरणंकरिष्ये ॥ ॐकुरुष्व ॥ [ इत्यनुज्ञातःपाकशालातोघृतमिश्रितमोदनमानीयगायत्र्यासम्प्रोक्ष्यभूमिंसंमृज्यशालिग्रामपित्रोरन्तरालभूप्रदेशेजलपूरितंपात्रंस्थापयित्वातत्रत्रिदर्भशलाकासहितंघृतमिश्रितंओदनं दक्षिणहस्तेनगृहीत्वापितृतीर्थेनपातितवामजानुःअवदानधर्मेणजलेजुहुयात् ] ॐअग्नयेकव्यवाहनायस्वाहाइदम० ॥१॥ ॐसोमायपितृमतेस्वाहाइदंसो० ॥२॥ कुशत्यागः ॥ [ इतिद्विराहुतिंहुत्वाहुतशेषंपिण्डार्थमवशेषणीयम् ]
२५ सव्यं ॥ उदकोपस्पर्शः ॥ ततःसर्वेषुपात्रेषुमूर्द्धानंदिवेतिमन्त्रेणपात्राभिघारणंघृतसेचनंचकरोति ॥ ॐमूर्द्धानन्दिवो० ॥ ततःदेवपात्रेपितृपात्रेतथाचविष्णुपात्रेपरिवेषणम् ॥ ततःगायत्रमिन्त्रेणसम्प्रोक्ष्य ॥ देवाःअन्नंरक्षध्वम् ॥ इदंविष्णुरितिअङ्गुष्ठमूलमन्नेऽवगाह्य ॥ ॐइदंविष्णु० ॥ अपहतेतियवान्विकीर्य—ॐअपहता० ॥दक्षिणह

स्तेनपात्रमालभ्यजपति—ॐपृथिवीतेपात्रंद्यौरपिधानंब्राह्मणस्यमुखेअमृतेअमृतंजुहोमिस्वाहा ॥ कुश-
कूर्चेनजलंगृहीत्वा-पुरुरवार्द्रवसंज्ञकेभ्योवि०दे० भ्यएतदन्नंदत्तंदास्यमानंचआतृप्तेःअमृतरूपेणस्वा-
हासंपद्यतांनमम ॥ घटोपरिजलंविसृजेत् ॥ एवंद्वितीयघटे ॥ अपसव्यं ॥ पितरःकव्यंरक्षध्वं ॥ इदंविष्णु-
रिति अङ्गुष्ठमन्नेवगाह्य—ॐइदंविष्णु० ॥ अपहतेतितिलान्विकीर्यपात्रमालभ्यपूर्ववज्जपति—ॐपृथिवीते० ॥
कुशकूर्चेनजलंगृहीत्वा—अ० गोत्रेभ्यःअ० पितृ० महेभ्यःअ० शर्मभ्यःवसु० भ्यःएतदन्नंदत्तंदास्य
मानंचआतृप्तेःअमृतरूपेणस्वधासंपद्यतांनमम ॥ सव्यं ॥ अतिथिस्व०श्रीविष्णोअन्नंरक्ष
स्वअंगुष्ठमूलमन्नेवगाह्य—ॐइदंविष्णु० ॥ कुशकूर्चेनजलमादाय—अतिथिस्वरूपिणेश्रीविष्णवेएतदन्नं
दत्तंदास्यमानंचआ० स्वाहासं० नमम ॥ प्राङ्मुखोभूत्वाभोजनसङ्कल्पंकुर्यात् ॥ जलमादाय—ब्रह्मा
र्पणंब्रह्महविर्ब्रह्माग्नौब्रह्मणाहुतं ॥ ब्रह्मैवतेनगंतव्यंब्रह्मकर्मसमाधिना ॥ हरिर्दाताहरिर्भो-
क्ताहरिरन्नंप्रजापतिः ॥ हरिर्विप्रशरीरस्थोभुङ्क्तेभोजयतेहरिः ॥ चतुर्भिश्चचतुर्भिश्चद्वाभ्यांप-
ञ्चभिरेवच ॥ हूयतेचपुनर्द्वाभ्यांसमेविष्णुःप्रसीदतु ॥ ॐतत्सद्ब्रह्मार्पणमस्तु ॥ अपसव्यं ॥
पितॄणांसकृत्सकृदपोदत्वा ॥ सव्यं ॥ देवानामपोशनं ॥ देवतानैवेद्यंकृत्वा ॥ अपसव्यं ॥ तिथ्यादिसंकीर्त्यएको

सकृत्सकृदपोदत्त्वाव्याहृतिपूर्वांगायत्रींजपित्वामधुवातेतित्रिर्ऋचंजपित्वा ॥ तृप्तास्थेतिपृच्छति । तृप्तास्मः ।
शेषमन्नंकिंक्रियताम् । इष्टैःसहभुज्यताम् ॥ ततःपिण्डस्थानेतिलोदकसंमार्जितभूमौदर्भमूलैःअपहतेतिमन्त्रेणरेखा॰
करणम् ॥ अपसव्यं ॥ ॐअपहता॰ ॥ सव्यं ॥ उदकस्पर्शः ॥ अपसव्यं ॥ रेखायांअवनेजनम् ॥ पितृ-
स्थाने–अ॰गोत्र अस्मत्पितःअ॰शर्मन्वसुरूपऊनमासिकश्राद्धनिमित्तंदर्भोपरिअवनेनिक्ष्व ॥१॥
अ॰गोत्रअ॰पितामह अ॰शर्मन्रुद्ररूपऊनमासिकश्राद्धनिमित्तंदर्भोपरिअवनेनिक्ष्व ॥२॥ अ॰
गोत्रअ॰प्रपितामह अ॰शर्मन्आदित्यरूपऊनमासिकश्रा॰निक्ष्व ॥ ३ ॥ अ॰गो॰अ॰पितःअ॰
श॰वसु॰द्वितीयमासिकश्राद्धनिमित्तंअवने॰ ॥१॥ अ॰गो॰अ॰पितामह अ॰श॰रु॰द्वितीयमा॰
श्राद्ध॰निक्ष्व ॥ २ ॥ अ॰गो॰अ॰प्रपितामह अ॰श॰आदि॰द्वितीयमा॰श्रा॰अ॰निक्ष्व ॥ ३ ॥ अ॰
गो॰अ॰पितःअ॰श॰व॰त्रैपक्षिकमासिकश्रा॰अ॰निक्ष्व ॥१॥ अ॰गो॰अ॰पितामह अ॰श॰रु॰
त्रैपाक्षिकमा॰श्रा॰अ॰निक्ष्व ॥२॥ अ॰गो॰अ॰प्रपितामह अ॰श॰आ॰त्रैपाक्षिकमा॰श्रा॰अ॰
निक्ष्व ॥ ३ ॥ अ॰गो॰अ॰पितःअ॰श॰व॰तृतीयमा॰श्रा॰अ॰निक्ष्व॰ ॥ १ ॥ अ॰गो॰अ॰
पितामह अ॰श॰रु॰तृतीयमा॰श्रा॰अ॰निक्ष्व ॥ २ ॥ अ॰गो॰अ॰प्रपितामह अ॰श॰आ॰

तृतीयमा०श्रा०अ०निक्ष्व ॥ ३ ॥ अ०गो०अ०पित:अ०श०व०चतुर्थमा०श्रा०अ० ॥ १ ॥ अ०
गो०अ०पितामह अ०श०रु०चतुर्थमा०श्रा०अ० ॥ २ ॥ अ०गो०अ०प्रपितामह अ०श०आ०
चतुर्थमा०श्रा०अ० ॥ ३ ॥ अ०गो०अ०पित:अ०श०व०पञ्चममा०श्रा०अ० ॥ १ ॥ अ०गो०
अ०पितामह अ०श०रु०पञ्चममा०श्रा०अ० ॥ २ ॥ अ०गो०अ०प्रपितामह अ०श०आ०पञ्चम
मा०श्रा०अ० ॥ ३ ॥ अ०गो०अ०पित:अ०श०व०षष्ठमा०श्रा०अ० ॥ १ ॥ अ०गो०अ०पिता-
मह अ०श०रु०षष्ठमा०श्रा०अ० ॥ २ ॥ अ०गो०अ०प्रपितामह अ०श०आ०षष्ठमा०श्रा०अ०
॥ ३ ॥ अ०गो०अ०पित:अ०श०व०ऊनषाण्मा०श्रा०अ० ॥ १ ॥ अ०गो०अ०पितामह अ०
श०रु०ऊनषाण्मा०श्रा०अ० ॥ २ ॥ अ०गो०अ०प्रपितामह अ०श०आ०ऊनषाण्मा०श्रा०अ०
॥३॥ अ०गो०अ०पित:अ०श०व०सप्तममा०श्रा०अ० ॥१॥ अ०गो०अ०पितामह अ०श०रु०
सप्तममा०श्रा०अ० ॥२॥ अ०गो०अ०प्रपितामह अ०श०आ० सप्तममा०श्रा०अ० ॥ ३ ॥
अ०गो०अ०पित:अ०श०व०अष्टममा०श्रा०अ० ॥१॥ अ०गो०अ०पितामह अ०श०रु०अष्ट-
ममा०श्रा०अ० ॥२॥ अ०गो०अ०प्रपितामह अ०श०आ०अष्टममा०श्रा०अ० ॥३॥ अ०गो०

अ० क० अ०पितःअ०श०व०नवममा०श्रा०अ० ॥ १ ॥ अ०गो०अ०पितामह अ०श०रु०नवममा०
श्रा०अ० ॥ २ ॥ अ०गो०अ०प्रपितामह अ०श०आ०नवममा०श्रा०अ० ॥ ३ ॥ अ०गो०अ०
।१४७। पितःअ०श०व०दशममा०श्रा०अ० ॥ १ ॥ अ०गो०अ०पितामह अ०रु०दशममा०श्रा०अ०
॥ २ ॥ अ०गो०अ०प्रपितामह अ०श०आ०दशममा०श्रा०अ० ॥३॥ अ०गो०अ०पितःअ०
श०व०एकादशमा०श्रा०अ० ॥ १ ॥ अ०गो०अ०पितामह अ०श०रु०एकादशमा०श्रा०अ०
॥ २ ॥ अ०गो०अ०प्रपितामह अ०श०आ०एकादशमा०श्रा०अ० ॥ ३ ॥ अ०गो०अ०पितःअ०
श०व०द्वादशमा०श्रा०अ० ॥ १ ॥ अ०गो०अ०पितामह अ०श०रु०द्वादशमा०श्रा०अ० ॥ २ ॥
अ०गो०अ०प्रपितामह अ०श०आ०द्वादशमा०श्रा०अ० ॥३॥ अ०गो०अ०पितःअ०श०व०ऊ-
नाब्दिकमासिकश्रा०अ० ॥ १ ॥ अ०गो०अ०पितामहअ०श०रु०ऊनाब्दिकमा०श्रा०अ० ॥२॥ ।१४७।
अ०गो०अ०प्रपितामह अ०श०आ०ऊनाब्दिकमा०श्रा०अवनेनिक्ष्व ॥ ३ ॥ ( यदिमलमासश्चे-
त्तर्हि ) अ०गो०अ० पितः अ०श०व०ऊनाब्दिकान्तषोडशमासिकश्राद्धेअवनेनिक्ष्व ॥ १ ॥
अ०गो०अ०पितामहः अ०श०रु०ऊनाब्दिकान्तषो०मा०श्रा०अ० ॥ २ ॥ अ०गो०अ०प्रपिता-

मह अ०श०आ०ऊनाब्दिकान्तषो०मा०श्रा०अ० ॥ ३ ॥ पिण्डदानम् ॥ पितृस्थाने—अ०गोत्र अ०पित:अ०शर्मन्वसुरूपऊनमासिकश्राद्धेएतत्तेऽन्नंस्वधा ॥ इदंअमुकगोत्रायअस्मात्पित्रेअ०शर्मणेवसुरूपायअयंपिण्डःस्वधानमम । एतत्तेगोदावर्यांदत्तमस्तुगयागदाधरःप्रीतोभवतु ॥ १ ॥ अ०गोत्रअ०पितामहअ०शर्मन्रुद्ररूपऊनमासिकश्राद्धेएतत्तेऽन्नंस्वधा ॥ इदंअ०गोत्रायअस्मत्पितामहायरुद्ररूपायअयंपिण्डःस्वधानमम ॥ एतत्तेगोदावर्यांदत्तमस्तुगयागदाधरःप्रीतोभवतु ॥ २ ॥ अ०गोत्रअ०प्रपितामहअ०शर्मन्आदित्यरूपऊनमासिकश्राद्धेएतत्तेऽन्नंस्वधा ॥ इदं अ०गोत्रायअ०प्रपितामहायआदित्यरूपायअयंपिण्डःस्वधानमम ॥ एतत्तेगोदावर्यांदत्तमस्तुगयागदाधरःप्रीतोभवतु ॥३॥ अनेनैवक्रमेणद्वितीयमासिकमारभ्यऊनाब्दिकपर्यन्तंप्रतिमासिकपिण्डान्दद्यात् ॥ पिण्डसंख्याश्च ( ४५ ) अधिमासश्चेत् ( ४८ ) ॥ हस्तलेपभाजःपितरःप्रीयन्ताम् ॥ श्वासधारणम्—ॐअत्रपितरोमादयध्वंयथाभागमावृषायध्वम् ॥ [ इतिमन्त्रेणउत्तरतःश्वासंधारयति ] ॥ नीवीविस्रंसनम्—ॐअमीम-

१ एकोद्दिष्टेसपिण्डेतुकपित्थंतुविधीयते ॥ नारिकेलप्रमाणंतुप्रत्यब्देमासिके तथा ॥ तीर्थेदर्शेचसंप्राप्तेकुक्कुटाण्डप्रमाणतः ॥ महालयेगयाश्राद्धेकुर्यादामलकोपममितिभट्टाः ॥

दन्तपितरोयथाभागमावृषायिषत ॥ ( इतिमन्त्रेणपिण्डोपरिनीवींविसृजति ) पूर्ववत्अवनेजनम्–( कुशकूर्चेनप्रतिपिण्डोपरितिलोदकंसिञ्चति ) अ०गोत्रअ०पितःअ०शर्मन्वसुरूपऊनमासिकश्राद्धनिमित्तंपिण्डोपरि अवनेनिक्ष्व ॥ १ ॥ अ०गो०अ०पितामहअ०शर्मन्रु०ऊनमासिकश्रा०पिं०अ० ॥ २ ॥ अ० गो०अ०प्रपितामहअ०शर्मन्आ०ऊनमासिकश्रा०पिं०अ० ॥ ३ ॥ ( अनेनैवक्रमेणद्वितीयमासिकमारभ्यऊनाब्दिकपर्यन्तंप्रतिपिण्डोपरिअवनेजनंकरोति ) ॥ पिण्डोपरिअञ्जलिकरणम्–ॐनमोवःपितरोरसाय ॥ ॐ नमोवःपितरःशोषाय ॥ ॐनमोवःपितरोजीवाय ॥ ॐनमोवपितरःस्वधायै ॥ ॐनमोवःपितरो घोराय ॥ ॐनमोवःपितरोमन्यवे ॥ ॐनमोवःपितरःपितरोनमोवः ॥ गृहान्नेतिमन्त्रेणाशीर्वंसम्प्रार्थ्य–ॐगृहान्नःपितरोदत्तसतोवःपितरोदेष्मैतद्वःपितरोवासऽआधत्त ॥ पिण्डोपरिसूत्रवस्त्राच्छादनम्॥सव्यं ॥ अद्यपूर्वो०तिथौअपसव्यं॥अ०गो०अ०पितुःअ० शर्मणःशुद्धषोडशमासिकश्राद्धाङ्गीभूतं॥सव्यं॥ममकुलाभिवृद्ध्यर्थंपिण्डपूजनमहंकरिष्ये ॥ पिण्डपूजनम्–पिण्डसंस्थाः पितरःअत्रंस्वधानमः ॥ [ इतिमन्त्रेणकुशकूर्चेनपिण्डोपरितिलोदकंक्षिपति ] पिण्डसंस्थाःपितरःयज्ञोपवीतं स्वधानमः ॥ पिण्डसंस्थाःपि०गंधंस्व० ॥ पिण्डसं०पि०यवतिलाक्षतपुष्पंस्व० ॥ पिण्डसं०

पि० भृङ्गराजपत्रंतुलसीपत्रंस्व० ॥ पिण्डसं० पि० धूपंस्व० ॥ पिण्डसं० पि० दीपंस्व० ॥ पिण्डसं० पि० नैवेद्यंस्व० ॥ पिण्डसं० पि० मुखवासार्थंपूगीफलताम्बूलदक्षिणांस्व० ॥ पिण्डसं० पि० कर्पूरनीराजनंस्व० ॥ पिण्डसं० पि० मन्त्रपुष्पंस्वधानमः ॥ फलार्घ्यः—कुशविष्टरसंपन्नाःपितरः पिण्डरूपिणः ॥ अयमर्घोमयादत्तःपुत्रपौत्रविवृद्धये ॥१॥ इत्यर्घ्यंदद्यात् ॥ नमस्कारः—पितादेवः पितागुरुःपिताधर्मःसनातनः ॥ तुष्टेपितरिपुत्राणांसंतुष्टाःपितृदेवताः ॥ अर्पणम्—एतान्यत्रगन्धपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणादीनिअनयापूजयापिण्डार्चनविधेःस्वर्चितमस्तु ॥ स्वर्चितमस्तु ॥ विश्वेदेवाब्राह्मणहस्ते ( अथवाचटोपरि )—( कुशकूर्चेनतिलोदकंक्षिपति ) ॐशिवाऽआपःसन्तु ॥ सन्तुशिवाऽआपः ॥ ॐसौमनस्यमस्तु ॥ अस्तुसौमनस्यम् ॥ ॐअक्षतंचारिष्टंचाऽस्तु ॥ अस्त्वक्षतमरिष्टंच ॥ पुरुरवार्द्रवसंज्ञकानांविश्वेषांदेवानांयद्दत्तंपञ्चदश ( षोडशवा ) मासिकनिवृत्तिश्राद्धपिण्डमुदकंतदक्षय्यमस्तु ॥ ॐअस्त्वक्षय्यम् ॥ एवंद्वितीयचटे ॥ अपसव्यं ॥ पितृ-

१ तुलसीसर्वत्रैवग्राह्यापिण्डमिश्रविवर्जिता ॥ पिण्डेषुपतितांदृष्ट्वानिराशाःपितरोगताः ॥ २ श्राद्धकारिकायाम्—नखादेःपिण्डनैवेद्यं विकिरान्नंनभक्षयेत् ॥ प्रमादाद्भक्षयेद्यस्तुसमूढोनरकंव्रजेत् ॥

स्थानीयचटोपरि—( कुशकूर्चेनतिलोदकंक्षिपति ) ॐशिवाऽआपःसन्तु ॥ सन्तुशिवाऽआपः ॥ ॐसौमन-
स्यमस्तु ॥ अस्तुसौमनस्यम् ॥ ॐअक्षतंचारिष्टंचाऽस्तु ॥ अस्त्वक्षतमरिष्टंच ॥ अ०गोत्रेभ्यः
अ०पितृपितामहप्रपितामहेभ्यःयद्दत्तंपञ्चदश ( षोडशवा ) मासिकनिवृत्तिश्राद्धपिण्डमुदकं
तदक्षय्यमस्तु ॥ ॐअस्त्वक्षय्यम् ॥ सव्यं ॥ अतिथिस्वरूपिमहाविष्णोरुपरि—( कुशकूर्चेनति-
लोदकंक्षिपति ) ॐशिवाऽआपःसन्तु ॥ सन्तु० ॥ सौमनस्य० ॥ अस्तु०॥ अक्षतं०॥ अस्त्व० ॥
महाविष्णवेइदमन्नमुदकंतदक्षय्यमस्तु ॥ ॐअस्त्वक्षय्यम् ॥ अघोराःपितरःसन्तु ॥ इतिश्राद्ध-
कर्त्तावदति ॥ सन्त्वघोराः ॥ इतिब्राह्मणोब्रूयात् ॥ ( एवंसर्वत्र ) गोत्रन्नोऽभिवर्द्धताम्—अभिवर्द्धतांवो
गोत्रम् ॥ दातारोनोऽभिवर्द्धन्ताम्—अभिवर्द्धन्तांवोदातारः ॥ वेदाश्चनोभिवर्द्धन्ताम्—अभिवर्द्ध-
न्तांवोवेदाः॥सन्ततिर्नोभिवर्द्धतां—अभिवर्द्धतांवःसन्ततिः ॥ श्रद्धाचनोमाऽव्यगमत्—माऽव्यगमद्वः
श्रद्धा ॥ बहुदेयंचनोऽस्तु—अस्तुवोबहुदेयम ॥ अन्नंचनोबहुभवेत्—भवतुवोबह्वन्नम् ॥ अति-
थींश्चलभामहे—लभन्तांवोऽतिथयः ॥ एताऽआशिषःसत्याःसन्तु—सन्त्वेताःसत्याशिषः ॥
अपसव्यं ॥ स्वधांवाचयिष्ये—वाच्यताम् ॥ अ०गो०अ०पितृपितामहप्रपितामहेभ्यःस्वधोच्य

ताम् ॥ अस्तुस्वधा ॥ पिण्डमूलेनिषिञ्चनम्—ॐऊर्जंवहन्ती० पितॄन् ॥ ( इतिमन्त्रेणकुशकूर्चेनपिण्डमूलेतिलोदकं ) पूर्वंन्युब्जकृतपात्रंउत्तानंकरोति ॥ सव्यं ॥ दक्षिणादानम् ॥ अस्यश्राद्धस्यफलप्रतिष्ठासिद्ध्यर्थंदेवानांसुवर्णंपितॄणांरजतम् तदभावेकिञ्चिद्द्रव्यवहारिकंयथोपपन्नंद्रव्यंदक्षिणामुखवासताम्बूलसहितंपुरुरवार्द्रवसंज्ञकेभ्योविश्वेभ्योदेवेभ्यःस्वाहा ॥ [ एवंद्वितीये ] अपसव्यं ॥ अस्यश्राद्धस्यफ०यथोपपन्नंद्रव्यंदक्षिणामुखवासताम्बूलसहितंअ०गोत्रेभ्यःअ० पितृपि० महेभ्यःअ०शर्मभ्यःवसुरु०पेभ्यःयथाविभागंवःस्वधा ॥ सव्यं ॥ अतिथिस्वरूपिणेविष्णवेमुखवासताम्बूलंसहिरण्यंस्वाहा ॥ प्रार्थना—सप्तव्याधा०किमवसीदथ॥गयायांधर्मपृष्ठेचसदासिब्राह्मणेतथा ॥गयाशीर्षेवटेचैवपितॄणांदत्तमक्षयम् ॥ शमीपत्रप्रमाणेनपिण्डंदद्यात्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणांकुलमेकोत्तरंशतम् ॥ भूमिस्थाःस्वर्गंगच्छन्तुस्वर्गस्थामोक्षगामिनः ॥ स्वर्गपातालभूमध्येनास्तिशीर्षंगयासमम् ॥ गयायांपितृरूपेण०॥इत्यादिपठेत् ॥ गोत्रंगोत्रस्याऽभिवृद्धिरस्तु ॥ गन्धतिलकधारणम् ॥ नमस्कारः ॥ अपसव्यं ॥ न्युब्जाञ्जलिः—अयोध्यामथुरामायाकाशीकाञ्चीअवन्तिका ॥ पुरीद्वारावतीज्ञेयाससैतामोक्षदायकाः ॥फल्गुतीर्थेनरःस्नात्वादृष्ट्वादेवंगदाधरम् ॥ आत्मानंतारयेद्यस्तुदशपूर्वान्दशापरान् ॥

पञ्चक्रोशंगयाक्षेत्रंक्रोशमेकंगयाशिरः ॥ यत्रयत्रस्मरिष्यामिपितॄणांदत्तमक्षयम् ॥ इतिमन्त्रेणपिण्डो-
परिन्युब्जाञ्जलिंकरोति ) पिण्डोद्धरणम्—दर्भशलाकांचालयेत् ॥ ( पिण्डानामुद्धरणंहस्तद्वयेनएकैकंपिण्डमुद्धृत्यपात्रेनिधाय
सव्यंकृत्वाहस्ताभ्यांपात्रमुत्क्षिप्यऊर्ध्वश्वासेनपिण्डानाघ्राय ) सव्यं ॥ आचम्य ॥ अपसव्यं ॥ स्वयंशिष्योयथासुतः
ब्राह्मणभोजनभाजनानिसव्यापसव्येनचालयेत् ॥ संचरभूमिमद्भिरभ्युक्षयेत् ॥ पितॄणांस्वर्गेवासः—ॐतद्विष्णो० ॥
पिण्डावघ्राणम्—ॐतद्विप्रासोविपन्यवोजागृवांꣳसःसमिन्धते ॥ विष्णोर्यत्परमम्पदम् ॥ कुलेकु-
लदीपकःस्थिरोभव ॥ ॐवाजेवाजेवतवाजिनोनोधनेषुविप्राऽअमृताऽऋतज्ञाः ॥ अस्यमध्वःपि
बतमादयध्वन्तृप्तायातपथिभिर्देवयानैः ॥ अपसव्यं ॥ कुशमूलेनउत्तिष्ठन्तुपितरः ॥ सव्यं ॥
ॐवाजेवाजे०नैः ॥ इतिमन्त्रेणकुशाग्रेणउत्तिष्ठन्तुविश्वेदेवाः ॥ [ इत्युक्त्वाविश्वान्देवान्विसर्जयेत् ]
अपसव्यं ॥ मण्डलोपरितिलोदकादिविसर्जनम्—ॐआमावाजस्य०गम्म्यात् ॥ इतिमन्त्रेणतिलोदकंत्यजति ॥
आचम्यप्राणानायम्य॥ प्रार्थना—आयुःप्रजांधनंविद्यांस्वर्गंमोक्षंसुखानिच ॥ प्रयच्छन्तुतथारा- ।१५०।
ज्यंपितरःश्राद्धतर्पिताः ॥ अद्यमेसफलंजन्मभवत्पादाब्जवन्दनात् ॥ अद्यमेवंशजाःसर्वेयाता
वोनुग्रहाद्दिवम् ॥ पत्रशाकादिदानेनक्लेशितायूयमीदृशाः ॥ तत्क्लेशमिहसञ्जातंविस्मृत्यक्षन्तु-

मर्हथ ॥ इतिप्रियवाक्यकथनेनब्राह्मणान्क्षमाप्यविसर्जयेत् ॥ अर्पणम्–अनेन (शुद्ध) षोडशमासिकश्राद्धविधौयन्न्यूनातिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनाच्छ्रीविष्णोःप्रसादात्सर्वंपरिपूर्णमस्तु ॥ तीर्थग्रहणम्–अकाल० ॥ १ ॥ तुलसीदलंगृहीत्वायस्यस्मृत्येतिविष्णुवन्दनम् ॥ आचार्यभालेतिलकंकृत्वायथाशक्तिदक्षिणांदद्यात् ॥ श्राद्धसाङ्गतासिद्ध्यर्थंयथाशक्तिदक्षिणार्थंगोनिष्क्रयीभूतंद्रव्यमाचार्यायतुभ्यमहंसम्प्रददे ॥ आचार्योब्रूयात् ॥ गयाकृतश्राद्धफलमस्तु ॥ पितॄणांप्रसादोस्तु ॥ धनकनकसमृद्धिरस्तु ॥ ॐअच्युतायनमः ॥ गयायैनमः ॥ गदाधरायनमः ॥ पुण्डरीकाक्षायनमः ॥ ॐविष्णवेनमः ॥ इति (शुद्ध) षोडशमासिकनिवृत्तिश्राद्धप्रयोगः ॥ द्विवेद्युपाह्वलीलाधरात्मज " चुनीलालशर्मणा " तथाचज्योतिर्विदुपनामकभानुशङ्करात्मज " सूर्यरामशर्मणा " प्रकाशितेदालभ्योक्तअशुभकर्मप्रदीपेतृतीयोविभागः ॥

---

२६ १ तुलसीब्राह्मणागावो विष्णुरेकादशीखग ॥ पञ्चप्रवहणान्येवभवाब्धौमज्जतांसताम् ॥ विष्णुरेकादशीगीतातुलसीविप्रधेनवः ॥ अपारेदुर्गसंसारेषट्पदीमुक्तिदायिनी इतिबृहद्गारुडे ॥



अथषट्त्रिंशद्दुर्मरणानि ॥ दाल्भ्यउवाच–आदौशृणुतविप्रेन्द्राःषट्त्रिंशत्संख्ययाधुना ॥ दुर्मरणानियान्ये
वतथातच्छान्तयेविधिम् ॥ १ ॥ मृतानांचैवसर्वेषांक्रियांचैवोर्ध्वदैहिकाम् ॥ विधानंचैवयत्कृत्यंसपिण्डीकरणावधि ॥२॥
व्याघ्राहिगजभूपालचोरवैरिवृकाहताः ॥ अष्टशय्यामृतायेचशौचसंस्कारवर्जिताः ॥ ३ ॥ हयश्वाशूकरकृमिशृङ्गिभिःशकटै
र्हताः ॥ भृग्वग्निदारुशस्त्राश्मविषोद्बंधजलैर्मृताः ॥ ४ ॥ विशूचिकानकवलस्तम्भातिसारतोमृताः ॥ शाकिन्यादिग्रहै-
र्ग्रस्ताविद्युत्पातहताश्चये ॥ ५ ॥ अस्पृश्यादिषुसंस्पृष्टापतिताऽपत्यवर्जिताः ॥ आशौचेयेमृतामर्त्याधनिष्ठादिकपञ्चसु ॥ ६ ॥
नक्षत्रेषुमृतायेचमृतावैदक्षिणायने ॥ अन्तरालेमृताश्चैवविष्णुस्मरणवर्जिताः ॥ ७ ॥ एतैःषट्त्रिंशत्प्रकारैर्मृतानांनगतिर्भवेत् ॥
तस्मादेषांविधानानिकृत्वौर्ध्वदैहिकंचरेत् ॥ ८ ॥ देशान्तरेमृतानांचजलेऽरण्येचहिंसकैः ॥ शरीरंनैवदह्येतएषामस्थिसमु-
च्चयम् ॥ ९ ॥ अग्निदाहोनयेषांवैशरीरस्यशवस्यच ॥ तेषांदाहःप्रकर्तव्योविधिवत्पुत्तलाह्वयः ॥ १० ॥ संस्कारार्थंमृताना-
ञ्चगत्यर्थंशृणुयाद्विधिम् ॥ सर्वोपस्करमानीयपुत्रस्तीर्थंव्रजेच्छुचिः ॥ ११ ॥ इतिषट्त्रिंशद्दुर्मरणविधिः ॥

अथपुत्तलविधानप्रयोगः ॥ उपहारान्गृहीत्वापुत्रःस्वजनैर्ब्राह्मणैश्चसहमहातीर्थेगत्वाशुचौदेशेसामग्रींनिधाय

---

१ कारिका ॥ ज्ञातिभिर्ब्राह्मणैर्युक्तःशुचौदेशेसमाविशेत् ॥ कृत्वास्नानंतदापुत्रोभूमिशुद्धिंतुकारयेत् ॥ तिलाक्षतांस्तथादर्भान्मन्त्रै-
स्तत्रविनिक्षिपेत् ॥ रक्षोघ्नसूक्तेनपुनर्मन्त्रैरक्षोहणोजपेत् ॥ ततःपुत्तलकंकृत्वाप्रौढंदर्भमयंदृढं ॥ अजिनाद्यैश्चसंयुक्तंसर्वैश्चोपस्करैर्युतम् ॥
शरीरावयवार्थंचपालाशवृन्तकैर्युतम् ॥ कृष्णाजिनंतुप्रथममास्तरेन्मन्त्रपूर्वकम् ॥ ब्रह्मयज्ञेतिमन्त्रेण ततस्तुयवपिष्टकैः ॥ पुत्तलंलेपयेच्चज्ञयज्ञ-
गन्त्वेतिमन्त्रतः ॥ ततःपालाशवृन्तानिषष्ट्यधिकशत ( ३६० ) त्रयं ॥ मन्त्रपूर्वंपृथग्न्यस्येद्विभज्यास्थिप्रदेशतः ॥ चत्वारिंशच्छिरस्थाने=

कर्मभूमिंनिश्चित्य ॥ स्नायात् आचम्यप्राणानायम्य ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअ० प्रेतस्य प्रेतत्वविमुक्तयेउत्तमलोकफलप्राप्त्यर्थंअस्थ्यभावेपलाशविधिनाऔर्ध्वदेहिककर्माहंकरिष्ये ॥ सव्यं ॥ उदकोपस्पर्शः ॥ शुद्धभूमिकरणम् ॥ तद्यथा–तिलाक्षतान्दर्भान्गृहीत्वाराक्षोघ्नसूक्तोक्तान्मन्त्रान्पठेत् ॥ **तत्रमन्त्रः–**

=आयुष्यंवर्चमन्त्रतः॥ ग्रीवायांविंशतिंश्चैवनीलग्रीवास्तुमन्त्रतः ॥ बाहुद्वयेतुपञ्चाशद्बाहूमेबलमन्त्रतः ॥ पञ्चाशत्करयोर्न्यस्येत्सतक्षणीतिमन्त्रतः॥ दशहस्ताङ्गुलिष्वेवसइषुहस्तैमन्त्रतः ॥ पञ्चाशद्हृदयेन्यस्येत्स्तीर्णंबर्हिश्चमन्त्रतः ॥ जठरेविंशतिंश्चैवसमिधाग्नीतिमन्त्रतः ॥ त्रिंशत्कटिद्वये-न्यस्येत्कयानश्चित्रमन्त्रतः ॥ ऊरुद्वयेतुपञ्चाशदिमदेवेतिमन्त्रतः ॥ त्रिंशत्तुजङ्घयोर्न्यस्येत्प्रथमावांसमन्त्रतः ॥ दशपादाङ्गुलिष्वेवयेपथांपथि-मन्त्रतः ॥ एवंवृन्तानिविन्यस्यपश्चाद्वस्तूनिविन्यसेत् ॥ शरीरावयवार्थंहिमन्त्रपूर्वंपृथक्पृथक् ॥ नारिकेलंशिरःस्थानेशिरोमेश्रीश्चमन्त्रतः ॥ तुम्बीफलंकपोलेचमन्त्रेणब्रह्मणस्पते ॥ कर्णस्थानेचशुक्तीद्वेनमःस्तुत्यायमन्त्रतः ॥ वराटिकाद्वयंचाक्ष्णोस्तच्चक्षुरितिमन्त्रतः ॥ गुञ्जाद्वयंचतारार्थे अग्निर्ज्योतिश्चमन्त्रतः ॥ मन्त्रेणधन्वनागाश्चकज्जलंकरणंभ्रुवोः ॥ वातम्प्राणेनमन्त्रेणनासार्थंशतपत्रकम् ॥ विश्वतश्चक्षुर्मन्त्रेणपत्रपुष्पंमुखे-न्यसेत् ॥ जिह्वामेभद्रमन्त्रेणजिह्वास्थानेचशर्करा ॥ दाडिमीफलबीजानिदन्तस्थानेषुविन्यसेत् ॥ वाचस्पतयेपवस्वमन्त्रेणविधिवत्तदा ॥ गायत्रीमन्त्रतस्तत्रविद्रुमंचोष्ठयोर्न्यसेत् ॥ ग्रीवायांमूलकंन्यस्येत्नीलग्रीवाद्वितीयकः ॥ अबोध्यग्निश्चमन्त्रेणगलस्थानेगुडःस्मृतः ॥ बिल्वफले-स्कन्धयोश्चयेवृक्षेषुचमन्त्रतः ॥ श्रीखण्डशकलौबाहोरुद्रेषांबाहुमन्त्रतः ॥ कम्बलंपृष्ठदेशेतुपृथ्वीमेराष्ट्मन्त्रतः ॥ अग्निष्हृदयेनततोहृदिप्रो-क्तामनःशिला ॥ गोस्तनीफलंस्तनयोर्नमस्तेअस्तुविद्युते ॥ ताम्बूलदलान्युदरेइन्द्रस्यक्रोडमन्त्रतः ॥ घृतंमिमिक्षेतिमन्त्रेणनाभिस्थानेघृतं-न्यसेत् ॥ नाभिर्मेचित्तमन्त्रेणनाभौकमलकर्कटी ॥ रक्तस्थानेमधुन्यस्येन्मधुवातेतिमन्त्रतः ॥ आप्यायस्वेतिमन्त्रेण रक्तस्थानेचाहिङ्गुलः ॥ +

ॐकृणुष्वपाजः० ॥ ॥ तवभ्रमासं० ॥ प्रतिस्पशो० ॥ उदग्नेतिष्ठ०॥ ऊर्ध्वोभव० ॥५॥ रक्षोहणं० ॥ रक्षोहणोवो० ॥ रक्षसां० ॥ रक्षोहा० ॥४॥ इतिमन्त्रैस्तिलाक्षतदर्भान्भूमौनिक्षिपेत् ॥ ततःब्रह्मयज्ञानमितिमन्त्रेणकृष्णाजिनमास्तीर्य—ॐब्रह्मयज्ञानं० ॥ क्षेपकः—अक्रन्कर्मेतिमन्त्रेणउदकशिरसंनिधाय ॥ ॐअ-

---

+आन्त्राणिस्थालिमन्त्रेणआन्त्रेषुपद्मनालकः ॥ नासास्थानेपट्टसूत्रंपयःपृथिव्यांमन्त्रतः ॥ लिङ्गस्थानेगृंजनंन्यस्येन्मन्त्रेणान्नात्परिस्रुतः ॥ वृन्ताकंवृषणस्थानेमयिगृह्णेतिमन्त्रतः ॥ त्वय६सोमेतिमन्त्रेणवीर्यस्थानेचपारदः ॥ मूत्रस्थानेचगोमूत्रंरेतोमूत्रमितिक्रमात् ॥ मेदःस्थानेपित्तलकंहं६सः शुचिमन्त्रतः ॥ अमेध्येगन्धकंन्यस्येन्मन्त्रेणधूरसीतिच ॥ माञ्जिष्ठंकालिजस्थानेकस्त्वासत्योमदेतिच ॥ रक्तचन्दनशकलौजान्वोर्मानोमहान्ततः ॥ मधुयष्टिशकलौचत्रीणिपदेचजङ्घयोः ॥ नखस्थानेचखल्वाःस्युःयेतीर्थानीतिमन्त्रतः ॥ सन्धिषुटङ्कणक्षारोमन्त्रेणचतदश्विना ॥ सर्वाङ्गेषुहरितालोहिरण्यगर्भमन्त्रतः ॥ केशेषुसौकराकेशानमोहिरण्यबाहवे ॥ लोमस्थानेन्यसेदूर्णालोमानिप्रयतिर्मम ॥ मनोजूतिश्चमन्त्रेणकुर्याच्चप्राणधारणम् ॥ वस्त्रखण्डंकौपीनंतुजातोज्योतिषासह ॥ एवंकृत्वाततस्तस्यपुत्रःसर्वंचकारयेत् ॥ आतुरस्यविधिसम्यक्दानसम्पादनादिकम् ॥ दुर्मरणेषुचसर्वेषुअब्दकृच्छ्रंसमाचरेत् ॥ समस्तान्यपिदानानिविष्णोरग्रेनिवेदयेत् ॥ वक्ष्यमाणेनविधिनाकर्तव्यमातुरस्ययत् ॥ तत्कृत्वावैष्णवंध्यानंपरमृत्योन्तरेजपेत् ॥ समुद्रंगच्छस्वाहेतिमृतंज्ञात्वाततःसुतः ॥ षड्पिण्डपूर्वकंदाहंकुर्यात्पुत्तलकस्यहि ॥ वक्ष्यमाणेनविधिनासर्वंकृत्यंसमाचरेत् ॥ दशाहान्तंदेहपिण्डान्दत्वाचतदनन्तरम् ॥ एकादशेह्नितीर्थेचपुरश्चरणपूर्वकम् ॥ दुर्मरणेषुचसर्वेषुकुर्यान्नारायणंबलिम् ॥ दाल्भ्योक्ताश्रितंसम्यक्वक्ष्यमाणविधानतः ॥ साधारणोविधिस्त्वेषउक्तोनारायणोबलिः ॥

क्रन्कर्म्म॑० ॥ १ ॥ ततोयज्ञयज्ञंगच्छेतिमन्त्रेणपुत्तलस्ययवपिष्टलेपनम् ॥ ॐयज्ञंयज्ञङ्गच्छयज्ञपतिङ्गच्छस्वांयो-
निंगच्छस्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकःसर्व्ववीरस्तंजुषस्वस्वाहा ॥ १ ॥ क्षेपकः—सद्योजा
तमितिपञ्चभिर्मन्त्रैःसर्वाङ्गानिप्रकल्पयेत् ॥ ॐसद्योजातंप्रपद्यामिसद्योजातायवैनमोनमः ॥ भवेभवेना-
तिभवेभवस्वमांभवोद्भवायनमः ॥ १ ॥ वामदेवायनमोज्येष्ठायनमःश्रेष्ठायनमोरुद्रायनमःकाला-
यनमःकलविकरणायनमोबलविकरणायनमोबलायनमोबलप्रमथनायनमःसर्वभूतदमनायन-
मोमनोन्मनायनमः ॥ २ ॥ अघोरेभ्योथघोरेभ्योघोरघोरतरेभ्यः ॥ सर्वेभ्यःसर्वसर्वेभ्योनमस्ते
अस्तुरुद्ररूपेभ्यः ॥ ३ ॥ तत्पुरुषायविद्महेमहादेवायधीमहि ॥ तन्नोरुद्रःप्रचोदयात् ॥ ४ ॥
ईशानःसर्वविद्यानामीश्वरःसर्वभूतानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेअस्तुसदाशिवोम्
॥५॥ ततःपुरुषसूक्तेनपुत्तलमभिमन्त्रयेत् ॥ ॐसहस्रशीर्षा०सन्तिदेवाः ॥ १६ ॥ ततःषष्ठ्यधिकशतत्रयपा-
लाशवृन्तानिसर्वाङ्गेषुविन्यसेत् ॥ तद्यथा—आयुष्यंवर्चस्यमितिशिरसिचत्वारिंशत् ॥४०॥ ॐआयुष्यंवर्चस्यꣳराय-
स्पोषमौद्भिदम् ॥ इदꣳहिरण्यंवर्चस्वज्जैत्रायाविशतादुमाम् ॥ १ ॥ नीलग्रीवाइतिमन्त्रेणग्रीवायांविंशतिः
॥२०॥ ॐनीलग्रीवाःशितिकण्ठादिवꣳरुद्राऽउपश्रिताःतेषा० ॥१॥ बाहूमेबलामितिमन्त्रेणबाहुद्वयेपञ्चाशत्

 



॥५०॥ ॐबाहूमेबलमिन्द्रियꣳहस्तौमेकर्म्मवीर्य्यम् ॥ आत्माक्षत्रमुरोमम ॥१॥ सप्तऋषयइतिमन्त्रेणकरयोःपञ्चाशत् ॥५०॥ॐसप्तऽऋषयꣳप्प्रतिहिताꣳशरीरेसप्तरक्षन्तिसदमप्प्रमादम् ॥ सप्तापꣳस्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥ १ ॥ सऽइषुहस्तैरितिमन्त्रेणहस्ताङ्गुलिपुदश ॥ १० ॥ ॐसऽइषुहस्तैꣳसनिषङ्गिभिर्व्वशीसꣳस्त्रष्टासयुधऽइन्द्रोगणेन ॥ सꣳसृष्टजित्सोमपाबाहुशर्द्ध्युग्रधन्वाप्प्रतिहिताभिरस्ता ॥ १ ॥ स्तीर्णम्बर्हिरितिमन्त्रेणहृदयेपञ्चाशत् ॥ ५० ॥ स्तीर्णम्बर्हिꣳसुष्टरीमाजुषाणोरुपृथुप्प्रथमानम्पृथिव्याम् ॥ देवेभिर्युक्तमदितिꣳसजोषाꣳस्योनङ्कृण्वानासुविते दधातु ॥ १ ॥ समिधाग्निमितिमन्त्रेणजठरेविंशतिः ॥ २० ॥ ॐसमिधाग्निन्दुवस्यतघृतैर्ब्बोधयतातिथिम् ॥ आस्मिन्हव्याजुहोतन ॥१॥ कयानश्चित्रेतिमन्त्रेणकटिद्वयेत्रिंशत् ॥ ३० ॥ ॐकयानश्चित्रऽआभुवदूतिसदावृधꣳसखा ॥ कयाशचिष्ठयावृता ॥ १ ॥ इमन्देवेतिमन्त्रेणऊरुद्वयेपञ्चाशत् ॥५०॥ ॐइमन्देवाऽअसपत्नꣳसुवद्ध्वम्महतेक्षत्रायमहतेज्ज्यैष्ठ्यायमहतेजानराज्ज्यायेन्द्रस्येन्द्रियाय ॥ इममुष्ष्यपुत्रममुष्ष्यैपुत्रमस्यैविशऽएषवोमीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ॥ १ ॥ प्रथमावाꣳ इतिमन्त्रेणजङ्घयोस्त्रिंशत ॥ ३० ॥ प्रथमावाꣳसरथिनासुवर्णादेवौपश्यन्तौभुवनानिविश्श्वा ॥ ।१५४।

अपिप्प्रयुश्चोदनावाम्मिमानाहोताराज्ज्योतिः प्प्रदिशादिशन्ता ॥ १ ॥ येपथामितिमन्त्रेणपादाङ्गुलिपुदश ॥ १० ॥ ॐयेपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः ॥ तेषा ँ सं० ॥१॥ ( ततोभावनार्थंमाषपिष्टेनपुनर्लेपनम् ) एवंषष्ठ्यधिकशतत्रयमितैःपालाशवृन्तैःशरीरनिर्माणंपरिकल्प्यशरीरावयवार्थंमन्त्रपूर्वंवस्तूनिविन्यसेत् ॥ तद्यथा ॥ शिरसिशिरोमेश्रीर्यशोमुखमितिमन्त्रेणनारिकेलं ॥ ॐशिरोमेश्श्रीर्य्यशोमुखन्त्विषिःकेशाश्श्चश्मश्रूणि ॥ राजामेप्प्राणोऽअमृत ँ सम्म्राट्चक्षुर्विराट्श्रोत्त्रम् ॥ १ ॥ कपोलस्थाने—ब्रह्मणस्पतेतिमन्त्रेणअलाबूः ( तुम्बिका ) ॐब्रह्मणस्पतेत्त्वमस्ययन्तासूक्तस्यबोधितनयञ्चजिन्व ॥ विश्श्वन्तद्भद्रंयदवन्तिदेवाबृहद्वदेमविदथेसुवीराः ॥ यऽइमाविश्श्वाविश्श्वकर्म्मायोनःपितान्नपतेन्नस्यनोदेहि ॥१॥ कर्णस्थाने—नमःस्रुत्यायेतिमन्त्रेणसूक्तिकाद्वयं ॥ ॐनमःस्रुत्यायचपथ्यायचनमःकाट्यायचनीप्यायचनमःकुल्यायचसरस्यायचनमोनादेयायचवैशन्तायचनमःकूप्प्याय ॥ १ ॥ नेत्रस्थाने—तच्चक्षुरितिमन्त्रेणवराटिकाद्वयं२॥ ॐतच्चक्षुर्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥ पश्येमशरदः शतञ्जीवेमशरदः शत ँ शृणुयामशरदः शतम्प्रब्रवामशरदः शतमदीनाःस्यामशरदः शतम्भूयश्चशरदः शतात् ॥ १ ॥ कनीनिकास्थाने—अग्निर्ज्योतिरितिमन्त्रेणगुञ्जाद्वयं२॥ ॐअग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः०

॥ १ ॥ भ्रकुटिस्थाने—धन्वनागाइतिमन्त्रेणकज्जलं ॥ ॐधन्न्वनागाधन्न्वनाजिञ्जयेमधन्न्वनातीव्व्राः समदोजयेम ॥ धनुःशत्रोरपकामङ्कृणोतिधन्न्वनासर्व्वाःप्प्रदिशोजयेम ॥ १ ॥ नासिकास्थाने—वातम्प्राणेनइतिमन्त्रेणशतपत्रं ॥ ॐव्वातम्प्राणेनापानेननासिकेऽउपयाममधरेणौष्ठेनसदुत्तरेणप्प्रकाशेनान्तरमनूकाशेनबाह्यन्निवेष्प्यम्मूर्ध्नास्तनयित्त्नुन्निर्ब्बाधेनाशनिम्मस्तिष्क्केणविद्युतङ्कनीनकाभ्याङ्कर्णाभ्याᳬश्रोत्रᳬश्रोत्राभ्याङ्कर्णौतेदनीमधरकण्ठेनापःशुष्ककण्ठेनचित्तम्मन्न्याभिरदितिᳬशीर्ष्णानिर्ऋतिन्निर्जर्ज्जल्ल्येनशीर्ष्णासङ्क्रोशैःप्प्राणान्न्रेष्म्माणᳬस्तुपेन ॥१॥ मुखस्थाने—विश्वतश्चक्षुरितिमन्त्रेणपत्रपुष्पम् ॥ ॐव्विश्वतश्चक्षु० ॥ १ ॥ जिह्वास्थाने—जिह्वामेभद्रमितिमन्त्रेणशर्करा ॥ ॐजिह्वामेभद्रंवाङ्महोमनोमन्न्युःस्वराड्भामः ॥ मोदाःप्प्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥१॥ दन्तस्थाने—वाचस्पतयेपवस्वेतिमन्त्रेणदाडिमफलबीजानि ॥ ॐव्वाचस्पतयेपवस्ववृष्णोऽअᳬशुभ्याङ्गभस्तिपूतः ॥ देवोदेवेभ्यःपवस्वयेषाम्भागोसि ॥ १ ॥ ओष्ठस्थाने—गायत्रीमन्त्रेणविद्रुमानि( प्रवाल ) ॥ ॐतत्सवितु० ॥ १ ॥ ग्रीवास्थाने—नीलग्रीवाइतिमन्त्रेणमूलकं ॥ ॐनीलग्ग्रीवाःशितिकण्ठाःसर्वा० ॥ १ ॥ कण्ठस्थाने—अबोध्यग्निरितिमन्त्रेणगुडः ॥ ॐअबोद्ध्यग्निःसमिधाजनानाम्प्रतिधेनुमिवायतीमुखासम् ॥

यहाऽइवप्रवयामुजिहानाःप्रभानवं॑सिस्नतेनाकमच्छ ॥१॥ स्कन्धयोः—येवृक्षेषुइतिमन्त्रेणबिल्वफले ॥ ॐयेवृक्षेषु० ॥ १ ॥ बाह्वोः—उदेषाम्बाहूइतिमन्त्रेणश्रीखण्डशकलौ ॥ ॐउदेषाम्बाहूऽअतिरमुद्वर्च्चोऽअथोबलम् ॥ क्षिणोमिब्रह्मणामित्रानुन्नयामिस्वाँ२ऽअहम् ॥ १ ॥ पृष्ठदेशे—पृष्ठीर्म्मेराष्ट्रमितिमन्त्रेणकम्बलम् ॥ ॐपृष्ठीर्म्मेराष्ट्रमुदरमᳪसौग्ग्रीवाश्चश्श्रोणी ॥ ऊरूऽअरत्नीजानुनीविशोमेङ्गानिसर्वतः ॥ १ ॥ हृदये—अग्निᳪहृदयेतिमन्त्रेणमनःशिला ॥ ॐअग्निᳪहृदयेनाशनिᳪहृदयाग्ग्रेणपशुपतिङ्कृत्स्नहृदयेनभवंय्यक्ना ॥ शर्वम्मतस्नाभ्यामीशानम्मन्युनामहादेवमन्तःपर्शव्येनोग्ग्रन्देवंव्वनिष्ठुनावसिष्ठहनुःशिङ्गीनिकोश्याभ्याम् ॥१॥ स्तनयोः—नमस्तेअस्तुइतिमन्त्रेणगोस्तनिफले—ॐनमस्तेऽअस्तुविद्युते० ॥१॥ उदरे—इन्द्रस्यक्रोडइतिमन्त्रेणताम्बूलदलानि ॥ ॐइन्द्रस्यक्रोडोदित्यैपाजस्यन्दिशाञ्जत्रवोदित्यैभसज्जीमूतान्हृदयौपसेनान्तरिक्षम्पुरीततानभऽउदर्य्येणचक्रवाकौमतस्नाभ्यान्दिवंव्वृक्काभ्याङ्गिरीन्प्लाशिभिरुपलान्प्लीन्हावल्मीकान्क्लोमभिग्ग्लौभिर्गुल्मान्हिराभिःस्रवन्तीर्ह्रदान्कुक्षिभ्याᳪसमुद्रमुदरेणवैश्वानरम्भस्मना ॥ १ ॥ नाभिस्थाने—घृतम्मिमिक्षेतिमन्त्रेणघृतं ॥ ॐघृतम्मिमिक्षे० ॥ नाभौ—नाभिर्म्मेचित्तमितिमन्त्रेणकमलककेटी ॥ ॐनाभिर्म्मेचित्तंव्विज्ञानम्पायुर्म्मेपचिति-

र्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोऽस्मिविशि राजाप्रतिष्ठितः ॥ १ ॥ रक्तस्थाने—आप्यायस्वेतिमन्त्रेणहिङ्गुलः ॥ ॐआप्यायस्वसमेतुतेविश्वतः सोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥ १ ॥ आन्त्रस्थाने—(आन्त्राणिस्नायवः) आन्त्राणिस्थालीतिमन्त्रे-णपद्मनालकः ॥ ॐआन्त्राणिस्थालीर्मधुपिन्वमानागुदाःपात्राणिसुदुघानधेनुः ॥ श्येनस्यपत्रन्न-प्लीहाशचीभिरासन्दीनाभिरुदरन्नमाता ॥ १ ॥ नासिकास्थाने—पयःपृथिव्यामितिमन्त्रेणपट्टसूत्रं ॥ ॐपयःपृथिव्यां० ॥ १ ॥ उपस्थे—अन्नात्परिश्रुतेतिमन्त्रेणगृंजनम् ॥ ॐअन्नात्परिश्रुतो० ॥ १ ॥ स्त्रीविषयेयोनिस्थाने—सरस्वतीयोन्यांगर्भेतिमन्त्रेण अश्वत्थपत्रम्——ॐसरस्वतीयोन्याङ्गर्भमन्तराश्विभ्याम्प-त्नीसुकृतम्बिभर्ति ॥ अपाᳫँरसेनवरुणोनसाम्नेन्द्रᳫँश्रियैजनयन्नप्सुराजा ॥ १ ॥ वृष-णस्थाने—मयिगृह्णामीतिमन्त्रेणवृन्ताके ॥ ॐमयिगृह्णाम्यग्रेऽअग्निᳫँरायस्पोषायसुप्रजास्त्वायसुवी-र्य्याय ॥ मामुदेवताःसचन्ताम् ॥ १ ॥ वीर्यस्थाने—वयᳫँसोमेतिमन्त्रेणपारदः ॥ ॐवयᳫँसोम० ॥१॥ ।१५६।
मूत्रस्थाने—रेतोमूत्रमितिमन्त्रेणगोमूत्रम् ॥ ॐरेतोमूत्रंविजहातियोनिम्प्रविशदिन्द्रियम् ॥ गर्भोजरा-युणावृतऽउल्बञ्जहातिजन्मना ॥ १ ॥ मेदस्थाने—हᳫँसःशुचीतिमन्त्रेणपित्तलकम् ॥ ॐहᳫँसःशुचिषद्

सुरन्तरिक्षसद्धोताविदिषदातिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ १ ॥ अमेध्यस्थाने—धूरसीतिमन्त्रेणगन्धकम् ॥ ॐधूरसि० ॥ १ ॥ कालिजस्थाने—कस्त्वासत्योमदेतिमन्त्रेणमांजिष्ठम् ॥ ॐकस्त्वासत्यो० ॥१॥ जान्वोः—मानोमहान्तइतिमन्त्रेणरक्तचंदनशकलौ ॥ ॐमानोमहान्त० ॥ १ ॥ जङ्घयो—त्रीणिपदाइतिमन्त्रेणमधुयष्टिशकलौ ॥ ॐत्रीणिपदा० ॥ १ ॥ नखस्थाने—येतीर्थानीतिमन्त्रेणखल्वाः ॥ ॐयेतीर्थानि० ॥ १ ॥ संधिषु—तदश्विनाभिषजाइतिमन्त्रेणटंकणक्षारः ॥ ॐतदश्विनाभिषजारुद्रवर्तनीसरस्वतीवयतिपेशोऽअन्तरम् ॥ अस्थिमज्जानम्मासरैःकारोतरेणदधतोगवान्त्वचि ॥ १ ॥ सर्वाङ्गेषु—हिरण्यगर्भःइतिमन्त्रेण हरितालः ॥ ॐहिरण्यगर्भः० ॥ १ ॥ केशेषु—नमोहिरण्यबाहवेतिमन्त्रेणसौकरकेशाः ॥ ॐनमोहिरण्यबाहवे० ॥ १ ॥ लोमस्थाने—लोमानिप्रयतिर्म्ममइतिमन्त्रेणऊर्णाः ॥ ॐलोमानिप्रयतिर्म्ममत्वच्मऽआनतिरागतिः ॥ माꣳसम्मऽउपनतिर्वस्वस्थि

२७ मज्जामऽआनतिः ॥ १ ॥ पुत्तलोपरिहस्तंदत्वा—पुनर्म्मनःइतिमन्त्रेणप्राणप्रवेशंभावयेत् ॥ ॐपुनर्म्मनः पुनरायुर्म्मऽआगन्पुनः प्राणःपुनरात्मामऽआगन्पुनश्चक्षुःपुनःश्रोत्रंम्मऽआगन ॥ वैश्वानरोऽअदब्धस्तनूपाऽअग्निर्नः पातुदुरितादवद्यात् ॥ १ ॥ हस्तेतिलाक्षतानादाय—मनोजूतिरितिमन्त्रेणप्राण-

प्रतिष्ठा ॥ ॐमनोजूतिर्ज्जुषता० ॥ १ ॥ इयंपुत्तलप्रकृतिःसुप्रतिष्ठितावरदाभव ॥ ततःपञ्चगव्येनप्रेतस्नपनम्
गायत्रीमन्त्रेणगोमूत्रस्नानं–ॐतत्सवितु०॥१॥ गन्धद्वारेतिगोमयस्नानं–ॐगन्धद्वारां० ॥१॥ आप्यायस्वेतिक्षी-
रस्नानं–ॐआप्यायस्व०॥१॥ दधिक्राव्णोतिदधिस्नानं ॥ ॐदधिक्राव्णो० ॥१॥ तेजोसीतिआज्यम्–ॐते-
जोसि० ॥ १ ॥ ततःपयःपृथिव्यामित्यादिभिर्मन्त्रैःपञ्चामृतस्नानम् ॥ श्वेतवस्त्रम्–सुजातोज्योतिषेतिमन्त्रेणश्वेतवस्त्र
वेष्टनम्–ॐसुजातोज्योतिषासहशर्म्मवरूथमासदत्स्वः ॥ वासोऽअग्नेविश्वरूपꣳसंव्ययस्वविभावसो ॥१॥ चंदनेनसर्वाङ्गानुलेपनम् ॥ कण्ठेतुलसीमालांप्रमुच्यदधिमधुलेपनम् ॥ गुग्गुलधूपः ॥ आज्यदीपः ॥
ततःशिरोमेश्रीरित्यनुवाकेनसर्वाङ्गेषुनियोजयेत् ॥ ॐशिरोमे० ॥ जिह्वामे० ॥ बाहूमे० ॥ पृष्ठीम्मे० ॥
नाभिर्म्मे०प्रतिष्ठितः ॥५॥ ततःशिरःप्रदेशेजलघटस्थापनम् ॥ तूर्ष्णींघटेफलमुद्राप्रक्षेपः ॥ अपेतोयन्त्वितिअध्या-
येनकलशाभिमन्त्रणम् ॥ इमम्मेतिवरुणावाहनम्–इमम्मे० ॥ कलशोदकेनपुत्तलस्याभिषेकः ॥ तत्रमन्त्राः–ॐअ-
ग्निमीले० ॥ ॐइषेत्वोर्जे० ॥ ॐअग्नआयाहि० ॥ ॐशन्नोदेवी० ॥ ॐवाचन्तेशुन्धामिप्रा-
णन्तेशुन्धामिचक्षुस्तेशुन्धामिश्रोत्रन्तेशुन्धामिनाभिन्तेशुन्धामिमेढ्रन्तेशुन्धामिपायुन्तेशुन्धा-
मिचरित्रांस्तेशुन्धामि ॥ १ ॥ मनस्तआप्यायतामितिआप्यायनंकुर्यात ॥ ॐमनस्तऽआप्यायतांवाक्तऽ

आप्यायतांप्राणस्तऽआप्यायतांचक्षुस्तऽआप्यायताꣳश्रोत्रन्तऽआप्यायताम् ॥ यत्तेक्रूरंयदा-
स्थितंतत्तऽआप्यायतांनिष्ट्यायतांतत्तेशुद्ध्यतुशमहोभ्यः ॥ ओषधेत्रायस्वस्वधितेमैनꣳहिꣳसीः
॥ १ ॥ सप्तऽऋषयइतिमन्त्रेणपुत्तलस्यनामगोत्रेप्रतिष्ठापयेत् ॥ ॐसप्तऽऋषयःप्रतिहिताःशरीरेसप्तरक्षन्ति
सदमप्रमादम् ॥ सप्तापःस्वपतोलोकमीयुस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥ १ ॥ अथ
गर्भाधानादिसंस्काराः ॥ अग्निर्ऋषिरितिमन्त्रेणअमुकगोत्रस्यगर्भाधानंपरिकल्पयामि ॥ ॐअग्निर्ऋषिःपवमानः
पाञ्चजन्यःपुरोहितः ॥ तमीमहेमहागयम् ॥ उपयामगृहीतोस्यग्नयेत्वावर्चसऽएषतेयोनिरग्नये-
त्वावर्चसे ॥ वयꣳसोमेतिमन्त्रेणपुंसवनम्—ॐवयꣳसोम० ॥ १ ॥ स्वस्तिनइन्द्रइतिमन्त्रेणसीमन्तः—ॐस्वस्ति-
नऽइन्द्रो० ॥१॥ यातेरुद्रशिवाइतिजातकर्म—ॐयातेरुद्र० ॥१॥ अग्नयेगायत्रायेतिनामधेयं—ॐअग्नयेगायत्रा-
यत्रिवृतेराथन्तरायाष्टाकपालऽइन्द्रायत्रैष्टुभायपञ्चदशायबार्हतायैकादशकपालोविश्वेभ्योदे-
वेभ्योजागतेभ्यःसप्तदशेभ्योवैरूपेभ्योद्वादशकपालोमित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशा-
भ्यांवैराजाभ्यांपयस्याबृहस्पतयेपाङ्क्तायत्रिणवायशाक्वरायचरुःसवित्रऽऔष्णिहायत्रयस्त्रिꣳशा-
यरैवतायद्वादशकपालःप्राजापत्यश्चरुरदित्यैविष्णुपत्न्यैचरुरग्नयेवैश्वानरायद्वादशकपालोनुम-

त्याऽअष्टाकपालः ॥१॥ तच्चक्षुरितिसूर्यावेक्षणं—ॐतच्चक्षुर्दे० ॥ अन्नपतेन्नस्येतिअन्नप्राशनम्—ॐअन्नपते० ॥
शिवोनामेतिचूडाकरणं—ॐशिवोनामा० ॥ भद्रंकर्णेभिरितिकर्णवेधः—भद्रंकर्णेभिः० ॥ ब्रह्मयज्ञानमितिव्रतबंधः—
ॐब्रह्मयज्ञानं० ॥ युवासुवासाइतिवस्त्रपरिधापनं—ॐयुवासुवासा०यंतः ॥ यज्ञोपवीतमितियज्ञोपवीतं—ॐ
यज्ञोपवीतं० ॥ आब्रह्मन्नितिव्रतविसर्गः—ॐआब्रह्मन्त्रा० ॥ ध्रुवासीतिविवाहः—ॐध्रुवासिध्रुवोयंयज-
मानोऽस्मिन्नायतनेप्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृथिवीपूर्य्येथामिन्द्रस्यछदिरसिविश्वज-
नस्यच्छाया ॥ प्रजापतेनेतिचतुर्थीकर्म—प्रजापतेनत्वदेतान्न्यन्योविश्वारूपाणिपरिताबभूव ॥
यत्कामास्तेजुहुमस्तन्नोऽअस्त्वयममुष्यपितासावस्यपितावयꣳस्यामपतयोरयीणां ॥ एवंयथो-
क्तंस्त्रीपुरुषपुत्तलंकृत्वापुत्तलन्यासान्समारभेत् ॥ ततःपुत्तलन्यासाः—ॐकारःसर्वत्र ॥ ॐकेशवायनमःशिखायां ॥
नारायणाय०मूर्ध्नि ॥ माधवाय०ललाटे ॥ गोविंदाय०चक्षुषोः ॥ विष्णवे०भ्रुवोर्मध्ये ॥ मधु-
सूदनाय०कर्णयोः ॥ त्रिविक्रमाय०कपोलयोः ॥ वामनाय०कर्णमूले ॥ हृषीकेशाय०उत्तरोष्ठे॥
पद्मनाभाय०अधरे ॥ दामोदराय०दंतपंक्तौ ॥ विष्णवे०जिह्वायां ॥ वैकुंठाय०कंठमध्ये ॥
अनंताय०नासिकायां ॥ पुरुषोत्तमाय०स्तनयोः ॥ पीतवाससे०बाह्वोः ॥ संकर्षणाय०दक्षि-

णकरे ॥ योगींद्राय०वामकरे ॥ राघवाय०हृदये ॥ क्षितिधराय०पृष्ठे ॥ माधवाय०पार्श्वयोः ॥ जगन्नाथाय०चक्षुर्मध्ये ॥ योगशायिने०उदरे ॥ स्वयंभुवे०गुह्ये ॥ गदाधराय० ऊर्वोः ॥ नारसिंहाय०गुल्फयोः ॥ तेजसे०पादयोः ॥ श्रीधराय०पादांगुलीषु ॥ पुण्डरीकाक्षाय०सर्वाङ्गेषु ॥ इतिन्यासाः ॥ ततःप्राणोत्क्रमणसमयेविष्णुंध्यात्वापरंमृत्योरितिमंत्रंपठेत्—ॐपरंमृत्यो० ॥ ततःआतुरं वैश्णवश्राद्धंपश्चाद्दुर्मरणनिमित्तंयथाशक्तिप्राजापत्यसंकल्पः ॥ ततःतिलपात्रादिघृतपात्रपर्यन्तानिदानानि ॥ ( अष्टौमहादानानि । यथाशक्तिअन्यान्यपिदानानि ) अतःपरंनाभौस्वल्पमात्रंदीपस्थापनं ॥ ततःपुत्तलस्यईशावास्यमित्यादिब्रह्मविद्यांश्रावयेत् ॥ दीपशमनसमयेतुलसीतिलानगृहीत्वाअसियमोइतिमन्त्रेणपुत्तलस्योपरिप्रक्षेपः—ॐअसियमोअस्यादित्योअर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसोमेनसमयाविपृक्तऽआहुस्तेत्रीणिदिविबंधनानि ॥ रामकृष्णस्मरम् ॥ ततोमृतंज्ञात्वासमुद्रंगच्छस्वाहेतिपठेत्—ॐसमुद्रंगच्छस्वाहान्तरिक्षङ्गच्छस्वाहादेवꣳसवितारङ्गच्छस्वाहामित्रावरुणौगच्छस्वाहाहोरात्रेगच्छस्वाहासोमङ्गच्छस्वाहादिव्यनभोगच्छस्वाहाग्निंवैश्वानरङ्गच्छस्वाहामनोमेहार्दियच्छादिवन्तेधूमोगच्छतुस्वज्ज्योतिः पृथिवीम्भस्मनापृणस्वाहा ॥ अत्रपुत्रःकर्त्तानेद्वपनंकुर्यात् ॥ अथषट्पिण्डाः । स्नानं अहतवस्त्रपरिधानं ॥ आचमनं । अद्यपूर्वो०

तिथौअपसव्यंअ०गोत्रस्यअ०प्रेतस्यदाहार्थंउत्क्रान्तपिण्डदानमहंकरिष्ये ॥ इतिसंकल्प्यलोकिकाग्नौ-चरुंश्रपयित्वाषट्पिण्डान्दद्यात् ॥ शेषंसर्वंसमानम् ॥ पलाशवृन्ताभावेकुशैःप्रतिकृतिंकुर्यात् ॥ ततःदशाहंदेहपूरकान्पिण्डान् दत्त्वाएकादशेह्निपुरश्चरणश्राद्धपूर्वकनारायणबलिंकृत्वाअग्रेतनएकादशाहकर्मयोग्यतावाप्तिः ॥ इतिपुत्तलविधिः ॥

॥ अथनीलोत्सर्गप्रयोगः ॥ वपनविधिः ॥ ( आदौयजमानःतीर्थेगोष्ठेवाऽन्यदेवतायतनेगत्वानीलोत्सर्गे (नीलषच्छ्राद्धे) आवश्यकान्युपहारान्संपाद्यश्राद्धभूमिंप्रकल्प्योपहारान्स्थापयेत् ॥ ततःयजमानःस्नानविधिनापूर्वोक्त-प्रकारेणस्नानविधिंकृत्वामाध्याह्निकंविधायकर्मण्यधिकारार्थंदेहशुद्ध्यर्थंसत्येशस्थापनपूजनपूर्वकंप्रायश्चित्तंचरेत् ) आच-म्यप्राणानायम्य ॥ शिखाबन्धनम् ॥ कुशपवित्रधारणम्—ॐपवित्रेस्थो० ॥ १ ॥ अद्यपूर्वो० तिथौममा त्मनःश्रुतिस्मृतिपुराणोक्तपुण्यफलप्राप्त्यर्थंकरिष्यमाणनीलोद्वाहाख्येकर्मण्यधिकारसिद्ध्यर्थं-कृच्छ्रत्रयात्मकंप्रायश्चित्तंरजतप्रत्याम्नायद्वाराअहमाचरिष्ये ॥ तेनकर्मण्यधिकारसिद्धिरस्तु ॥

१ सचनित्यःकाम्यश्च [ स्वर्गादीनामन्यतमफलप्राप्तिकामः ] कार्तिक्यांपौर्णमास्यामाश्वयुजस्यरेवत्यांशाखान्तराच्चैत्र्यामाश्वयुज्यांवा-भवति ॥ तथाचतत्सूत्रम्—कार्तिक्यांपौर्णमास्यांरेवत्यांवाश्वयुजस्येति ॥ सचगोयज्ञेनव्याख्यातः ॥ वत्सिकाऽत्रौचतस्रोद्वाबेकाभवति ॥ नकरोतिवृषोत्सर्गंसुततीर्थेनाजलाञ्जलिम् ॥ नददातिसुतोयस्तुपितुरुच्चारएवसः ॥ एष्टव्याबहवःपुत्रायद्येकोऽपिगयांव्रजेत् ॥ यजेतवाश्वमेधेन-नीलंवावृषमुत्सृजेत् ॥

इतिसङ्कल्प्य । आत्मनःशुद्ध्यर्थंसत्येशस्थापनपूर्वकपुरश्चरणाङ्गश्राद्धंप्रायश्चित्तंचरेत् ॥ तद्यथा—तंदुलैरष्टदलंकृत्वातदुपरि-कलशस्थापनम् ॥ भूरसीत्यादिभिर्मन्त्रैःपूर्णादर्वीतिपूर्णपात्रान्तंकृत्वातदुपरिस्वर्णमयींदर्भमयींवासत्येशमूर्तिंविष्णुसहितां संस्थाप्यमनोजूतिरितिमन्त्रेणप्रतिष्ठांकृत्वादेहन्यासदेवन्यासपूर्वकश्रीसत्येशस्यविष्णोःषोडशोपचारैःपूजनंविधाय ॥ पुरश्चर-णाङ्गश्राद्धंप्रायश्चित्तंचरेत् ॥ एवंप्रायश्चित्ताचरणान्तंकृत्वामुखावलोकनं ॥ स्नानं ॥ धौतेवाससीपरिधायनीलोद्वाहंकुर्यात् ॥ आचम्यप्राणानायम्य ॥ कुशपवित्रधारणम् ॥ सुमुखश्चेत्यादिपठित्वा ॥ अद्यपूर्वो० तिथौममपित्रादि-समस्तपितॄणामुद्धरणार्थंशाश्वतब्रह्मलोकावासयेगयाश्राद्धादिसमस्तफलप्राप्त्यर्थंपुत्रपौत्राद्यनव-च्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारासदभिष्टसिद्ध्यर्थंममापितुः ( मातुःवा ) ऊनाब्दिकतिथौ ( क्षयाहेऽन्यपर्वणिवा ) श्रीमहारुद्रप्रीत्यर्थंवासोपकरणैकवत्सतरीसहितंस-ग्रहमखंनीलोद्वाहाख्यंकर्मकरिष्ये ॥ इतिसङ्कल्प्यगणपतिपूजनाद्यारभ्यमातृकार्चनाभ्युदयिकश्राद्धपूर्वकंसाङ्गंस-ग्रहमखान्तंकर्मकुर्यात् ॥ ततःकर्मार्थंस्थण्डिलद्वयंकार्यम् ॥ दक्षिणस्थण्डिलेग्रहमखंकृत्वा ॥ उत्तरस्थण्डिलेवृषोत्सर्गारंभः ॥ हस्तमात्रस्थण्डिलेपञ्चभूसंस्कारान्कृत्वावृषोत्सर्गेरुद्रनामानंवह्निंस्थापयेत् ॥ ब्रह्मोपवेशनं ॥ प्रणीतायाःसक्षीरंप्रणयनं । वामे दुग्धं ॥ दक्षिणेजलं ॥ चरुद्वयंरौद्रंपौष्णंच ॥ आज्यस्थालीद्वे ॥ चरुस्थालीद्वे ॥ रुद्रचरुःतंडुलैःपायसमयःकार्यः ॥ पूषाचरुः तंडुलपिष्टेनपयोघृतजलमयःकार्यः ॥ यावच्चरुर्निष्पद्यतेतावत्स्थण्डिलादिशानकोणेरक्तवस्त्रोपरितंडुलैःपञ्चकोणमण्डलेवृष-

मातृणांवसोर्द्धारासहितानांस्थापनम् ॥ आचम्यप्राणानायम्य ॥ अद्यपूर्वो० तिथौअपसव्यंअमुकगोत्राणां अस्मत्पितृ०प्र०महानांअमुकामु० शर्मणांवसुरु०स्वरूपाणांमातृपितामहीप्रपितामहीनांअमुका-मुकदानांवसुरु०स्वरूपाणांमातामहप्र० वृ०महानांअमुकामु०शर्मणांवसुरु०स्वरूपाणांएकोद्दिष्ट ( पितृव्यकभ्रातृमातुलादि ) समस्तपूर्वजानांउद्धरणहेतवेगयाश्राद्धादिफलप्राप्त्यर्थंपितृक्षया हेमातृक्षयाहेभ्रातृक्षयाहेन्यक्षयाहेवावृषोत्सर्गाख्यकर्मप्रारंभांगनिमित्तंसव्यंनंदादिपञ्चवृषमातृ णांवसोर्द्धारासहितानांसकलशानामावाहनस्थापनप्रतिष्ठापूजनमहंकरिष्ये ॥ हस्तेअक्षतान्गृहीत्वा— ॐनन्दायैनमःनन्दांआवाहयामिस्थापयामि ॥ ॐसुमनसायै०सुमनसांआ० ॥ ॐसुभद्रायै० सुभद्रांआ० ॥ ॐसुशीलकायै०सुशीलकांआ० ॥ ॐसुरभ्यै०सुरभिंआ० ॥ ५ ॥ ततःसप्तवसो-र्द्धारास्थापनम्—ॐश्रियै०श्रियं०आ० ॥ ॐलक्ष्म्यै०लक्ष्मींआ०ॐधृत्यै०धृतिंआ० ॥ ॐमेधायै० मेधांआ० ॥ स्वाहायै०स्वाहांआ० ॥ ॐपुण्यायै०पुण्यांआ० ॥ ॐसरस्वत्यै०सरस्वतींआ० ॥ ७ ॥ इतिसप्तवसोर्द्धारास्थापनम् ॥ मातृतईशानकोणेऽक्षतपुञ्जोपरिरुद्रकुंभंभूरसीत्यादिक्रमेणपूर्णपात्रान्तंकृत्वावरुणं आवाहयेत् ॥ ॐतत्त्वांयामि० ॥१॥ ॐभूर्भुवःस्वःवरुणंसाङ्गंसपरिवारंआ०स्था०॥वरुणायनमःसर्वो०

गन्धाक्षतपुष्पाणिसमर्पयामि ॥ अतःपरंताम्रमयींरुद्रमूर्तिंकलशोपरिस्थापयेत् ॥ ॐनमः शंभवायच० ॥१॥ ॐभू०रुद्रायनमःरुद्रंआ० ॥प्रतिष्ठांकृत्वा—ॐमनोजूतिर्जुषता०प्रतिष्ठ ॥ १ ॥ इतिमन्त्रेणप्रतिष्ठाकार्या ॥ नन्दादिपञ्चवृषमातरःवसोर्द्धारासहिताःसकलशाःसुप्रतिष्ठितावरदाभवेयुः ॥ इदमत्रचन्दनं पुष्पंस० ॥ ततोनन्दादिपञ्चवृषमातृणांवसोर्द्धारासहितानांसाङ्कल्पिकश्राद्धंकुर्यात् ॥ आचमनम् ॥ नन्दादिपञ्च वृषमातरःवसोर्द्धारासहिताएतद्वःपाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽर्घः । इदमत्रचन्दनं-पुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादप्रक्षालनं ॥ आचमनं ॥ दिग्बन्धः—ऐन्द्र्यांनारायणो० ॥ इतिदिग्बन्धः ॥ अपवित्रःपवित्रोवा० ॥ यद्देवेतितिलोदककरणम्—ॐयद्देवा० ॥ १ ॥ यदिदिवा० ॥२॥ यदिजाग्रद्य० ॥ ३ ॥ इतितिलोदकंविधायउपहारान्प्रोक्षयेत् ॥ उपकल्पितनन्दादिपञ्चवृषमातृणांसाङ्कल्पश्राद्धोपार्जि-तोपहाराणांपवित्रतास्तु ॥ देशकालपाक०संपदस्तु ॥ सर्वेपाकाः०शु०भवन्तु ॥ अद्यपूर्वो०तिथौ अपसव्यंअ०गोत्रस्यअस्मत्पितुः(गोत्रायाःमातुःवा)अ०शर्मणःवृषोत्सर्गाख्यकर्मसाङ्गतासिद्ध्यर्थं रुद्रलोकफलप्राप्त्यर्थंसव्यंनन्दादिपञ्चवृषमातृणांवसोर्द्धारासहितानांसाङ्कल्पविधिनाश्राद्धमहं-

---

१ श्राद्धंसाङ्कल्पिकंकुर्यान्मातृणांवत्सदैवतम् ॥ कलशेरुद्रजापश्चवृषयज्ञस्यसिद्धये ॥

करिष्ये ॥ नन्दादिपञ्चवृषमातृणांवसोर्द्धारासहितानांआसनं ॥ नन्दादिपञ्चवृषमातृणांवसो-र्द्धारासहितानांअर्चनं ॥ अस्यार्चनविधेःसर्वंपरिपूर्णतामस्तु ॥ पञ्चदीपकाःइदमर्चितंवोज्योतिः सूर्योज्योतिःसूर्यायपुष्पं ॥ शेषोपचाराःविधिवद्भवन्तु ॥ आचमनं ॥ नन्दादिपञ्चवृषमातृभ्यः पञ्चब्राह्मणानांभोजनंतेननन्दादिपञ्चवृषमातरःप्रीयंताम् ॥ नैवेद्यार्थंपञ्चमोदकाः ॥ मुखवास ताम्बूलदक्षिणांस० ॥ सुप्रोक्षितादिकं ॥ अर्घ्यदानम्नालिकेरंगृहीत्वा—गोयज्ञोयंप्रसादाच्चभवतांवत्स-मातरः ॥ पितॄणांनिरयस्थानंभूयान्नोमुक्तिदायकाः॥ इत्यर्घ्यंस०॥ अष्टादशब्राह्मणानांवरणंवात्रयोदशानांतद-लाभेएकादशब्राह्मणानांवरणंकृत्वासर्वैःरुद्रजपःकार्यः ॥ केषाञ्चिन्मतेचत्वारःकलशाःस्थाप्याः ॥ पञ्चमोरुद्रकलशःएवं-पञ्चकलशाः ॥ ततःब्राह्मणानांवरणंकुर्यात् ॥ तेचजपार्थेकलशसन्निधावुपविश्यदर्भैःकलशंस्पृष्ट्वासूक्तानिजपेयुः ॥ पूर्व-कलशे—श्रीसूक्तं ॥ दक्षिणकलशे—विभ्राडित्यनुवाकः ॥ पश्चिमकलशे—मण्डलब्राह्मणम् ॥ उत्तरकलशे—कृणुष्वपाजः ॥ मध्यमकलशे—ऋचंवाचमितिशान्त्यध्यायः ॥ ५ ॥ रुद्रकलशे साङ्गरुद्रजपः ॥ अद्यपूर्वो०तिथौनन्दादिपञ्चवृषमातृणांसाङ्कल्पश्राद्धविधेःसर्वंपरिपूर्णमस्तु ॥ स्थण्डिलेपञ्चभूसंस्कारपूर्वकमग्निप्रतिष्ठाप्य ॥ ( अन्वाधानम्—अद्यपूर्वो० अस्मिन्वृषोत्सर्गाख्येकर्मणि-

देवतापरिग्रहार्थमन्वाधानंकरिष्ये ॥ अस्मिन्नन्वाहितेऽग्नौपूर्वेणब्रह्मणोगमनम् ॥ उत्तरतःपात्रा-
सादनं ॥ पवित्रेद्वे ॥ ताम्रमयीआज्यस्थालीद्वे ॥ ताम्रमयीचरुस्थालीद्वे ॥ पालाश्यःसमिधः
स्तिस्रः॥ प्राश्वावाघारौ ॥ समिद्धतमेआज्यभागौ ॥ पूर्णपात्रंदक्षिणांवा ॥ एतान्वैकल्पिकान्प-
दार्थानहंकरिष्ये ॥ अथदेवताभिध्यानम् ॥ अग्निंषड्वारंएकैकयाआज्याहुत्याप्रजापतिमग्निंइन्द्रं
सोमंएकैकयाआज्याहुत्या ॥ अग्निंइन्द्रंशर्वंपशुपतिंउग्रंअशनंभवंमहादेवंईशानंएकैकयापाय-
साहुत्या ॥ पूषणंपिष्टचरुणाएकाहुत्याशेषेणस्विष्टकृतमित्यादिनीलोत्सर्गाख्येकर्मण्यहंयक्ष्ये ॥ )
ततः दक्षिणतोब्रह्मासनमित्यारभ्यअर्धशृतेचरौस्रुवप्रतपनादिपूर्वकंसर्वंसमिदाधानान्तंकृत्वादक्षिणजानुनिपात्यब्रह्मान्वारब्धः
स्रुवेणहोमः ॥ इहरतीतिषण्णांमन्त्राणांदेवाऋषयःचत्वारियजूंषिद्वेउष्णिहौअग्निर्देवतावृषोत्सर्गहो
मेविनियोगः ॥ ॐइहरतिस्वाहाइदमग्नयेनमम ॥ (एवंसर्वत्र)ॐइहरमध्वं०इदम० ॥ ॐइह-
धृतिः०इदम०॥ ॐइहस्वधृतिः०इदम०॥ॐउपसृजंधरुणंमात्रेधरुणोमातरंधयन्स्वाहाइदम०॥
ॐरायस्पोषमस्मासुदीधरत्स्वाहाइदम० ॥ ततःचक्षुषीॐप्रजापतयेस्वाहाइदंप्रजापतयेनमम ॥
ॐइन्द्राय०इदं० ॥ ॐअग्नये०इदम० ॥ ॐसोमाय०इदंसो० ॥४॥ ततइन्द्रादिदशदिक्पालपूजनं ॥

अक्षतान्गृहीत्वा—ॐतदेतहचा० अवंति ॥ नीलोत्सर्गेरुद्रनामानंवह्निंआवाहयामि ॥ इदमत्रचन्दनंपुष्पंस० ॥पायसचरुहोमः ॥ ॐअग्नयेस्वाहाइदमग्नये०॥ ( यथामन्त्रत्यागः ) ॐरुद्राय०इदंरु०॥शर्वाय० इदंश० ॥ ॐपशुपतये०इदंप० ॥ ॐउग्राय०इदंउ० ॥ ॐअशनाय०इदंअ० ॥ ॐभवाय० इदंभ० ॥ ॐमहादेवाय०इदंमहा० ॥ ॐईशानाय०इदंई०॥१॥ ततःपौष्णचर्वंद्धहोमः ॥ पूषागा-अन्वेतुनइतिवामदेवऋषिबृहद्गायत्रीच्छन्दःपूषादेवतापौष्णहोमेवि० ॥ ॐपूषागाअन्वेतुनः पूषारक्षत्ववर्वतः ॥ पूषावाजꣳसनोतुनःस्वाहाइदंपूष्णे० ॥ उभयोःस्विष्टकृद्धोम. ॥ ॐअग्नयेस्विष्ट-कृतेस्वाहाइदम० ॥ ततोभूराद्यानवाहुतयः ॥ ॐभूःस्वाहाइदम० ॥ ॐभुवःस्वा०इदंवा० ॥ ॐ स्वःस्वा०इदंसु० ॥ ॐत्वन्नोऽअग्ने० ॥ इदमग्निव० ॥ ॐसत्वन्नोऽअग्ने०इदमग्नीव० ॥ ॐ अयाश्चाग्ने०इदमग्निभेषजाभ्यां० ॥ ॐयेतेशतंव० इदंवरुणायसवित्रेविष्णवेविश्वेभ्योदेवेभ्यो मरुद्भ्यःस्वर्केभ्यश्चनमम ॥ ॐउदुत्तमंव०॥ इदंवरुणायादित्यायादि० ॥ ॐप्रजापतये०इदंप्र० ॥१॥ ततःवृषवत्सतर्योरग्निसमीपमानीयस्नानंकार्यं ॥ इमारुद्रायेतिमन्त्रेणवृषस्नानम्—इमारुद्रा० ॥१॥ वत्सतरी

१ ततोवेद्यांसमानीयवृषंवत्सतरीयुतं ॥ वह्नेःपश्चिमदिग्भागेवृषंतत्रनिवेशयेत् ॥ वत्सिकादक्षिणेपार्श्वेमुखंपूर्वेसमाचरेत् ॥ [ काम्ये वृषोत्सर्गेयाकाचित्पुत्रकामासावृषस्याधस्तात्स्नानंकरोतीतिशेषः ]

रमिन्द्रमवितारमिन्द्रꣳहवेहवेसुहवꣳशूरमिन्द्रम् ॥ ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳस्वस्तिनोमघ-
वाधात्विन्द्रः ॥११॥ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्न्य-
सिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ॥ १२ ॥ वरुणःप्राविताभुवन्मित्रोवि-
श्वाभिरूतिभिः ॥ करतान्नःसुराधसः ॥ १३ ॥ सवितावरुणोदधद्यजमानायदाशुषे ॥ आदत्त
नमुचेर्वसुसुत्रामावलमिन्द्रियम् ॥१४॥ वरुणःक्षत्रमिन्द्रियम्भगेनसविताश्रियम् ॥ सुत्रामायशं-
सावलन्दधानायज्ञमाशत ॥१५॥ यद्देवा० ॥१६॥ यदीदिवा० ॥ १७ ॥ यदिजाग्रद्य० ॥ १८ ॥
शन्नोदेवी० तुनः ॥१९॥ पुनन्तुमापितरःसोम्यासःपुनन्तुमापितामहाःपुनन्तुप्रपितामहाः ॥
पवित्रेणशतायुषा ॥ पुनन्तुमापितामहाःपुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषाविश्वमायुर्व्य-
श्नवै ॥२०॥ अग्नऽआयूꣳषिपवसऽआसुवोर्ज्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम् ॥२१॥ पुन-
न्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा ॥२२॥ पवित्रेण
पुनीहिमाशुक्रेणदेवदीद्यत् ॥ अग्नेक्रत्वाक्रतूँरनु ॥२३॥ यत्तेपवित्रमर्चिष्यग्नेविततमन्तरा ॥
ब्रह्मतेनपुनातुमा ॥२४॥ पवमानःसोऽअद्यनःपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥२५॥

।१६३।

उभाभ्यान्देवसवितःपवित्रेणसवेनच ॥ माम्पुनीहिविश्वतः ॥ २६ ॥ वैश्वदेवीपुनतीदेव्यागा-
द्यस्यामिमाबह्व्यस्तन्न्वोवीतपृष्ठाः ॥ तयामदन्तःसधमादेषुवयंस्यामपतयोरयीणाम् ॥२७॥
आप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यम् ॥ भवावाजस्यसङ्गथे ॥२८॥ सन्तेपयाᳩसिसमुय-
न्तुवाजाःसंवृष्ण्यान्यभिमातिषाहः ॥ आप्यायमानोऽअमृतायसोमदिविश्रवाᳩस्युत्तमानि-
धिष्व॥२९॥ आप्यायस्वमदिन्तमसोमविश्वेभिरᳪशुभिः ॥ भवानःसप्रथस्तमःसखावृधे ॥३०॥
आतेवत्सोमनोयमत्परमाच्चित्सधस्थात् ॥ अग्नेत्वाङ्कामयागिरा ॥ ३१ ॥ तुभ्यन्ताऽअङ्गि-
रस्तमविश्वाःसुक्षितयःपृथक् ॥ अग्नेकामाययेमिरे ॥ ३२ ॥ अग्निःप्रियेषुधामसुका-
मोभूतस्यभव्यस्य ॥ सम्म्राडेकोविराजति ॥ ३३ ॥ पञ्चनद्यःसरस्वतीमपियन्तिसस्रो-
तसः ॥ सरस्वतीतुपञ्चधासोदेशेभवत्सरित् ॥ ३४ ॥ शिरोमेश्रीर्यशोमुखन्त्विषिःकेशा-
श्चश्मश्रूणी ॥ राजामेप्राणोऽअमृतᳪसम्म्राट्चक्षुर्विराट्श्रोत्रम् ॥ ३५ ॥ जिह्वामेभद्रंवाङ्महोमनो
मन्युःस्वराड्भामः॥मोदाःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः॥३६॥ बाहूमेबलमिन्द्रियᳪहस्तौमे
कर्म्मवीर्य्यम् ॥ आत्माक्षत्रमुरोमम ॥३७॥ पृष्ठीर्म्मेराष्ट्रमुदरमᳪसौग्रीवाश्चश्रोणी ॥ ऊरूऽअ-

रत्नीजानुनीविशोमेङ्गानिसर्वतः ॥३८॥ नाभिम्मेंचित्तंविज्ञानम्पायुम्मेऽपचितिर्भसत् ॥ आन-
न्दुनन्दावाण्डौमेभगःसौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मिविशिराजाप्रतिष्ठितः
॥३९॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ अश्विनोर्भैषज्येनतेजसेब्र-
ह्मवर्चसायाभिषिञ्चामिसरस्वत्यैभैषज्येनवीर्य्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रि-
यैयशसेभिषिञ्चामि ॥४०॥ देवस्यत्वा० ॥सरस्वत्यैवाचोयन्तुर्यन्त्रियेदधामिबृहस्पतेष्ट्वासाम्राज्ये-
नाभिषिञ्चाम्यसौ ॥ ४१ ॥ देवस्यत्वा०सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेःसाम्राज्येनाभिषिञ्चामि
॥ ४२ ॥ पालाशम्भवतितेनब्राह्मणोभिषिञ्चतिब्रह्मवैपलाशोब्रह्मणैवैनमेतदभिषिञ्चति ॥ ४३ ॥
सर्वेषांवाऽएषवेदानाꣳरसोयत्सामसर्वेषामेवैनमेतद्वेदानाꣳरसेनाभिषिञ्चति ॥४४॥ इत्यमृताभिषे-
कोऽस्तु ॥ अथवृषवत्सतर्योन्यांसंकुर्यात् ॥ इषेत्वेतिविन्यसेन्मूर्ध्नि–ॐइषेत्वोर्जेत्वावायवस्थदेवोवःसविताप्रा-
र्पयतुश्रेष्ठतमायकर्म्मणऽआप्यायध्वमघ्न्याऽइन्द्रायभागम्प्रजावतीरनमीवाऽअयक्ष्मामावस्ते-
नऽईशतमाघशꣳसोध्रुवाऽअस्मिन्गोपतौस्यातबह्वीर्यजमानस्यपशून्पाहि ॥ १ ॥ इमारुद्रायेति
त्रिशूलके–ॐइमारुद्रायतवसेकपर्दिनेक्षयद्वीरायप्रभरामहेमतीः॥ यथाशमसद्द्विपदेचतुष्पदेविश्वं-

।१६४।

ष्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥२॥ नमस्तेरुद्रमन्यवइतिचक्रे—ॐनमस्तेरुद्रमन्यवऽउतोतऽइषवेनमः ॥
बाहुभ्यामुततेनमः ॥३॥ गोमदूषुणेतिललाटे ॐगोमदूषुणासत्याश्वावद्यातमश्विना ॥ वर्तिरुद्रानृ-
पाय्यम् ॥ ४ ॥ विभ्राडितिनेत्रयोः—ॐविभ्राड्बृहत्पिबतुसोम्यम्मध्वायुर्दधद्यज्ञपतावविहुतम् ॥
वातजूतोयोऽअभिरक्षतित्मनाप्रजाःपुपोषपुरुधाविराजति ॥५॥ भद्रङ्कर्णेभिरितिकर्णयोः—ॐभद्रङ्क-
र्णेभिःशृणुयामदेवाभद्रम्पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेमहिदेवहि-
तँयदायुः ॥६॥ प्राणदाइतिनासायाम्—ॐप्राणदाऽअपानदाव्यानदावर्च्चोदावरिवोदाः ॥ अन्यां-
स्तेऽअस्मत्तपन्तुहेतयःपावकोऽअस्मभ्यंशिवोभव ॥७॥ अवतत्यधनुरितिमुखे—ॐअवतत्यधनुष्ट्वं
सहस्राक्षशतेषुधे ॥ निशीर्यशल्यानाम्मुखाशिवोनःसुमनाभव ॥८॥ जिह्वामेइतिजिह्वायाम्—ॐजिह्वा-
मेभद्रंवाङ्महोमनोमन्युःस्वराड्भामः ॥ मोदाःप्रमोदाऽअङ्गुलीरङ्गानिमित्रम्मेसहः ॥ ९ ॥
नीलग्रीवाइतिकण्ठे—ॐनीलग्रीवाःशितिकण्ठादिवंरुद्राऽउपश्रिताः ॥ तेषाँसहस्रयोजनेवधन्वा-
नितन्मसि ॥१०॥ मर्माणीतिबाहुमध्यतः—ॐमर्म्माणितेवर्म्मणाच्छादयामिसोमस्त्वाराजामृतेना-
नुवस्ताम् ॥ उरोर्वरीयोवरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ ११ ॥ समिधाग्निमितिबाह्वोः—

ॐसमिधाग्निन्दुवस्यतघृतैर्ब्बोधयतातिथिम् ॥ आस्मिन्न्हव्याजुहोतन ॥ १२ ॥ सप्तऋषयइति
स्कन्धे—ॐसप्तऽऋषयःप्रतिहिताःशरीरेसप्तरक्षन्तिसदमप्रमादम् ॥ सप्तापःस्वपतोलोकमीं-
युस्तत्रजागृतोऽअस्वप्नजौसत्रसदौचदेवौ ॥१३॥ नमोवःकिरिकेभ्यइतिहृदि—ॐनमोवःकिरिकेभ्योदे-
वानाᳫहृदयेभ्योनमोविचिन्न्वत्केभ्योनमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः ॥ १४ ॥ नाभिर्म्मे
इतिनाभौ—ॐनाभिर्म्मेचित्तंविज्ञानम्पायुर्म्मेपचितिर्भसत् ॥ आनन्दनन्दावाण्डौमेभगःसौभाग्य-
म्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मिविशिराजाप्रतिष्ठितः ॥१५॥ उदुत्यञ्जातवेदसमितिजङ्घयोर्द्वयोः—
ॐउदुत्यञ्जातवेदसꣳसूर्य्यम् ॥ १६ ॥ इमारुद्रायेतिजान्वोः—ॐइमारुद्रायतवसेकपर्द्दिनेक्षयद्वीराय-
प्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअस्मिन्ननातुरम् ॥१७॥ परितइति
ऊर्वोः—ॐपरितेदूडभोरथोस्माँ२अश्नोतुविश्वतः ॥ येनरक्षसिदाशुषः ॥१८॥ इमम्मेइतिपृष्ठे—ॐइ-
मम्मेवरुणश्रुधी०॥१९॥सितासितेइतिपुच्छाग्रे-सितासितेसरितेयत्रसङ्गतेतत्राप्लुतासोदिवमुत्पतन्ते॥
येवैतन्वंविसृजन्तिधीरास्तेवैजनासोऽअमृतत्वंभजन्ते ॥२०॥ योऽअग्निरितिकट्याम्—ॐयोऽअग्निः
कव्यवाहनःपितॄन्न्यक्षदृतावृधः ॥ प्रेदुहव्यानिवोचतिदेवेभ्यश्चपितृभ्यऽआ ॥२१॥ रक्षोहणमिति

गुदे—ॐरक्षोहणम्वलगहनंवैष्णवीमिदमहन्तंवलगमुत्किरामियम्मोनिष्ट्योयममात्योनिचखाने-
दमहन्तंवलगमुत्किरामियम्मैसमानोयमसमानोनिचखानेदमहन्तंवलगमुत्किरामियम्मेसबन्धु-
र्यमसबन्धुर्न्निचखानेदमहन्तंवलगमुत्किरामियम्मैसजातोयमसजातोनिचखानोत्कृत्याङ्किरा-
मि ॥ २२ ॥ युञ्जतइतिहृदि—ॐयुञ्जतेमनऽउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥
विहोत्रादधेवयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिःस्वाहा ॥ २३ ॥ नमोरोहितायेतिसर्वरोमेषु—
ॐनमोरोहितायस्थपतयेवृक्षाणाम्पतयेनमोनमोभुवन्तयेवारिवस्कृतायौषधीनाम्पतयेनमोन-
मोमन्त्रिणेवाणिजायकक्षाणाम्पतयेनमोनमऽउच्चैर्घोषायाक्रन्दयतेपत्तीनाम्पतयेनमः ॥ २४ ॥
( एवंन्यासविधिंकृत्वारुद्ररूपोवृषोहिसः ) ततःवृषपूजनम्—तीक्ष्णशृङ्गायविद्महेवेदपादायधीमहि ॥ तन्नो
वृषःप्रचोदयात् ॥ १ ॥ ततोवत्सतरीन्यासाः—ब्रह्मणेनमःशिरसि ॥ पृथिव्यैनमःपार्श्वयोः ॥
स्कंदाय०उरसि ॥ रुद्राय० ललाटे ॥ दिग्भ्यो०कर्णयोः ॥ अश्विनीकुमाराभ्यां० कर्ण-
मूले ॥ देवेभ्यो० कर्णमध्ये ॥ शशिभास्कराभ्यां० चक्षुषोः ॥ मरुद्गणेभ्यो० दन्तेषु ॥ सर-
स्वत्यै०जिह्वायां ॥ मेरुमन्दराभ्यां०शृङ्गयोः ॥ सर्वतीर्थेभ्यो०अपाने ॥ जाह्नव्यै०प्रस्रावे ॥

ऋषिभ्यो० रोमकूपेषु ॥ यमाय० पृष्ठे ॥ धनदाय० दक्षिणकुक्षौ ॥ वरुणाय० वामकुक्षौ ॥ यक्षेभ्यो०
खुरमध्ये ॥ गन्धर्वेभ्यो० खुराग्रे ॥ अप्सरोगणेभ्यो० खुराणांपार्श्वेषु ॥ लक्ष्म्यै० गोमये ॥ चतुर्वे-
देभ्यो० हुंकारे ॥ प्रजापतये० हुंशब्दे ॥ क्षीरसमुद्राय० स्तनेषु ॥ ॐ जातवेदसेसुनवामसोमम-
रातियतोनिजहातिवेदः॥ सनपर्षदतिदुर्गाणिविश्वानावेवसिन्धुंदुरितात्यग्निःइतिसर्वाङ्गे॥ इन्द्रा
दिदशदिक्पालेभ्यो० ॥ कामधेन्वै०॥ बहुलायै०॥ सुरभ्यै० ॥ गौर्यै० नन्दिन्यै० ॥ (एवंन्यास
विधिंकृत्वापार्वत्याचसमाहिसा ) अथवृषवत्सतर्योःपूजनम् ॥ वृषप्रार्थना—धर्मस्त्वंवृषरूपेणगवामानन्दका-
रक ॥ अष्टमूर्तेरधिष्ठानमतःपाहिसनातन ॥ १ ॥ वृषोहिभगवान्धर्मश्चतुष्पादःप्रकीर्तितः ॥
नमामित्वांमहाभक्त्यासमारक्षतुसर्वदा ॥२॥ नमोवृषभदेवेशभूतर्षिपितृपोषक ॥ त्वयायुक्ताः
शिवालोकाःपूर्वजामेनिरामयाः ॥ ३ ॥ वृषभस्यदक्षिणकर्णेजपः—ॐ तीक्ष्णशृङ्गायविद्महेवेदपादायधी-
महि ॥ तन्नोवृषःप्रचोदयात् ॥१॥ वृषप्रार्थना—ॐ पितानोसिपितानोबोधिनमस्तेऽअस्तुमामाहिꣳ
सीः ॥ त्वष्ट्रमन्तस्त्वासपेमपुत्रान्पशून्मयिधेहि ॥ प्रजामस्मासुधेह्यरिष्टाहꣳसहपत्याभूयासम्
॥१॥ वामसत्वसवितर्वामसुश्वोदिवेदिवेवाममस्मभ्यꣳसावीः ॥ वामस्यहिक्षयस्यदेवभूरेरयाधि-

यावांसभाजं स्याम ॥ २ ॥ इतिवृषप्रार्थना ॥ अथ वत्सतरीप्रार्थना—गावोममाग्रतःसन्तुगावोमेसन्तु पृष्ठतः ॥ गावोमेहृदयेसन्तुगवांमध्येवसाम्यहम् ॥१॥ पञ्चगावःसमुत्पन्नामथ्यमानेमहोदधौ ॥ तासांमध्येतुयानन्दातस्यैधेन्वैनमोनमः ॥ २ ॥ अदितिर्देवमाताचवेदमाताह्यधीश्वरी ॥ धेनु-रूपेणसादेवीममपापंव्यपोहतु ॥ ३ ॥ क्षीरोदार्णवसम्भूतेयज्ञार्थंयज्ञहेतवे ॥ पूजार्थंसर्वदेवानां नमामित्वांप्रसीदमे ॥ ४ ॥ यालक्ष्मीःसर्वभूतानांयाचदेवेव्यवस्थिता ॥ धेनुरूपेणसादेवीमम पापंव्यपोहतु ॥ ५ ॥ धर्मांग्राचैवसंभूतास्वाहापुण्याविभावसोः ॥ धेनुरूपेणसादेवीममपापंव्य-पोहतु ॥६॥ इतिवत्सतरीप्रार्थना ॥ वृषभस्यमधुपर्केणार्चनम् ॥ ततोवृषस्यवामभागेभुवोयज्ञस्येतिमन्त्रेणाष्टाङ्गुलंच-क्रंलिखेत्—ॐभुवोयज्ञस्यरजसश्चनेतायत्रानियुद्भिःसचंसेशिवाभिः ॥ दिविमूर्द्धानंदधिषेस्वर्षां जिह्वामग्नेचकृषेहव्यवाहम् ॥ १ ॥ दक्षिणेत्रिशूलंद्वादशाङ्गुलम्—ॐसहस्रस्यप्रमासिसहस्रस्यप्रति-मासिसहस्रस्योन्मासिसाहस्रोसिसहस्रायत्वा ॥ २ ॥ ततःवृषवत्सतर्योर्वस्त्रालङ्कारान्दद्यात् ॥ तद्यथा—सुवर्णशृङ्गारावलङ्करणंश्वेतवस्त्रवेष्टनंवृषस्यकण्ठेपदंघण्टाबन्धनंच ॥ पार्श्वयोश्चामरं, वत्सतरीकण्ठेअष्टसौभाग्यम्, कौसुं-भवस्त्रेणाच्छादनं, उभयोर्मदनफलबन्धनमिति ॥ ततःवेद्यामुत्तरतोनीत्वावृषंप्राङ्मुखंस्वयंचोदङ्मुखःसन्मधुपर्केणार्चयेत् ॥

अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअस्मत्पितुःअ० शर्मणःप्रथमक्ष-
आचम्यप्राणानायम्य ॥
याहेनीलोद्वाहाख्यकर्मसा० सिद्ध्यर्थंसव्यंनीलकण्ठस्वरूपिणःवृषभस्यमधुपर्कविधिनापूजनम-
हंकरिष्ये ॥ ततोदाताकृताञ्जलिपुटःसन्पठेत्—ॐषडर्घ्या० र्याह ॥ साधुआस्ताम्, अर्चयिष्यामोभवन्तम् ॥ अर्च-
येतिअन्यःकश्चिद्वृषस्यप्रतिनिधिर्वदेत् ॥ विष्टरंगृहीत्वा—ॐविष्टरोविष्टरोविष्टरः । प्रतिगृह्यतामितियजमानः ॥
वृषस्यप्रतिनिधिःकश्चित्प्रतिगृह्णामीत्युक्त्वाविष्टरोपरिवृषमुपवेशयेत्—ॐवर्ष्मोऽस्मि० इतिएनमभ्युपविशति ॥ पादार्थमुद
कमितित्रिःप्रैषः । प्रतिगृ० । प्रतिगृ० ॥ सव्यंपादंप्रक्षाल्यदक्षिणंप्रक्षालयति, ब्राह्मणश्चेद्दक्षिणं
प्रथमम् । ॐविराजो० इतिमन्त्रेणवृषस्यपादप्रक्षालनम् ॥ द्वितीयोविष्टरःत्रिरुच्चार्य, प्रतिगृ०। प्रतिगृ०
ॐवर्ष्मोऽस्मि० इतिद्वितीयविष्टरंवृषपादतलेनिधायतदुपरिपादौसंस्थापयेत् ॥ ततःकांस्यपात्रेपत्रपुटेवाजलगन्धाक्षतादि-
फलपुष्पद्रव्यपूरितमर्घ्यंगृहीत्वाअर्घइतित्रिरुच्चार्य प्रतिगृ० प्रतिगृ०—ॐआपस्थयु० इतिशिरसार्घवन्दनंकृत्वानिन-
यन्नभिमन्त्रयते—ॐसमुद्रंवःप्रहिणोमि० चिमत्पयः ॥ आचमनीयमितित्रिवारमुदीर्य—प्रतिगृ० प्रतिगृ०—
ॐआमागन्यशसा० इतिसकृदाचमनम् ॥ ततोमधुपर्कः ॥ ( कांस्यपात्रेदधिमधुघृतमेकीकृत्यतदपरेणकांस्यपात्रे-
णापिहितंमधुपर्कशब्देनाभिधीयते ) मधुपर्कः, इतित्रिःप्रैषंकृत्वा प्रतिगृ० प्रतिगृ०—मित्रस्यत्वेतिप्रतीक्षणं—ॐ

मित्रस्यत्वा० ॥ देवस्यत्वेतिप्रतिगृह्णाति—ॐदेवस्यत्वा० ॥ १ ॥ सव्येपाणौकृत्वादक्षिणस्यानामिकया
त्रिःप्रयौति, मधुपर्कंत्रिःप्रदक्षिणमालोडयति—ॐनमस्यावाश्याया० ॥ ततःअनामिकाङ्गुष्ठेनचमधुपर्कैकदेशंप्रागुद-
ग्वाक्षिपतिसकृत् ॥ पुनरेवंद्विवारमालोडनंक्षेपणंचकरोति ॥ ततस्तंप्राश्नाति—यन्मधुनो० ॥ मधुवाता० ॥ यन्म-
धुनो० ॥ मधुनक्तमुतो० ॥ यन्मधुनो० ॥ मधुमान्नो० ॥ एवमेववारत्रयंप्राश्यपुत्रायान्तेवासिनेवोत्तर-
तआसीनायोच्छिष्टंदद्यात्सर्वंवाप्रा०प्रा०वासंचरेनिनयेत् ॥ आचम्य ॥ वामहस्तेजलंदद्यात् ॥ अङ्ग-
न्यासंकुर्यात्—ॐप्राणान्संमृशति ॥ ॐवाङ्मआस्ये० ॥ नसोर्मेप्राणो० ॥ ॐअक्ष्णोर्मे०चक्षु० ॥
ॐकर्णयोर्मेश्रोत्र० ॥ ॐबाह्वोर्मेबल० ॥ ॐऊर्वोर्मेओजो० ॥ ॐअरिष्टानिमे०सन्तु ॥ इतिशिरः-
प्रभृतिपादान्तानिसर्वाङ्गान्युभाभ्यांहस्ताभ्यामालभेत ॥ ततोगामानीयगौरितित्रिरुच्चार्य प्रतिगृ० ॥ प्रतिगृ० ॐमा-
तारुद्राणां०पाप्माहतः, ॐइतिउपांशुउत्सृजततृणानिअत्तुइत्युक्तेगांद्रव्यंवोत्सृजेत् ॥ नत्वेवामा९ंसो०इतिश्रुतेः
इतिमधुपर्कः ॥ वृषवत्सतर्योःपरिधानार्थंयथावैभववस्त्रादिभूषणानिदद्यात् ॥ अथवत्सतरीदानप्रयोगः ॥ आचम्यप्रा-
णानायम्य ॥ गणपतिस्मरणंकृत्वा वाचनिकश्राद्धंकुर्यात् ॥ रुद्रस्वरूपिणेवृषभायपाद्यं०, गौरीस्वरूपायैव-
त्सतर्यैपाद्यंपादावनेजनंपादप्र० ॥ इदमत्रचन्दनंपुष्पं ॥ पादार्घोदकनिक्षेपःस्वपादप्रक्षालनंआचमनंदि-

इतिमन्त्रेणदिग्बन्धः ॥ यद्देवेतित्रिभिर्मन्त्रैस्तिलोदकंविधाय ॥ उपहारप्रोक्षणं
बन्धः—ॐस्वस्तिनऽइन्द्रो० ॥ देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ सर्वोपहाराःशुचयो
कुर्यात् ॥ उपकल्पितवत्सतरीदानाङ्गोपहाराणांपवित्रतास्तु ॥
भवन्तु ॥ अद्येत्यादि०अपसव्यंगोत्रस्य अस्मत्पितुःअमुकशर्मणःप्रथमक्षयाहेनीलोद्वाहाख्यकर्म-
साङ्गतासिद्ध्यर्थंसव्यंवत्सतरीदाननिमित्तंसाङ्कल्पविधिनाश्राद्धमहंकरिष्ये ॥ रुद्रस्वरूपिणे
वृषभायइदमासनं ॥ गौरीस्वरूपायैवत्सतर्यैइदमासनं ॥ रुद्रस्वरूपिणेवृषभायअर्चनं ॥ गौरी-
स्वरूपायैवत्सतर्यैअर्चनं ॥ चतुर्भ्योमंगलपाठकेभ्योअर्चनं ॥ अस्यार्चनविधेःसर्वपरिपूर्ण-
मस्तु ॥ इदमर्चितंवोज्योतिःसूर्योज्योतिःसूर्यायपुष्पं ॥ शेषोपचाराःसंपूर्णाविधिवद्भवन्तु ॥
आचमनं ॥ रुद्रस्वरूपिणेवृषभायभोजनं ॥ गौरीस्वरूपायैवत्सतर्यैभोजनं ॥ भोजनस्थानेगोग्रासं
दद्यात् ॥ ततःपुप्रोक्षितंवृषभस्यदक्षिणेखुरेकृत्वा ॥ अद्येत्यादि०अपसव्यंअमुकगोत्रस्यअस्मत्पितुःअमुक-
शर्मणःप्रथमक्षयाहेनीलोद्वाहाख्यकर्मसाङ्गतासिद्ध्यर्थंरुद्रलोकफलप्राप्त्यर्थंपरलोकेअतितीव्रवे-
दनापहरणार्थंकुंभीपाकादिसमस्तनरकपतनभयनिवृत्त्यर्थंतथाचएकोत्तरशतपूर्वजानामुद्धरणहे-
तवेधर्मपरंपरावृद्धयेसव्यंइमांवत्सतरींसुवर्णशृङ्गींरौप्यखुरींताम्रपृष्ठांकांस्यपात्रोपदोहांघंटाभ-

रणभूषितांश्वेतमाल्यानुलेपनांकौसुंभवस्त्रयुगच्छन्नांमौक्तिकमालालंकृतांप्रवालेक्षणांसुवर्णमौ-
क्तिकपरिवृतमुकुरांऋग्वेदमुखींयजुर्वेदपादांसामवेदशिरस्कांअथर्वणसहितांइतिहासपुराणन्या-
यमीमांसाधर्मशास्त्रसहितांशृंगाग्रेभूरादिसप्तलोकधारिणींरोमकूपेषुअष्टाशीतिवालखिल्यपरिवृ-
तांकुक्षौसप्तसमुद्रांअक्ष्णोः शशिसूर्यदैवतांघ्राणेसाश्विनीकुमारांखुराग्रेसप्तपातालांस्वाहाकारवष
ट्कारहंकारतंकारस्वधाकारचतुःस्तनींऋग्वेदयजुर्वेदसामवेदाथर्ववेददैवतांरुद्राणांमातरंवसूनांदु-
हितरंआदित्यानांस्वसारंअमृतस्यनाभिंलांगूलेपितृदैवतांकामधेनुकुलोद्भवांआङ्गिरसगोत्रांआङ्गि
रसबार्हस्पत्यभारद्वाजेतित्रिप्रवरांसर्ववेदमयींअस्याष्टमैथुनगर्भधारणयोग्यांसारूप्यसायुज्यसा-
न्निध्यसालोक्यादिचतुर्विधमुक्तिरूपांसुवर्णशृंगादियथोपपन्नोपस्करैरलंकृतांरुद्रदैवतांइमांवत्स-
तरींतीक्ष्णशृंगायवेदपादायसुवर्णशृंगादियथोपपन्नोपस्करैरलंकृतायकंठावलंबितपादायमधुपर्के-
२८ णपूजितायनीलकंठस्वरूपिणेवरायवृषभायशास्त्रोक्तफलप्राप्तिकामःतुभ्यमहंसंप्रददेतेननीलकं-
ठस्वरूपीभगवान्वृषभःप्रीयताम्॥स्वस्ति॥ॐरुद्रायत्वामह्यम्वरुणोददातुसोमृतत्वमशीयप्राणो-
दात्रऽएधिमयोमह्यम्प्रतिगृहीत्रे॥१॥कोदात्कस्मादात्कामोदात्कामायादात्॥ कामोदाताकामः-प्र

तिगृहीताकामैतत्ते॥२॥सर्वान्मन्त्रानाचार्यःपठेत्॥अथपूर्वो॰वत्सतरीदानविधौयन्न्यूनातिरिक्तंतत्सर्वंभ
वतांब्राह्मणानांवचनात्सर्वंपरिपूर्णमस्तु॥अथवृषवत्सतर्योःचत्वारिआग्नेयपरिभ्रमणानि॥ आशुःशिशानइत्यनुवा
केनभ्रामयेत्॥ततोयवतिलमिश्रलाजानामाहुतिचतुष्टयंदातव्यं ॥प्रतिमङ्गलमेकैकाहुतिः ॥ॐब्रह्मणे॰इदंब्रह्मणे॰यथा-
दैवतत्यागः॥ विष्णवे॰इ॰वि॰॥रुद्राय॰इ॰रु॰॥सर्वेभ्योदेवेभ्यःस्वाहाइदंसर्वेभ्योदेवेभ्योनमम ॥४॥
ॐपित्राप्रत्तामादायगृहीत्वानिष्क्रामतिग्रदैषिमनसादूरंदिशोऽनुपवमानोवा॥ हिरण्यपर्णोवैकर्णः
सत्वामन्मनसांकरोत्वित्यसावित्यथैनौसमीक्षयतिअघोरचक्षुरपतिघ्न्येधिशिवापशुभ्यःसुमनाः
सुवर्चाः।वीरसूर्देवकामास्योनाशन्नोभवद्विपदेशंचतुष्पदे। सोमःप्रथमोविविदेगंधर्वोविविद उत्तरः।

१ मत्स्यपुराणेनीलोत्सर्गविधौ–प्रमाणंतत्रैव । ततोवेद्यांसमानीयेत्यादि॰ ॥ अत्रनीलोद्वाहेविवाहविधिनावृषमुत्सृजेदित्युक्तेविवाहक-
र्माहुतयोऽपिहोतव्याः इतिकेचित् ॥ ( तथाचबृहद्गारुडे–वत्संवत्सींसमानाय्यवध्नीयात्कङ्कणंतयोः ॥ वैवाहेनविधानेनस्तंभमारोपयेत्तदा
इतिसर्वंवक्ष्यमाणंतत्रलभ्यते ॥ तथाचवृषोत्सर्गकण्डिकाभाष्येविश्वनाथेनाप्युक्तंअस्मिन्नवसरेवैवाहिकंहोमंप्राहामितीन्छन्दयेकेइति ) । होमपक्षे
सर्वप्रायश्चित्तप्राज्यापत्यान्तरविवाहः इतिवचनात् ॥ अत्रहोमावसरः । तत्रराष्ट्रभृज्जयाभ्यातानहोमादिकृत्वालाजाहोमपरिक्रमणान्तंकुर्यात् ॥
तत्रपरिक्रमणचतुष्टयंवृषवत्सतर्योः ॥ होममंत्राआचार्यस्यैवतत्रलाजाहुतौमन्त्रविशेषपाठः ॥ ब्रह्मणेस्वाहेत्यादियथाक्रमंपरिक्रमणचतुष्टयं
कार्यम् ॥ ततोऽभिषेकः–ॐआपःशिवा॰ ॥

।१६९।

तृतीयोअग्निष्टेपतिस्तुरीयस्तेमनुष्यजाः। सोमोददद्गन्धर्वायगन्धर्वोददद्ग्नये ॥ रयिंचपुत्रांश्चा-
दादग्निर्मह्यमथोइमाम् । सानःपूषाशिवतमामैरयसानऊरूउशतीविहर ॥ यस्यामुशन्तःप्रहरा-
मशेपंयस्यामुकामाबहवोनिविष्टयाइति ॥ ततःआचार्योध्रुपबत्सतयोरग्निप्रदक्षिणंकारयित्वा । अग्नेःपश्चात्सं-
स्थाप्यआधारावाज्यभागौमहाव्याहृतीश्चसर्वप्रायश्चित्तंब्रह्मान्वारब्धःस्रुवेणजुहुयात् ॥ तद्यथा—ॐमनःप्रजापतये
स्वाहाइदं० ॥१॥ ॐइन्द्रायस्वाहाइदं० ॥२॥ ॐअग्नयेस्वाहाइदंअ० ॥ ३ ॥ ॐसोमायस्वाहा
इदंसो० ॥४॥ दशदिक्पतिपूजनंबलिदानंच ॥ तदेतदृचाभ्युक्तं० अवंति ॥ विवाहेयोजकनाम्नेवैश्वा-
नरायनमःआवाहयामिइदमत्रचन्दनंपुष्पम् ॥ ॐभूरित्यादिनवाहुतयः ॥ ९ ॥ अथराष्ट्रभृद्धोमः ॥
ॐऋताषाडृतधामाग्निर्गन्धर्वःसनऽइदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् । इदमृताषाहेऋतधाम्ने
अग्नयेगन्धर्वायनमम ॥१॥ ॐऋताषाडृतधामाग्निर्गन्धर्वस्तस्यौषधयोऽप्सरसोमुदोनामताभ्यः
स्वाहा । इदमोषधीभ्योप्सरोभ्योमुद्भ्योनमम ॥ २ ॥ ॐसꣳहितोविश्वसामासूर्योगन्धर्वःसनऽ
इदंब्रह्मक्षत्रंपातुतस्मैस्वाहावाट् । इदंसꣳहितायविश्वसाम्नेसूर्यायगन्धर्वायनमम ॥३॥ ॐसꣳ
हितोविश्वसामासूर्योगन्धर्वस्तस्यमरीचयोप्सरसऽआयुवोनामताभ्यःस्वाहा । इदंमरीचिभ्यो

ॐसुषुम्णःसूर्यरश्मिश्चन्द्रमागन्धर्वःसनऽइदंब्र०वाद् ॥ इदंसु-
प्सरोभ्यआयुभ्योनमम ॥ ४ ॥ ॐसुषुम्णःसूर्यरश्मिश्चन्द्रमागन्धर्वस्तस्य
षुम्णायसूर्यरश्मयेचन्द्रमसेगन्धर्वायनमम ॥ ५ ॥
नक्षत्राण्यप्सरसोभेकुरयोनामताभ्यःस्वाहा । इदंनक्षत्रेभ्योप्सरोभ्योभेकुरीभ्योनमम ॥ ६ ॥
ॐइषिरोविश्वव्यचावातोगन्धर्वःसनऽइदंब्र० । इदमिषिरायविश्वव्यचसेवातायगन्धर्वायनमम
॥ ७ ॥ ॐइषिरोविश्वव्यचावातोगन्धर्वस्तस्यापोप्सरसऽऊर्ज्जोनामताभ्यःस्वाहा ॥ इदमद्भ्योऽ-
प्सरोभ्यऽऊर्ग्भ्योनमम ॥ ८ ॥ ॐभुज्युःसुपर्णोयज्ञोगन्धर्वःसनऽइदंब्र० ॥ इदंभुज्यवेसुपर्णा-
ययज्ञायगन्धर्वायनमम ॥ ९ ॥ ॐभुज्युःसुपर्णोयज्ञोगन्धर्वस्तस्यदक्षिणाऽप्सरसस्तावानाम-
मताभ्यःस्वाहा । इदंदक्षिणाभ्योप्सरोभ्यस्तावाभ्योनमम ॥ १० ॥ ॐप्रजापतिर्विश्वकर्मा
मनोगन्धर्वःसनऽइदंब्र० । इदंप्रजापतयेविश्वकर्मणेमनसेगन्धर्वायनमम ॥ ११ ॥ ॐप्रजा-
पतिर्विश्वकर्मामनोगन्धर्वस्तस्यऋक्सामान्यप्सरसऽएष्टयोनामताभ्यःस्वाहा । इदमृक्साम-
भ्योप्सरोभ्यएष्टिभ्योनमम॥१२॥ अथजयाहोमः ॥ ॐचित्तंचस्वाहाइदंचित्तायनमम ॥१॥ ॐचि-
त्तिश्चस्वाहाइदंचित्यैनमः ॥ २ ॥ ॐआकूतंचस्वाहाइदमाकूतायनमम ॥ ३ ॥ ॐआकूतिश्च

स्वाहाइदमाकूत्यै० ॥ ४ ॥ ॐविज्ञातंचस्वाहाइदंविज्ञाताय० ॥ ५ ॥ ॐविज्ञातिश्चस्वाहाइदं
विज्ञात्यै० ॥ ६ ॥ ॐमनश्चस्वाहाइदंमनसे० ॥ ७ ॥ ॐशकर्यश्चस्वाहाइदंशकरीभ्यो० ॥ ८ ॥
ॐदर्शश्चस्वाहाइदंदर्शाय० ॥ ९ ॥ ॐपौर्णमासंचस्वाहाइदंपौर्णमासाय० ॥ १० ॥ ॐबृहच्च
स्वाहाइदंबृहते० ॥ ११ ॥ ॐरथंतरंचस्वाहाइदंरथंतराय० ॥ १२ ॥ ॐप्रजापतिर्जयानिन्द्राय
वृष्णेप्रायच्छदुग्रः पृतनाजयेषु ॥ तस्मैविशःसमनमन्तःसर्वाःसउग्रःसऽइहव्योबभूवस्वाहा। इदं
प्रजापतयेजयानिन्द्रायनमम ॥ १३ ॥ अथाभ्यातानहोमः ॥ ॐअग्निर्भूतानामधिपतिःसमावत्व-
स्मिन्ब्रह्मण्यस्मिन्क्षत्रेस्यामाशिष्यस्याम्पुरोधायामस्मिन्कर्मण्यस्यांदेवहूत्या९स्वाहा। इदमग्नये
भूतानामधिपतयेनमम ॥ १ ॥ ॐइन्द्रोज्येष्ठानामधिपतिःसमावत्वस्मिन्ब्रह्मण्य०स्वाहा ॥
इदमिन्द्रायज्येष्ठानामधिपतयेनमम ॥ २ ॥ पूर्वस्यांदिशित्यागः ॥ ॐयमःपृथिव्याअधिपतिःसमा-
वत्वस्मिन्ब्रह्मण्य०स्वाहा ॥ इदंयमायपृथिव्याअधिपतये० ॥ ३ ॥ दक्षिणेत्यागः ॥ उदकस्पर्शः ॥
ॐवायुरन्तरिक्षस्याधिपतिःस०स्वाहा ॥ इदंवायवेऽन्तरिक्षस्याधिपतये० ॥४॥ ॐसूर्योदिवोऽ-
धिपतिःस०स्वाहा । इदंसूर्यायदिवोधिपतये० ॥ ५ ॥ ॐचन्द्रमानक्षत्राणामधिपतिःस०

प्रदीपः

स्वाहा ॥ इदंचन्द्रमसेनक्षत्राणामधिपतये० ॥ ६ ॥ ॐबृहस्पतिर्ब्रह्मणोधिपतिःसमावत्वस्मि-

अ० क० न्ब्रह्म० ॥ इदंबृहस्पतयेब्रह्मणोधिपतये० ॥ ७ ॥ ॐमित्रःसत्यानामधिपतिःस०स्वाहा ॥ इदं

मित्रायसत्यानामधिपतये० ॥ ८ ॥ ॐवरुणोऽपामधिपतिःस०स्वाहा ॥ इदंवरुणायापामधि-

।१७१। पतये० ॥ ९ ॥ ॐसमुद्रःस्रोत्यानामधिपतिःस०स्वाहा ॥ इदंसमुद्रायस्रोत्यानामधिपतये०

॥१०॥ ॐअन्नꣳसाम्राज्यानामधिपतिःस०स्वाहा ॥ इदमन्नायसाम्राज्यानामधिपतये० ॥ ११ ॥

ॐसोमऽओषधीनामधिपतिःस०स्वाहा ॥ इदंसोमायौषधीनामधिपतये० ॥ १२ ॥ ॐसविता-

प्रसवानामधिपतिःस०स्वाहा । इदंसवित्रेप्रसवानामधिपतये० ॥ १३ ॥ ॐरुद्रःपशूनामधि-

पतिःस०स्वाहा । इदंरुद्रायपशूनामधिपतये० ॥ १४ ॥ इशानेत्यागः ॥ उदकस्पर्शः ॥ ॐत्वष्टारू-

पाणामधिपतिःस० । इदंत्वष्ट्रेरूपाणामधिपतये० ॥ १५ ॥ ॐविष्णुःपर्वतानामधिपतिःस० ।

इदंविष्णवेपर्वतानामधिपतये० ॥ १६ ॥ ॐमरुतोगणानामधिपतयःस० । इदंमरुद्भ्योगणा- ।१७१।

नामधिपतिभ्यो० ॥१७॥ वायव्यांत्यागः ॥ ॐपितरःपितामहाःपरेवरेततास्ततामहाः । इहमावत्व-

स्मिन्ब्रह्म०स्वाहा । इदंपितृभ्यःपितामहेभ्यःपरेभ्योवरेभ्यस्ततेभ्यस्ततामहेभ्यश्चनमम ॥१८॥

दक्षिणाग्न्योर्मध्येत्यागः ॥ उदकस्पर्शः ॥ अथअग्निरित्यादिपंच ॥ ॐअग्निरैतुप्रथमोदेवतानाᳬंसोस्यैप्रजां मुञ्चंतुमृत्युपाशात् ॥ तदयᳬंराजावरुणोनुमन्यतांयथेयᳬंस्त्रीपौत्रमघन्नरोदात्स्वाहा । इदम-ग्नये० ॥ १ ॥ ॐइमामग्निस्त्रायतांगार्हपत्यःप्रजामस्यैनयतुदीर्घमायुः ॥ अशून्योपस्थाजीव-तामस्तुमातापौत्रमानंदमभिविबुध्यतामियᳬंस्वाहा । इदमग्नये० ॥ २ ॥ ॐस्वस्तिनोऽअग्ने दिवआपृथिव्याविश्वानिधेह्ययथायजत्र ॥ यदस्यांमहिदिविजातंप्रशस्तंतदस्मासुद्रविणंधेहि चित्रᳬंस्वाहा । इदमग्नये० ॥ ३ ॥ ॐसुगन्नुपंथांप्रदिशन्नएहिज्योतिष्मध्येह्यजरन्नऽआयुः ॥ अपैतुमृत्युरमृतंमआगाद्वैवस्वतोनोऽअभयंकृणोतुस्वाहा ॥ इदंवैवस्वताय०॥ ४ ॥ दक्षिणेत्यागः ॥ ॐपरंमृत्योऽअनुपरेहिपंथांयस्तेऽअन्यइतरोदेवयानात् ॥ चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजा-ᳬंरीरिषोमोतवीरान्स्वाहा । इदंमृत्यवेनमम ॥ ५ ॥ उदकस्पर्शः ॥ अथलाजाहोमः ॥ ॐकुमा-र्यांभ्राताशमीपलाशमिश्रान्लाजानंजलिनांजलावावपतितितांजुहोतिसᳬंहतेनतिष्ठत्यर्यमणंदेवं-कन्याऽअग्निमयक्षत ॥ सनोऽअर्यमादेवःप्रेतोमुञ्चतुमापतेस्वाहा । इदमर्यम्णेनमम ॥ १ ॥

---

१ साज्यंतंपायसंनैवेद्यंविमधुसमन्वितं ॥

 इयन्नार्युपब्रूतेलाजानावपन्तिका ॥ आयुष्मानस्तुमेपतिरेधन्तांज्ञातयोममस्वाहा । इदमग्नये० 
॥ २ ॥ ॐइमाँल्लाजानावपाम्यग्नौसमृद्धिकरणंतव ॥ ममतुभ्यंचसंवननंतदग्निरनुमन्यतामिय-
 ᳫंस्वाहा । इदमग्नये० ॥ ३ ॥ ॐअथास्यैदक्षिणᳫंहस्तंगृह्णातिसाङ्गुष्ठंगृभ्णामितेसौभगत्वाय
हस्तंमयापत्याजरदष्टिर्यथासः ॥ भगोऽअर्यमासवितापुरंधिर्मह्यन्त्वादुर्गार्हपत्यायदेवाः ॥ अमो-
हमस्मिसात्वᳫंसात्वमस्यमोऽअहम् ॥ सामाहमस्मिऋक्त्वंद्यौरहंपृथिवीत्वम् ॥ तावेवविव-
हावहैसहरेतोदधावहै ॥ प्रजांप्रजनयावहैपुत्रान्विन्दावहैबहून् ॥ तेसन्तुजरदष्टयःसंप्रियौ
रोचिष्णूसुमनस्यमानौ ॥ पश्येमशरदःशतंजीवेमशरदःशतᳫंशृणुयामशरदःशतम् ॥४॥ इतिहस्त-
ग्रहणमन्त्रः॥ॐअथैनामश्मानमारोहयत्युत्तरतोग्नेर्दक्षिणपादेन । आरोहेममश्मानमश्मेवत्वᳫंस्थि-
राभव॥अभितिष्ठपृतन्यतोवबाधस्वपृतनायतः॥१॥अथगाथांगायतिसरस्वतिप्रेदमवसुभगेवाजि-
नीवती ॥ यान्त्वाविश्वस्यभूतस्यप्रजायामस्याग्रतः ॥यस्यांभूतᳫंसमभवद्यस्यांविश्वमिदंजगत् ॥ 
तामद्यगाथांगास्यामियास्त्रीणामुत्तमंयशः ॥२॥ अथवृषवत्सतर्योःप्रदक्षिणाकार्या ॥ अथपरिक्रामतस्तु-
भ्यमग्नेपर्यवहन्सूर्यांवहतुनासह॥पुनःपतिभ्योजायांदाग्नेप्रजयासहेति॥३॥ एवंद्विरपरंलाजादि

॥४॥ चतुर्थꣳशूर्पकुष्टया सर्वान्लाजानावपतिभगायस्वाहेति ॥ ५ ॥ ततःसमाचारात्तूष्णींचतुर्थपरिक्रमणं
कुरुतः ॥ नेतरथाश्रुतिः ॥ ब्रह्मान्वारब्धःस्रुवेणजुहुयात् ॥ त्रिःपरिणीताप्राजापत्यꣳहुत्वा ॥६॥ ॐप्रजापतये
स्वाहाइदंप्रजापतये० ॥१॥ अथैनामुदीचीꣳसप्तपदानिप्रक्रामयति ॥ ( ततोग्नेरुत्तरतःउदक्संस्थान्स-
प्ततण्डुलपुंजान्कृत्वा ) ॐएकमिषेविष्णुस्त्वानयतु ॥१॥ ॐद्वेऽऊर्जेविष्णुस्त्वानयतु ॥२॥ ॐत्रीणि
रायस्पोषायविष्णुस्त्वानयतु ॥३॥ ॐचत्वारिमायोभवाय० ॥४॥ ॐपञ्चपशुभ्यो० ॥५॥ ॐषड्ऋतु-
भ्यो० ॥६॥ सखेसप्तपदाभवसामामनुव्रताभवविष्णुस्त्वानयतु ॥७॥ कलशोदकेनवृषवत्सतर्योःअभिषेकः ॥
ॐआपःशिवाःशिवतमाःशान्ताःशान्ततमास्तास्तेकृण्वन्तुभेषजम् ॥१॥ आपोहिष्ठेतित्रिः ॥३॥
ततःवृषवत्सतर्योः सूर्यावलोकनं ॥ तत्रमन्त्राः ॥ ॐतच्चक्षुर्दे० ॥ हꣳसःशुचिषत्० ॥ अदृश्रमस्यकेतवो० ॥
उदुत्यम्० ॥ इति ॥ ततःस्विष्टकृद्धोमः ॥ होमसंकल्पः ॥ प्राशनम् ॥ पवित्राभ्यांमार्जनम् ॥ प्रणीता
विमोकः ॥ ब्रह्मणेदक्षिणांदद्यात् ॥ वृषवत्सतर्योःचरुभक्षणंकार्यम् ॥ पुष्कराद्यानितीर्थानिगंगाद्याः
सरितस्तथा ॥ आगच्छन्तुपवित्राणिनीलपुच्छेचतर्पणे ॥ १ ॥ ततोयजमानःप्राङ्मुखोवोदङ्मुखाभूत्वा
वृषवत्सतर्योःपुच्छेएकीकृत्यकुशतिलान्गृहीत्वासर्वतीर्थोदकेनदेवमनुष्यपितृणांतर्पणंकुर्यात् ॥ आचम्यप्राणानायम्य॥

अद्येत्यादि० अपसव्यंगोत्राणांपितृपितामहप्रपितामहानांअमुकामुकशर्मणांमातृपितामहीप्रपि-
तामहीनांअमुकामुकदानांगोत्राणांमातामहप्रमातामहवृद्धप्रमातामहानांमातामहीप्रमाताम-
हीवृद्धप्रमातामहीनांपितृव्यकभ्रातृमातुलाद्येकोद्दिष्टसमस्तपूर्वजानांअसद्गतिनिवारणार्थंश्रुति-
स्मृतिपुराणोक्तफलप्राप्त्यर्थं [ पितृक्षयाहेमातृक्षयाहेभ्रातृक्षयाहेऽन्यक्षयाहेवा ] वृषव-
त्सतयोः पुच्छेतर्पणमहंकरिष्ये। सव्यं। ॐइषेत्वादिखंब्रह्मान्तेषुमन्त्रेषुमाध्यंदिनीयस्यवाजसने-
यस्यविवस्वान्ऋषिः यजुर्देवतागायत्रीछन्दः तर्पणेविनियोगः ॥ (प्राङ्मुखस्त्रीन्दर्भान्प्रागग्रान्दक्षिणेनपा-
णिनाआदाय )विश्वान्देवान्आवाहयिष्ये । ॐआवाहय ॥ ॐविश्वेदेवासऽआगतशृणुतामऽइमꣳ
हवम् ॥ एदम्बर्हिर्निषीदत ॥ १ ॥ विश्वेदेवाःशृणुतेमꣳहवम्मेयेऽअन्तरिक्षेयऽउपद्यविष्ठ ॥
येऽअग्निजिह्वाऽउतवायजत्राऽआसद्यास्मिन्बर्हिषिमादयध्वम् ॥ २ ॥ आगच्छन्तुमहाभागा
विश्वेदेवामहाबलाः ॥ येयत्रविहिताःश्राद्धेसावधानाभवन्तुते ॥ ॐभवामः ॥ ॐकारंसर्वत्र ॥
ॐविश्वेदेवास्तृप्यन्ताम् ॥ मोदस्तृ०॥ प्रमोदस्तृ०॥ सुमुखस्तृ०॥ दुर्मुखस्तृ०॥ अविघ्नस्तृ० ॥
विघ्नकर्तातृ० ॥ ब्रह्मातृप्यताम् ॥ विष्णुस्तृ०॥ रुद्रस्तृ० ॥ प्रजापतिस्तृ०॥ देवास्तृप्यन्ताम् ॥

छन्दाꣳसितृप्य० ॥ वेदास्तृ० ॥ ऋषयस्तृ० ॥ पुराणाचार्यास्तृ० ॥ गन्धर्वास्तृ० ॥
इतराचार्यास्तृ० ॥ संवत्सरःसावयवस्तृप्यताम् ॥ देव्यस्तृप्यन्ताम् ॥ अप्सरसस्तृ० ॥
देवानुगास्तृ० ॥ नागास्तृ० ॥ सागरास्तृ० ॥ पर्वतास्तृ० ॥ सरितस्तृ० ॥ मनुष्यास्तृ० ॥
यक्षास्तृ० ॥ रक्षाꣳसितृ० ॥ पिशाचास्तृ० ॥ सुपर्णास्तृ० ॥ भूतानितृ० ॥ पशवस्तृ० ॥
वनस्पतयस्तृ० ॥ ॐओषधयस्तृ० ॥ ॐभूतग्रामश्चतुर्विधस्तृप्यताम् ॥ (इतिप्रत्येकमेकैकेनाञ्जलि-
नातर्पयेत्) ॥ ततः पुराणश्लोकैस्तर्पयेत् ॥ तद्यथा– ब्रह्माद्यादेवताःसर्वेऋषयोमुनयस्तथा ॥ तेसर्वेतृप्ति-
मायान्तुनीलपुच्छेपुतर्पिताः ॥१॥ असुरायातुधानाश्चमातरश्चण्डिकास्तथा ॥ तेसर्वे० ॥ २ ॥
दिक्पालालोकपालाश्चग्रहदेवाधिदेवताः ॥ तेसर्वे० ॥ ३ ॥ विश्वेदेवास्तथादित्याःसाध्याश्चैवम-
रुद्गणाः ॥ तेसर्वे० ॥४॥ क्षेत्रपीठोपपीठानिनद्यानद्यश्चसागराः ॥ तेसर्वे० ॥५॥ पातालेनागप-
न्यश्चनागाश्चैवसपर्वताः॥ तेसर्वे० ॥६॥ पिशाचागुह्यकाःसिद्धागणगन्धर्वराक्षसाः॥ तेसर्वे०॥७॥
पृथिव्यापश्चतेजश्चवायुराकाशमेवच ॥ तेसर्वे० ॥८॥ दिविभुव्यन्तरिक्षेचयेचपातालवासिनः ॥
तेसर्वे० ॥९॥ शिवःशिवातथाविष्णुःसिद्धिर्लक्ष्मीःसरस्वती ॥ तेसर्वे० ॥१०॥ तपोधनश्चभग-

वानऽव्यक्तःपरमेश्वरः॥ तेसर्वे० ॥११॥ क्षेत्रौषधीलतावृक्षावनस्पत्यधिदेवताः ॥ तेसर्वे० ॥१२॥
कपिलःशेषनागश्चतक्षकोऽनन्तएवच ॥ तेसर्वे० ॥ १३ ॥ अन्येजलचराजीवाअसंख्याताह्यने-
कशः॥ तेसर्वे० ॥१४॥ चतुर्दशयमाश्चैवयेचान्येयमकिंकराः ॥ तेसर्वे०॥१५॥ सर्वेचपक्षिराजा-
श्चपक्षिणःपशवस्तथा ॥ तेसर्वे०॥१६॥ अजागामहिषीरूपागजाश्चपशवस्तथा ॥ तेसर्वे०॥१७॥
स्वेदजोद्भिज्जजीवाश्चअण्डजाश्चजरायुजाः ॥ तेसर्वे० ॥१८॥ अन्येजलचराजीवादिवानिशि-
चरास्तथा ॥ शान्तिदाःशुभदास्तेस्युर्नीलपुच्छेषुतर्पिताः ॥ १९ ॥ मनुष्यतर्पणम्—( निवीत्युदङ्मुख
उदगग्रानकुशान्दक्षिणहस्तस्यकनिष्ठिकामूलप्रदेशेधृत्वाप्रजापतितीर्थेनद्वौद्वावञ्जलीमन्त्रावृत्त्याकुशमध्यतोदद्यात् ) ॐस-
नकतृप्यतु ॥ ॐसनकस्त०॥ ॐसनन्दनस्तृप्यतु ॥२॥ ॐसनातनस्तृप्यतु ॥२॥ ॐकपिलस्तृ०
॥२॥ ॐआसुरिस्तृ०॥२॥ ॐवोढुस्तृ० ॥२॥ ॐपञ्चशिखस्तृ० ॥२॥ पितृतर्पणम्—(तानेवदर्भानदक्षि-
णाग्रमूलान्द्विगुणीकृत्यतेषांमध्यंवामहस्तस्याङ्गुष्ठतर्जनीमध्यप्रदेशेकृत्वाअपसव्येनदक्षिणाभिमुखंकृष्णतिलमिश्रितजलेनपि-
तृतीर्थेनत्रींस्त्रीनञ्जलीनदद्यात् ) ॐकव्यवाडनलस्तृप्यताम् ॥ ॐकव्यवाडनलस्तृ०॥ॐकव्यवाडन-
लस्तृ० ॥ ॐसोमस्तृप्यताम् ॥३॥ ॐयमस्तृ० ॥३॥ ॐअर्यमातृ०॥३॥ ॐअग्निष्वात्ताःपित-

रस्तृप्यन्ताम् ॥३॥ ॐसोमपाःपितरस्तृ० ॥३॥ ॐबर्हिषदःपितरस्तृ० ॥३॥ यमतर्पणम्—ॐय-
मायनमः ॥३॥ ॐधर्मराजाय० ॥३॥ ॐमृत्यवे०॥३॥ ॐअन्तकाय० ॥ ३ ॥ ॐवैवस्वताय०
॥३॥ ॐकालाय० ॥३॥ ॐसर्वभूतक्षयाय० ॥३॥ ॐऔदुम्बराय०॥३॥ ॐदध्नाय० ॥ ३ ॥
ॐनीलाय०॥३॥ ॐपरमेष्ठिने०॥३॥ ॐवृकोदराय०॥३॥ ॐचित्राय० ॥३॥ ॐचित्रगुप्ताय०
॥ ३ ॥ मनुष्यपितृतर्पणम्—आवाहनम्—उशन्तस्त्वेतिप्रजापतिश्रीसरस्वत्यऋषयःअनुष्टुप्छन्दःपितरो
देवतापित्राद्यावाहनेविनियोगः ॥ ॐउशन्तस्त्वा०अत्तवे ॥१॥ हस्तेकृष्णतिलान्गृहीत्वा। समस्तपि-
तॄनावाहयिष्ये ॥ अमुकगोत्रःअस्मत्पिताअमुकशर्मावसुरूपस्तृप्यतांस्वधा ॥३॥ अ०गोत्रःअ०
पितामहःअ०शर्मारुद्ररूपस्तृप्यतांस्वधा ॥३॥ अ०गोत्रःअ०प्रपितामहःअ०शर्माआदित्यरूप-
स्तृप्यतांस्वधा ॥३॥ अ०गोत्राअस्मन्माताअमुकदावसुरूपातृप्यतांस्वधा ॥ ३ ॥ अ०गोत्राअ०
२० पितामहीअमुकदारुद्ररूपातृप्यतांस्वधा ॥ ३ ॥ अ०गोत्राअ०प्रपितामहीअमुकदाआदित्यरूपा
तृप्यतांस्वधा ॥३॥ अ०गोत्राअ०सापत्नमाताअमुकदावसुरूपातृप्यतांस्वधा ॥३॥ ॐउदीरता-
मव॰ ॥१॥ अङ्गिरसोनः०॥२॥ आयन्तुनः०॥३॥ ऊर्ज्जंवहन्ती० ॥४॥ पितृभ्यःस्वधा० ॥५॥

येचेहपितरो०॥६॥ मधुव्वाता०॥७॥ मधुनक्तमुतो०॥८॥ मधुमान्नो०॥९॥ॐमधु। मधु। मधु॥
तृप्यध्वम् ॥ तृप्यध्वम् ॥ तृप्यध्वम् ॥ॐनमोवःपितरोरसाय०सत् ॥ अ०गोत्रःअस्मन्मातामहः
सपत्नीकःअ०शर्मावसु०तृप्यतांस्वधा ॥ ३ ॥ अ०गोत्रःअ० प्रमातामहःसपत्नीकःअ०शर्मारुद्र०
तृ०स्वधा ॥ अ०गोत्रःअ०वृद्धप्रमातामहःसपत्नीकःअ०शर्माआदित्य०तृ०स्वधा ॥ ततःपितृव्य-
कादीनेकैकाञ्जलिनातर्पयेत् ॥ अ०गोत्राअ०पत्नीअ०दावसुरूपातृ०स्वधा ॥ अ० गोत्रःअ०सुतःअ०
शर्मावसु०तृ०स्वधा ॥ अ०गोत्राअ०कन्याअ०दावसु०तृ०स्वधा ॥ अ०गोत्रःअस्मत्पितृव्यः
सपत्नीकःअ०शर्मावसु०तृ०स्वधा ॥ अ०गोत्रःअ०भ्रातासपत्नीकःअ०शर्मावसु०तृ०स्वधा ॥
अ०गोत्रःअ०सापत्नभ्राताअ०शर्मावसु०तृ०स्वधा ॥ अ०गोत्राअ०पितृभगिनीसभर्तृकाअ०
दावसु०तृ०स्वधा ॥ अ०गोत्राअ०मातृभगिनीसभर्तृकाअ०दावसु०तृ०स्वधा ॥ अ०गोत्राअ०
भगिनीसभर्तृकाससुताअ०दावसु०तृ० स्वधा ॥ अ०गोत्रःअस्मच्छ्वशुरःसपत्नीकःससुतःअ०
शर्मावसु०तृ०स्वधा ॥ अ०गोत्रःअ०गुरुःसपत्नीकःससुतःअ० शर्मावसु० तृ०स्वधा ॥ अ०
गोत्रःअ०शिष्यःसपत्नीकःअ०शर्मावसु०तृ०स्वधा ॥ अ०गोत्रःअ० मित्रंअ० शर्मावसु० तृ०

स्वधा ॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबन्धूनांयेचान्येबान्धवास्मृताः ॥ तेसर्वे तृप्तिमायान्तुनीलपुच्छेषुतर्पिताः ॥१॥ येमेकुलेलुप्तपिण्डाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥ तेसर्वेतृप्ति० ॥२॥ विरूपाआमगर्भाश्चज्ञाताऽज्ञाताःकुलेमम ॥ तेसर्वेतृप्ति० ॥३॥ येऽबान्धवाबान्धवायेयेऽन्यजन्मनिबान्धवाः ॥ तेसर्वेतृप्तिमायान्तुयश्चास्मत्तोभिवांछति ॥ इतिमन्त्रैर्णैकैकाञ्जलिंनिक्षिपेत् ॥ ततोवस्त्रनिष्पीडनम्—येकेचास्मत्कुलेजाताअपुत्रागोत्रिणोमृताः ॥ तेगृह्णन्तुमयादत्तंवस्त्रनिष्पीडनोदकम् ॥ ( इतिमन्त्रेणस्नानीयवस्त्रंनिष्पीडयेत् ) सव्यं ॥ आचम्य ॥ पुराणोक्तश्लोकैस्तर्पयेत् ॥ अपसव्यं ॥ आब्रह्मस्तम्बपर्यन्तंयेचान्येगोत्रिणस्तथा ॥ तेसर्वेतृप्तिमायान्तुनीलपुच्छेषुतर्पिताः ॥१॥ सर्पव्याघ्रहतायेचशृङ्गिदंष्ट्रिजलाग्निभिः ॥ तेसर्वे० ॥२॥ अपुत्राअक्रियायेचअदाराधनवर्जिताः ॥ तेसर्वे० ॥ ३ ॥ आमगर्भामृतायेचशस्त्रघातमृताश्चये ॥ तेसर्वे० ॥४॥ संस्काररहितायेचरौरवादिषुकामतः ॥ तेसर्वे० ॥ ५ ॥ वृक्षत्वंचगताः केचित्तृणगुल्मेषुयेस्थिताः ॥ तेसर्वे० ॥ ६ ॥ यातनासुचघोरासुजातिषुविविधासुच ॥ तेसर्वे०

१ अतर्पितेषुपितृषुवस्त्रंनिष्पीडयेत्तुयः ॥ निराशाःपितरस्तस्यभवन्तिसुरमानवैः ॥

॥७॥ नरकेषुचघोरेषुपतितायेस्वकर्मणा ॥ तेसर्वे० ॥८॥ देवत्वंमानुषत्वंवापितिर्यक्प्रेतपिशाच-
ताम् ॥ तेसर्वे० ॥९॥ कृमिकीटपतङ्गत्वंगतायेचस्वकर्मभिः ॥ तेसर्वे० ॥१०॥ अंडयोनिषुयेजा-
ताबान्धवाःपापजन्तवः ॥ तेसर्वे० ॥ ११ ॥ तिर्यग्योनिगतायेचआमगर्भेपतन्तिये ॥ तेसर्वे०
॥१२॥ आसुरींयोनिमापन्नापिशाचत्वंचसंगताः ॥ तेसर्वे० ॥ १३ ॥ जलजन्तुत्वमापन्नाःसङ्क्योयो-
निषुरोपिताः ॥ तेसर्वे० ॥ १४ ॥ देवयोनिषुयेजाताविष्णुयोनिषुयेगताः ॥ तेसर्वे० ॥ १५ ॥
तामिस्रनरकेजाताअन्धकत्वंसमागताः ॥ तेसर्वे० ॥१६॥ रौरवेनरकेजाताअन्नपानाविवर्जिताः॥
तेसर्वे०॥ १७ ॥ संजीविनिरयेयोवैजायतेम्रियतेपुनः ॥ तेसर्वे० ॥ १८ ॥ महापथेचनरकेपच्य-
तेपक्वतैलवत् ॥ तेसर्वे० ॥१९॥ असिपत्रवनेघोरेअसिवच्छिद्यतेभृशम् ॥ तेसर्वे० ॥२०॥ पचन्तं
नाम्नरकेतप्तताम्रमयेभृशम् ॥ तेसर्वे० ॥ २१ ॥ महापातकजान्घोरान्नरकान्भृशदारुणान् ॥
तेसर्वे० ॥२२॥ शाल्मलीनरकेजाताजीवहानिकुलश्चये ॥ तेसर्वे० ॥२३॥ अश्मरीमूत्रकृच्छ्रेण-
बालरोगेणयेमृताः ॥ तेसर्वे० ॥२४॥ तीर्यग्योनिषुयेजाताइहैवाप्यन्यजन्मनि ॥ तेसर्वे०॥२५॥
भूतयोनिगताःकेचित्स्त्रियोवापुरुषाअपि ॥ तेसर्वे० ॥२६॥ आसुरींयोनिमापन्नाम्लेच्छयोनिंतु-

येगताः ॥ तेसर्वे० ॥२७॥ अग्निलोकेषुयेजाताविष्णुलोकंतुयेगताः ॥ तेसर्वे० ॥ २८॥ पाख-
ण्डेनमृतायेचयेधाम्याःपापयोनयः ॥ तेसर्वे० ॥२९॥ रविमण्डलसंस्थायेवस्वादिषुचयेगताः ॥
तेसर्वे० ॥३०॥ प्रकृतेविकृतेचैवजायन्तेभुविमानवाः ॥ तेसर्वे० ॥३१॥ काकोलूकेचसंजीवेलो-
हकंटकसंकुले ॥ तेसर्वे० ॥ ३२॥ भूतप्रेतपिशाचत्वेसंभूतायेकुलेमम ॥ तेसर्वे० ॥३३॥ आब्र-
ह्मस्तम्बपर्यन्तंजगत्तृप्यत्वितिब्रुवन् ॥ तेसर्वे० ॥३४॥ पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरु-
श्वशुरबन्धूनांयेचान्येबान्धवाःस्मृताः ॥ तेसर्वे० ॥३५॥ येमेकुलेलुप्तपिण्डाःपुत्रदारविवर्जिताः॥
तेसर्वे०॥३६॥ क्रियालोपगताश्चैवजात्यंधाःपंगवस्तथा ॥ तेसर्वे० ॥३७॥ विरूपाआमगर्भाश्च-
ज्ञाताज्ञाताःकुलेमम ॥ तेसर्वे० ॥३८॥ येबान्धवाबान्धवायेयेऽन्यजन्मनिबान्धवाः ॥ शांतिदाः
शुभदाःसर्वेनीलपुच्छेषुतर्पिताः ॥३९॥ आब्रह्मस्तम्बपर्यन्तंदेवर्षिपितृमानवाः ॥ तृप्यन्तुपि-
तरःसर्वेमातृमातामहादयः ॥४०॥ आब्रह्मणोयेपितृवंशजातामातुस्तथावंशभवामदीयाः ॥ वंश-
द्वयेयेममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥ तेसर्वे० ॥४१॥ मित्राणिशिष्याःपशवश्चवृक्षा-
दृष्टाश्चस्पृष्टाश्चकृतोपकाराः ॥ जन्मान्तरेयेममसंमताश्चतेभ्यःस्वधातोयमहंददामि ॥ ४२ ॥

अतीतकुलकोटीनांसप्तद्वीपनिवासिनाम् ॥ आब्रह्मभुवनाल्लोकादिदमस्तुतिलोदकम् ॥ ४३ ॥
सव्यम् तर्पणार्थंकुशान्परित्यज्य ॥ आचम्य ॥ पुनःस्नानंकृत्वाधौतवस्त्रंपरीधायनीलपदेपुरेश्राद्धंकुर्यात् ॥ आचम्य
प्राणानायम्य ॥ अद्यपूर्वो०अपसव्यंगोत्रस्यअस्मत्पितुःअमुकशर्मणःप्रथमक्षयाहेनीलपदश्रा-
द्धप्रारंभांगनिमित्तंसव्यंश्रीविष्णोःपञ्चोपचारैःपूजनमहंकरिष्ये ॥ श्रीमहाविष्णवेनमः इत्यने-
नमन्त्रेणपञ्चोपचारैःसंपूज्य ॥ एभिःपञ्चोपचारैःपूजनेनसर्वंपरिपूर्णतामस्तु ॥ दिग्बन्धः—अग्निष्वा-
त्ताःपितृगणाःप्राचींरक्षन्तुमेदिशम् ॥ तथाबर्हिषदःपान्तुयाम्यांयेपितरस्तथा ॥ प्रतीचीमा-
ज्यपास्तद्वदुदीचीमपिसोमपाः ॥ ऊर्ध्वतस्त्वर्यमारक्षेत्कव्यवाडनलोप्यधः ॥ रक्षोभूतपिशाचे-
भ्यस्तथैवासुरदोषतः ॥ सर्वतश्चाधिपस्तेषांयमोरक्षांकरोतुमे ॥ तिलारक्षन्त्वसुरान्दर्भारक्षन्तु
राक्षसान् ॥ पंक्तिंवैश्रोत्रियोरक्षेदतिथिःसर्वरक्षकः ॥ अधोर्ध्वमपिकोणेषुविकोणेषुचसर्वतः ॥

---

१ तर्पणान्तेततःकुर्याद्वर्तुलंमण्डलंपुनः ॥ गयाशीर्षेविजानीयान्नीलस्यदक्षिणंपदम् ॥ दक्षिणाभिमुखान्पिण्डान्पितॄनुद्दिश्ययत्नतः ॥ एकोत्तरशतंपिण्डान्दद्याद्रूपपदाग्रतः ॥ अन्वष्टकासुमध्यस्थान्द्वादशादौप्रकीर्तिताः ॥ क्षयाहेकेवलाप्रोक्तास्तीर्थेष्वन्तेचमातरः ॥ अन्वष्टकासुवृद्धौचप्रतिसंवत्सरंतथा ॥ महालयेगयायांचसपिण्डीकरणात्पुरा ॥ मातुःश्राद्धंपृथक्कुर्यादन्यत्रपतिनासह ॥ नीवीमावाहनंचार्घ्यमग्नौकरण-मेवच ॥ विकिरंनैवकुर्वीततीर्थेनीलेतथैवच ॥ अवनेजनंपिण्डदानंपुनःप्रत्यवनेजनं ॥ दक्षिणाचान्नसंकल्पस्तीर्थश्राद्धेष्वयंविधिः ॥

इतितिलानविकिरेत् ॥ गाथेना—श्राद्धभूमौगयांध्यात्वाध्यात्वादेवंगदाधरम् ॥ ताभ्यांचैवनमस्कारं-
ततःश्राद्धंप्रवर्तयेत् ॥१॥ सप्तव्याधादशार्णेषुमृगाःकालञ्जरेगिरौ ॥ चक्रवाकाःशरद्वीपेहंसाःस-
रसिमानसे ॥२॥ तेऽपिजाताःकुरुक्षेत्रेब्राह्मणावेदपारगाः ॥ प्रस्थितादीर्घमध्वानंयूयंकिमवसी
दथ ॥ ३ ॥ शमीपत्रप्रमाणेनपिण्डंदद्यात्गयाशिरे ॥ उद्धरेत्सप्तगोत्राणांकुलमेकोत्तरंशतम्
॥४॥ देवताभ्यश्चपितृभ्यश्चमहायोगीभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥५॥
गयायांपितृरूपेणस्वयमेवजनार्दनः ॥ तंध्यात्वापुण्डरीकाक्षंमुच्यतेनाऽत्रसंशयः ॥ ६ ॥ अप-
वित्र० ॥७॥ अच्युतायनमः ॥ ततःताम्रपात्रेसतिलजलंपूरयित्वागायत्र्यात्रिरभिमन्त्रणम्—यद्देवेतितिसृणां-
कूष्माण्डऋषिःगायत्र्युष्णिगनुष्टुप्छंदांसिअग्निवायुसूर्यादेवताःतिलोदककरणेविनियोगः ॥ ॐ
यद्देवादेवहेडनं० ॥१॥ यदिदिवायदिनक्तमे० ॥२॥ यदिजाग्रद्य० ॥ ३ ॥ अपसव्यं ॥ उदक-
क्यादिशूद्रसूकरश्वानमार्जारकुक्कुटादिनांदुष्टदृष्टिनिपातदूषितानांनीलपदश्राद्धेपाकाद्युपहारा-
णांपवित्रतास्तु ॥ सव्यं ॥ देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ सर्वेपाकाःशुचयोभवन्तु ॥
अद्येत्यादि०अपसव्यं ॥ गोत्राणांपितृपितामहप्रपितामहानांअमुकामुकशर्मणां ॥ गोत्राणां-

मातृपितामहीप्रपितामहीनांअमुकामुकदानां ॥ गोत्राणांमातामहप्रमातामहवृद्धप्रमातामहा-
नांअमुकामुकशर्मणां ॥ गोत्राणांमातामहीप्रमातामहीवृद्धप्रमातामहीनांअमुकामुक०दानांपि-
तृव्यकभ्रातृमातुलएकोद्दिष्टसमस्तपूर्वजानांउद्धरणार्थंपितृक्षयाहेमातृक्षयाहेभ्रातृक्षयाहेऽन्य-
क्षयाहेवाअस्मिन्वृषपदेगयासाम्यमहातीर्थेश्राद्धमहंकरिष्ये ॥ अवनेजनं ॥ अथरेषाकरणम्—ॐअ-
पहताऽसुरारक्षांसिवेदिषदः ॥ इतिमन्त्रेणकुशमूलेनरेषाचतुष्टयंकृत्वातिलोदकैःअभ्युक्ष्य ॥ ईशानविष्णु-
कमलासेनेतिमन्त्रेणभूमीमालभ्य—ईशानविष्णु०॥ गोत्राःपितृपितामहप्रपितामहाःअमुकामुकश-र्माणः
पिण्डस्थानेअवनेनीगृध्वं ॥ गोत्राःमातृपितामहीप्रपितामह्यःअमुकामुकसु०दाःपिण्डस्थानेअव-
नेनीगृध्वं ॥ गोत्राःमातामहप्रमातामहवृद्धप्रमातामहाःअमुकामुक०शर्माणःपिण्डस्थानेअवने-
नीगृध्वं ॥ गोत्राःमातामहीप्रमातामहीवृद्धप्रमातामह्यःअमुकामुकदाःपिण्डस्थानेअवनेनीगृध्वं॥
पितृव्यकभ्रातृमातुलएकोद्दिष्टसमस्तपूर्वजानांअवनेजनानि ॥ पिण्डदानम्—गोत्रअस्मत्पितःअमुकशर्मन्नील- ।१७८।

१ दक्षिणेनिर्वपेत्पिण्डान्पितृनुद्दिश्ययत्नतः ॥ एकोत्तरशतंपिण्डान्दद्याद्रुद्रपदाग्रतः ॥ गयाशीर्षेविजानीयाद्रुद्रस्यदक्षिणंपदम् ॥ पिण्डांस्तुनिर्वपेत्तत्रपितॄणांप्रयतोनरः ॥ तत्पत्नीनांगुरूणांचज्ञातिसंबंधिनांतथा ॥ नामगोत्रेणपिण्डांस्तुपित्रादीनांयथाक्रमम् ॥ मातुर्मातामहादीना कोद्दिष्टानिर्वपेन्नरः इति ॥

पदश्राद्धसांगतासिद्ध्यर्थंएतत्तेगयायांपिण्डान्नंस्वधाइदंपित्रेअमुकशर्मणेनमम ॥ गोत्रअस्मत्पितामहअमुकशर्मन्नीलपदश्राद्धसांगतासिद्ध्यर्थंएतत्तेगयायांपिण्डान्नंस्वधाइदंपितामहाय-अमुकशर्मणेनमम ॥ गोत्रअस्मत्प्रपितामहअमुकशर्मन्नीलपदश्राद्धसांगतासिद्ध्यर्थंएतत्तेगया-यांपिण्डान्नंस्वधाइदंप्रपितामहायअमुकशर्मणेनमम ॥ उदकस्पर्शः ॥ एवंद्वितीयमातृपार्वणम् ॥ तृतीय-मातामहपार्वणम् ॥ चतुर्थमातामहीपार्वणम् ॥ पश्चात्पितृव्यकभ्रातृमातुलएकोद्दिष्टसमस्तपूर्वजानांनामगोत्रेणपिण्डदानं-कृत्वा ॥ ( ततःज्ञाताज्ञातानांप्रतिश्लोकमेकैकंपिण्डंदद्यात् ) तत्रमन्त्राः—अस्मत्कुलेमृतायेचगतिर्येषांनविद्यते ॥ मातामहकुलेयेचगतिर्येषांनविद्यते ॥ तेषामुद्धरणार्थायइमंपिण्डंददाम्यहम् ॥१॥ पितृवंशेमृता-येचमातृवंशेतथैवच ॥ गुरुश्वशुरबन्धूनांयेचान्येबान्धवाःस्मृताः ॥ तेषामुद्धरणार्थायइमंपिण्डं ददाम्यहम् ॥ २ ॥ येमेकुलेलुप्तपिण्डाःपुत्रदारविवर्जिताः ॥ क्रियालोपगताश्चैवजात्यंधाःपंगव स्तथा ॥ तेषामु० ॥३॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताःकुलेमम ॥ तेषामु०॥४॥ अजातदन्ता-येकेचित्येचगर्भेप्रपीडिताः ॥ तेषामु०॥५॥ बन्धुवर्गाश्चयेकेचिन्नामगोत्रविवर्जिताः ॥ तेषामु०

१ नीलोद्वाहेपिण्डप्रदानेवायुपुराणोक्तपिण्डप्रदानविधिरपिदृश्यते ॥ तथा चास्मिन्पक्षेएकपञ्चाशत्पिण्डाःस्युः ॥ पुराणान्तरेतु एको-त्तरशतंपिण्डाउक्ताइति ॥

॥ ६ ॥ स्वगोत्रेपरगोत्रेवातेभ्यःपिण्डंददाम्यहम् ॥ ७ ॥ उद्बन्धनमृतायेचविषशस्त्रहताश्चये ॥ 
शृंगिभिर्दंष्ट्रिभिर्वापितेभ्यःपिण्डंददाम्यहम् ॥८॥ अग्निदग्धाश्चयेकेचिद्विद्युद्दग्धास्तथापरे ॥ भूत
 प्रेतपिशाचेभ्यःतेभ्यःपिण्डंददाम्यहम् ॥ ९ ॥ अन्यैर्दुर्मरणैश्चैवयेक्षुधातृषयामृताः ॥ राजचौर-
हतायेचतेभ्यःपिण्डंददाम्यहम् ॥ १० ॥ पशुयोनिंगतायेचपक्षिकीटसरीसृपाः ॥ अथवावृक्ष-
योनिस्थास्तेभ्यःपिण्डंददाम्यहम् ॥ ११ ॥ जात्यंतरसहस्राणिभ्रमन्तिस्वेनकर्मणा ॥ मानुषंदुर्लभं
येषांतेभ्यःपिं० ॥ १२ ॥ दिव्यंतरिक्षभूमिस्थाःपितरोबान्धवादयः ॥ असंस्कृतामृतायेचतेभ्यः
पिं० ॥ १३ ॥ रौरवेचान्धतामिस्रेकालसूत्रेचयेगताः ॥ असिपत्रवनेघोरेकुंभीपाकेचयेगताः ॥
तेषामु० ॥ १४ ॥ नरकेषुसमस्तेषुयातनासुचसंस्थिताः ॥ असंख्ययातनासंस्थायेनीताश्चयमा-
लये ॥ तेषामु० ॥१५॥ अनेकयातनासंस्थाःप्रेतलोकेचयेगताः ॥ येबान्धवाअबांधवायेयेन्य-
जन्मनिबान्धवाः ॥ तेषामु० ॥१६॥ येकेचित्प्रेतरूपेणवर्तन्तेपितरोमम ॥ तेसर्वेतृप्तिमायान्तु- 
पिण्डदानेनसर्वदा ॥ तेषामु० ॥ १७ ॥ विद्युद्दंष्ट्रिहतायेचविषवारिदवाग्निभिः ॥ शस्त्रास्त्रयंत्रपा-
षाणैराशिभिःशृंगिभिर्ग्रहैः ॥ तेषामु० ॥१८॥ कुष्ठापस्माररोगादिभगंदरजलोदरैः ॥ गंडमाला

पाण्डुरोगैःक्षयव्याधिमृताश्चये ॥ तेषामु० ॥ १९ ॥ बंदिगृहेमृतायेचदस्युव्याघ्रादिघातिताः ॥
चाण्डालैर्निहतामार्गेअशौचाशयनेमृताः ॥ तेषामु० ॥ २० ॥ विप्रहागुरुतल्पश्चसुरापोस्वर्णहा-
रकः ॥ मातृहामातृगामीचपरदाररताश्चये ॥ तेषामु० ॥ २१ ॥ ब्रह्मस्वहारिणोयेचसुरापाःस्वर्ण
हारिणः ॥ गुरुदाररतामूढापरदाररताश्चये ॥ तेषामु० ॥ २२ ॥ भ्रूणब्रह्मवधोपेतायेचाप्यात्मह-
ताजनाः ॥ अगम्यगमनेयुक्ताद्युतकृत्यरताश्चये ॥ तेषामु० ॥ २३ ॥ नानाविधेषुपापेषुनाभकर्म-
मदोद्धताः ॥ कुब्जमूकाश्चबधिराःपितृमातृकुलोद्भवाः ॥ तेषामु० ॥२४॥ जायावंशसमुद्भूताबा-
लवृद्धाश्चमूर्खकाः ॥ युवानोगर्भसंस्थाश्चमित्राणिसुहृदस्तथा ॥ तेषामु०॥ २५ ॥ तिर्यग्योनिषु-
येजाताइहैवामुत्रजन्मानि ॥ तेसर्वेतृप्तिमायान्तुपिण्डदानेनशाश्वतिं ॥ तेषामु०॥ २६ ॥ जरायु-
जाश्चयेजातापिशाचादिषुजन्तवः ॥ अण्डजाश्चैवयेजातागृध्राद्याःपापजन्तवः ॥ तेषामु०॥२७॥
अञ्जनिभाश्चयेजाताःप्रवालसदृशाश्चये ॥ तामिस्रेषुचयेजाताबन्धत्वंचसमागताः ॥ तेषामु०
॥ २८ ॥ नरकेलोहकीलेतुपतिताःपापकर्मणा ॥ महानरकेचयेजाताः पापिष्ठाःकर्मकारिणः ॥
तेषामु० ॥ २९ ॥ शाल्मलीनरकेजाताकंटकैश्चविशीर्यते ॥ रौरवेनरकेजाताअन्नपानाविवर्जिताः

तेषामु० ॥३०॥ कुड्मलेनरकेजाताअमेध्यदर्शनेरताः ॥ पूयगन्धेचनरकेशरीरेतावदेवतु ॥ तेषा-
मु० ॥ ३१ ॥ गोघ्न्यश्चबालघातीचआत्मघातीचयेजनाः ॥ अगम्यागमनैर्युक्तासंसर्गेदुष्ट-
संगताः ॥ तेषामु० ॥ ३२ ॥ तिर्यग्योनिंगतायेचवृक्षयोनिंगताश्चये ॥ अथवाकृमियोनिस्था-
दंशयोनित्वमागताः ॥ तेषामु० ॥ ३३ ॥ मृत्तिकेनरकेजातामृद्भक्षणेचतत्पराः ॥ कालसूत्रे-
चनरकेयेजाताःपापकर्मिणः ॥ तेषामु० ॥ ३४ ॥ संघातसंज्ञेनरकेस्वमांसंभक्षयंतिये ॥ लोहि-
तेनरकेयेचरक्तपाश्चैवजन्तवः ॥ तेषामु० ॥३५॥ उद्बंधनरकेजाताऊर्ध्ववक्त्रविवर्जिताः ॥ सवि-
षेनरकेजातादस्युभिर्घातिताःपुनः ॥ तेषामु० ॥३६॥ तपनंनामनरकंतप्तताम्रमयंभृशम् ॥ तत्र-
येपातिताःपापाःपापकर्ममदोद्धताः ॥ तेषामु० ॥३७॥ महतिनरकेजातामहापातकसंज्ञकाः ॥
महापथेचनरकेलोहकंटकसंयुते ॥ तेषामु० ॥ ३८ ॥ षडशीतिसहस्राणीप्रमाणंपरिकल्पते ॥
तप्यन्तेपापकर्माणोमहापातककारिणः ॥ तेषामु०॥३९॥ कुंभीपाकेचनरकेपच्यन्तेतैलवच्चये ॥ 
अन्तिकेनरकेयेवैतृष्णार्ताःपतिताश्चये ॥ तेषामु० ॥४०॥ तप्यन्तेपापकर्माणोमहापातकसंज्ञके॥
महापातकजान्घोरान्नरकान्प्राप्यदारुणान् ॥ तेषामु०॥४१॥ कर्मक्षयेनसर्वेतेपिण्डदानेनसर्वदा ॥

सूर्यलोकेचयेजातावस्वादिषुचयेगताः ॥ अन्तरिक्षेचयेजातावायुभूताजलार्थिनः ॥ तेषामु०
॥४२॥ प्रकृतेविकृतेयेवैयेजाताभुविमानवाः ॥ उच्छिन्नकुलवंशानांयेषांदाताकुलेनहि ॥ तेषामु०
॥४३॥ रुद्रलोकेषुयेजातायेचपंचत्वमागताः ॥ तेषामु० ॥ ४४ ॥ आब्रह्मस्तम्बपर्यन्तंयत्किंचि-
त्सचराचरम् ॥ मयादत्तेनपिण्डेनतृप्तिमायातुसर्वदा ॥ तेषामु० ॥ ४५ ॥ आब्रह्मणोयेपितृ-
वंशजातामातुस्तथावंशभवामदीयाः ॥ वंशद्वयेयेममदासभूताभृत्यास्तथैवाश्रितसेवकाश्च ॥
तेषामु० ॥४६॥ मित्राणिशिष्यापशवश्चवृक्षादृष्टाश्चस्पृष्टाश्चकृतोपकाराः ॥ जन्मान्तरेयेमम-
संगताश्चतेभ्यःस्वधापिण्डमहंददामि ॥४७॥ अतीतकुलकोटीनांसप्तद्वीपनिवासिनाम् ॥ आब्र-
ह्मभुवनाल्लोकास्तेभ्यःपिण्डंददाम्यहम् ॥ ४८ ॥ उच्छिन्नकुलवंशानांयेषांदाताकुलेनहि ॥ धर्म-
पिण्डोमयादत्तअक्षय्यमुपतिष्ठतु ॥४९॥ पुनःप्रत्यवनेजनं ॥ सूत्रवस्त्राच्छादनम् ॥ सव्यं ॥ हस्तप्रक्षालनम्
३१ आचम्य ॥ अद्येत्यादि०अपसव्यंनीलपदश्राद्धनिमित्तंपिण्डपूजनमहंकरिष्ये ॥ सव्यं॥ पिण्डेचन्दनं-
स्वधेतियोजनीयम् ॥ पुष्पंधूपंदीपंनैवेद्यंशेषान्नं ॥ फलंताम्बूलं ॥ हिरण्यदक्षिणाम् ॥ अर्घ्यम्--कुश-
विप्ररसंपन्नाःपितरःपिण्डरूपिणः ॥ अयमर्घ्योमयादत्तःपुत्रपौत्रविवृद्धये ॥१॥ इतिमन्त्रेणनालिकेरार्घ्यं-

परिकल्पयेत् ॥ ब्राह्मणभोजनसङ्कल्पः—अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअस्मत्पितुः(मातुःवा)नीलप-
दसाङ्गतासिद्ध्यर्थमष्टोत्तरशतब्राह्मणान्सपत्नीकान्यथासंख्याकान्वाभोजयिष्येतेननीलपदश्रा
द्धे(वृषपदे)पितरःप्रीयन्ताम् ॥ सव्यं ॥ दानसङ्कल्पः—अद्यपूर्वो० तिथौकृतस्यनीलोद्वाहाख्यस्यक-
र्मणःसाङ्गतासिद्ध्यर्थंगोनिष्क्रयीभूतंद्रव्यमाचार्यायतुभ्यमहंसंप्रददे ॥ पुनर्जलमादाय—कृतस्यनी-
लो० अनडुन्निष्क्रयीभूतंद्रव्यंतुभ्यमहं० ॥ कृतस्यनीलो० सा० वृतेभ्योब्राह्मणेभ्योयथोत्साहंदाक्षि-
णांदास्ये ॥ कृतस्यनीलोद्वाहाख्येकर्मणिन्यूनातिरिक्तदोषपरिहारार्थंनानानामगोत्रेभ्योब्राह्मणे-
भ्योभूयसीं० ॥ तेनआराधितकर्माङ्गदेवताःप्रीयन्तांनमम ॥ ततःतिलपात्रादिघृतपात्रपर्यन्तानिदानानित-
थाचदशदानानिमहाष्टदानानिचस्वशक्त्यानुसारतःदद्यात् ॥ ( तिलपात्रंगौःअष्टविधंपदंउमामाहेश्वरंमहिषीशय्यावृषभवरुण
पात्रंघृतपात्रंसप्तधान्यानिगजंअश्वंरथमित्यादि० दशदानानि ) अद्यपूर्वो० तिथौमयाअद्याह्नियत्कृतंनीलोद्वाहा-

१ सहस्रंभोजयेद्विप्रान्तदर्द्धंमथापिवा ॥ शतसंख्यापिभोक्तव्यायथावित्तानुसारतः ॥ २ ततोदानानिदेयानिविविधानिस्वश-
क्तितः ॥ उत्सृजेद्वृषभेदद्याचतुर्दशपदानिच ॥ शय्यांसोपस्करांचैवस्वच्छवस्त्रादिभूषिताम् ॥ लक्ष्मीनारायणप्रीत्यैदद्याद्दासांसिशक्तितः ॥
भूमिंसस्यवतींदद्याद्रुद्रलोकफलाप्तये ॥ तथैवसप्तधान्यानिमहादानानिवैदश ॥ भोजनंबहुसर्पिर्भिर्ब्राह्मणांश्चात्रभोजयेत् ॥ आचार्यंपूजयेद्वै-
वसपत्नीकंविचक्षणः ॥ गोभूहिरण्यवस्त्रैश्चयेनतुष्येज्जनार्दनः ॥

रुयंकर्मतन्मध्येकालहीनंक्रियाहीनंद्रव्यहीनंभक्तिहीनंतत्सर्वंश्रीमदाराधितदेवताप्रसादाद्ब्राह्मणप्रसादात्तीर्थप्रसादाच्चपरिपूर्णमस्तु ॥ अस्त्वितिद्विजाः ॥ अपसव्यं ॥ एकेचास्मत्० ॥ इति मन्त्रेणस्नानीयवस्त्रंनिपीड्यपिण्डानभिवादयेत् ॥ पितादेवःपितागुरु० ॥ १ ॥ शमीपत्रप्रमाणेन० ॥ २ ॥ पिण्डानामुद्धरणम् ॥ पिण्डास्तुगोऽजविप्रेभ्योदद्यादग्नौजलेऽपिवा ॥ तीर्थश्राद्धेतथाप्स्वेवप्रक्षिपेद्दक्षिणामुखः ॥ एकोद्दिष्टंहुनेच्चाग्नौ० ॥ सव्यं ॥ आचम्य ॥ ततउत्सर्गः—अद्यपूर्वोतिथौअपसव्यं यथाभीप्सितकामसमृद्ध्यर्थंगोत्राणांअस्मत्पितृपितामहप्रपितामहादिसमस्तपूर्वजानामुद्धरणार्थंइमंनीलवृषंसुवर्णश्रृङ्गंरौप्यखुरंताम्रपृष्ठंप्रवालकर्णंसुवर्णकण्ठाभरणरत्नातिलकोपेतंमौक्तिकाक्षंस्वर्णमुकुटघण्टाभरणभूषितंसुवर्णचक्रंरजतत्रिशूलंग्रीवालम्बितपादवस्त्रयुग्माच्छादितंगन्धपुष्पाद्यर्चितंसयज्ञोपवीतंअव्यंगंत्रिशूलचक्राङ्कितंरुद्रदैवतंनामगोत्रैर्ब्राह्मणैर्वेदपुराणागमोक्तैर्वारुणैर्मंत्रैस्तीर्थोदकेनाभिषिक्तंपुण्याश्वमेधफलप्रदंपुष्पगन्धाद्यलंकृतलोहितपाण्डुरपीतनीलगुणयुक्तवत्सतरीचतुष्टयसहितंआयुरारोग्यैश्वर्याद्यष्टविधलक्ष्मीप्राप्तयेपुत्रपौत्रादिसन्ततिवृद्ध्यर्थंस्वर्गफलप्राप्तयेसर्वदुरितोपशमनायवेदशास्त्रोक्तफलप्राप्त्यर्थंमातापितृश्रेयसेआत्मश्रेयसेरुद्ररूपिणं

ततःसव्येनपाणिनावृषपुच्छंगृहीत्वादक्षिणेनपाणिनासहिरण्याःसतिलाःसकुशाअपआदायएतंयु-
अ० क० वृषमहमुत्सृंजामि ॥ ततःसव्येनपाणिनावृषपुच्छंगृहीत्वादक्षिणेनपाणिना... एतंयुवानंपतिंवोददामितेनक्रीडन्तीश्चरथप्रियेण ॥ मानःसाप्तजनुषाऽसुभगा-
वानमितिपठेत्—ॐएतंयुवानंपतिंवोददामितेनक्रीडन्तीश्चरथप्रियेण ॥ मानःसाप्तजनुषाऽसुभगा-
इत्युच्चार्यसहिरण्यंसतिलमुदकंभूमौक्षिपेत् ॥ सव्यं ॥ ततईशानदिशिपञ्चपदानिवृषंचा-
।१८२। रायस्पोषेणसमिषामदेम ॥ चतस्रस्तेप्रयच्छामिधर्मत्वंप्रीयतामिति॥
लयेत् ॥ ततःप्रार्थना—धर्मायनीलरूपायवरायरुद्ररूपिणे ॥ कथिताक्रीडनार्थंचत्वयासार्द्धंत्रजन्तुताः ॥ धर्म-
इमाःसुरूपाःसुपत्न्यश्चचतस्रस्ताश्चगोपते ॥ त्वयिमुक्तेऽक्षयालोकाममसन्तुनिरामयाः ॥ ततःइडेरन्तेतिम-
त्वंवृषरूपेणगवामानन्दकारक ॥ एतातेऽ
न्त्रेणवत्सतरीदक्षिणकर्णेजपेत्—ॐइडेरन्तेहव्येकाम्येचन्द्रेज्योतेदितिसरस्वतीमहिविश्रुति ॥ एतातेऽ
अघ्न्येनामान्देवेभ्योमासुकृतंम्ब्रूतात् ॥ हेवत्सतरीत्वंगोत्रस्यअस्मात्पितुः ( मातुःवा ) पर-
ततःमयोभूरसीत्यनुवाकेनवृषमभिमन्त्रयेत—ॐमयोभूरभिमांवाहिस्वाहामारुतोसिम-
लोकेसुकृतंब्रूहि ॥ ततःमयोभूरसीत्यनुवाकेनवृषमभिमन्त्रयेत—ॐमयोभूरभिमांवाहिस्वाहामारुतोसिम- ।१८२।
लोकेसुकृतंब्रूहि ॥ ॐमयोभूरभिमांवाहिस्वाहा ॥१॥
रुतांङ्गणःशम्भूर्मयोभूरभिमांवाहिस्वाहावस्यूरसिदुवस्वाञ्छम्भूर्मयोभूरभिमांवाहिस्वाहा ॥१॥

---

१ दक्षिणेचैवस्कंधेचनीलोत्सर्गंतुकारयेत् ॥ उत्सृज्यमानेवृषभेइतिमन्त्रमुदीरयेत ॥ धर्मत्वं० ॥ अभिवंद्यततः पश्चाद्गच्छन्तंतमनु-
व्रजेत् ॥ घृतपात्रेचसौवर्णेकुर्यान्मुखनिरीक्षणम् ॥

यास्तेऽअग्नेसूर्य्येरुचोदिवमातन्वान्तिरश्मिभिः ॥ ताभिर्नोऽअद्यसर्वाभीरुचेजनायनस्कृधि ॥२॥
यावोदेवाःसूर्य्येरुचोगोष्वश्वेषुयारुचः ॥ इन्द्राग्नीताभिःसर्वाभीरुचन्नोधत्तबृहस्पते ॥३॥ रुचन्नोधे-
हिब्राह्मणेषुरुचꣳराजसुनस्कृधि ॥ रुचंविश्येषुशूद्रेषुमयिधेहिरुचारुचम् ॥४॥ तत्त्वायामि० स्वर्णघ-
र्म्मꣳस्वाहास्वर्णार्क्कꣳस्वाहास्वर्णशुक्रꣳस्वाहास्वर्णज्योतिःस्वाहास्वर्णसूर्य्यःस्वाहा ॥ ६ ॥
विसर्जनमन्त्रः—मुक्तस्त्वंभोमयावत्सगच्छत्वंयत्ररोचते ॥ चरवनसहस्रेषुकुरुक्रीडांचगोकुले ॥ इतिविसृ-
ज्याञ्जलिंबध्वाप्रार्थयेत्—धर्मस्त्वंवृषरूपेणब्रह्मणानिर्मितःपुरा ॥ तवोत्सर्गप्रभावेणपितरःस्वर्गतामम ॥
नमोवृषभदेवेशभूतर्षिपितृपोषक ॥ त्वयिमुक्तेऽक्षयालोकाःपितरःसन्तुनिर्भयाः ॥ धारणाद्धर्ममि-
त्याहुर्धर्मेणविधृताःप्रजाः ॥ चरत्वंधर्मरूपेणवृषवत्सतरीयुतः ॥ ततस्तृणंभक्ष्जलंपिबयथेष्टंपर्यटेत्युक्त्वाई-
शानींप्राचींवाप्रेरयेत् ॥ मुखावलोकनम्—आज्यंतेजःसमुद्दिष्टंआज्यंपापहरंपरम् ॥ आज्यंसुराणामाहा-
रआज्येलोकाःप्रतिष्ठिताइति ॥ होमसङ्कल्पः—इहरत्यादिप्राजापत्यन्तंयद्यद्द्रव्यंयावद्यावत्सख्याकं-
येनयेनमन्त्रेणयस्यैयस्यैदेवतायैहुतंसासादेवताप्रीयताम् ॥ तेदेवाःशांतिदा० वरदाभवेयुः ॥
संस्रवप्राशनम्—पवित्राभ्यांमार्जनम् ॥ ब्रह्मौपवित्रप्रतिपत्तिः ॥ बर्हिर्होमः ॥ प्रणीताविमोकः ॥

आपःशिवाः० ॥ ब्रह्मणेपूर्णपात्रदानम् ॥ आचार्यायदक्षिणां ॥ बटुकमेकंतथाचकुमारिकात्रय भोजनं ॥ आशीर्वादः—ॐआब्रह्मन्ब्राह्मणो० ॥ १ ॥ अग्निविसर्जनम्—इदछहविः० ॥ १ ॥ कृतेनाने-ननीलोत्सर्गकर्मणाभगवान्श्रीआराधितदेवःप्रीयताम् ॥ अञ्जलिंबध्वावदेत्—अस्मिन्नीलोत्सर्गवि-धौयन्न्यूनातिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनाच्छ्रीमहाविष्णोःप्रसादात्सर्वंपरिपूर्णमस्त्विति-भवन्तोब्रु० ॥ अस्त्वितिद्विजाः ॥ तीर्थग्रहणम्—अकालमृत्यु० ॥ तुलसीदलंगृहीत्वा—यस्यस्मृत्या० ॥ इतितुलसीदलंसमर्प्यपितृभ्यात्वाप्रणमेत् ॥इति दालभ्योक्त अशुभकर्मप्रदीपे नीलोत्सर्गः ॥

१ नीलोत्सर्गोवरोलोकेसर्वपापविवर्जितः ॥ तारयेत्सप्तगोत्राणांकुलमेकोत्तरंशतम् ॥ ( पुरुषाः ) पितामाताचभार्याचदुहिताभगिनी तथा ॥ पितृष्वसामातृष्वसासप्तगोत्राण्यनुक्रमात् ॥ चतुर्विंशतिर्विंशत्याषोडशद्वादशैवहि ॥ एकादशदशाष्टौचकुलानांनिर्णयःक्रमात् ॥ चतुर्विंशतिःपितृतोमातृतोविंशतिःस्मृताः ॥ भार्यायाःषोडशप्रोक्तादुहितुर्द्वादशैवहि ॥ एकादशभगिन्याश्चपितृष्वसुर्दशैवहि ॥ मातृष्वसुस्त-थाष्टौचकुलमेकोत्तरंशतम् ॥ पितृपितुष्वसुःपुत्राःपितृमातुःष्वसुःसुतः ॥ पितृमातुलपुत्राश्चविज्ञेयापितृबान्धवा. ॥ मातृपितुःष्वसुःपुत्रामातृमातुः-ष्वसुःसुताः ॥ मातृमातुलपुत्राश्चविज्ञेयामातृबान्धवाः ॥ आत्मपितुःष्वसुःपुत्राआत्ममातुःष्वसुःसुताः ॥ मातुलपुत्राश्चविज्ञेयाःसर्वेतआत्मबा-न्धवाः ॥ इत्यादिबन्धुवर्गाणामुद्धरेत्कुलगोत्रजानिति ॥

अथ तीर्थेऽस्थिप्रक्षेपविधानम् ॥ आदौताम्रपुटेअस्थिनिधाय ॥ अजिनंकम्बलंदर्भागोकेशाःस्वर्णमेवच ॥ भूर्जपत्रंताम्रपत्रंसप्तधावेष्टनंस्मृतम् ॥ इतिपक्षान्तरेएकःपक्षोग्राह्यः ॥ ततःअकृतचाण्डालादिस्पर्शःसन्तीर्थेगत्वासचैलस्नानंकृत्वापश्चात्पालाशपुटेअस्थिस्थापयेत्—अद्यपूर्वो॰तिथौअपसव्यंअ॰ गोत्रस्यअ॰ प्रेतस्यपुनरावृत्तिरहितब्रह्मलोकफलप्राप्त्यर्थंअमुकतीर्थेअस्थिप्रक्षेपमहंकरिष्ये ॥ सव्यं ॥ अस्थीनिपञ्चगव्येनप्रक्षाल्याहिरण्यकलशेमधुदुग्धघृतशर्करायवतिलमिश्रितानिकृत्वाअस्थिपिण्डेनिधाय ॥ तद्दक्षिणे ॥अपसव्यंअद्यपूर्वो॰तिथौब्रह्मलोकफलप्राप्त्यर्थंयथाशक्त्यासंपादितहोममहंकरिष्ये ॥ सव्यं ॥ ततःअरत्निमात्रस्थण्डिलेपञ्चभूसंस्कारान्कृत्वाविधिनामानंअग्निंस्थापयेत् ॥ ब्रह्मोपवेशनादिकुशाण्डिकर्तव्या ॥ ततःचक्षुषि ॥ ॐमनःप्रजापतयेस्वाहाइदंप्रजापतयेनमम ॥ १ ॥ ॐइन्द्रायस्वा॰ ॥ २ ॥ ॐअग्नयेस्वा॰इदंअ॰ ॥ ३ ॥ ॐसोमायस्वा॰इदंसो॰॥४॥ ततोदिक्पालपूजनम् ॥वामहस्तेअक्षतान्गृहीत्वापूर्वादिदशदिशिनिक्षिपेत्ॐपूर्वे इन्द्रायनमः॥

---

१ आदौतीर्थेऽस्थिक्षेपःपश्चात्तीर्थविधिः इदसर्वंदक्षिणावर्जमपसव्येनेतिदिवोदासः ॥ आदौतीर्थविधिःपश्चादस्थिनिक्षेपइतिकेचित् ॥ न्यायविदस्तु, अस्थिप्रक्षेपजन्यफलोद्देशेनगतेनादावस्थिप्रक्षेपस्ततस्तीर्थविधिःकार्यइति ॥ यस्तुतीर्थफलोद्देशेनगच्छन्ननुसंगादस्थीनिनयतिसचादौसकलंतीर्थकृत्यंनिर्वर्त्यपश्चादस्थिनिक्षेपंकुर्यादिति ॥

आग्नेय्यां अग्नये० ॥ दक्षिणे यमाय० ॥ नैर्ऋत्यां निर्ऋतये० ॥ पश्चिमे वरुणाय० ॥ वायव्यां वायवे० ॥ उत्तरे कुबेराय० ॥ ईशान्यां ईशानाय० ॥ ऊर्ध्वं ब्रह्मणे० ॥ अधस्तात् अनन्ताय० ॥१०॥ इन्द्रादिदशदिक्पालदेवताभ्यो नमः इदमत्र गन्धंपुष्पं समर्पयामि ॥ तदेतदृचा०॥ विधिना मां नं अग्निं स्थापयामि ॥ इदमत्र गन्धंपुष्पं स० ॥ ततः सहस्रशीर्षेत्यादिषोडशकण्डिकाभिः आज्याहुतिञ्जुहुयात् ॥ ब्रह्मयज्ञानमितिसमर्चेनाज्याहुतिंजुहुयात् ॥ ॐ ब्रह्मयज्ञानं० वि॑वः स्वाहा इदं ब्रह्मणे नमम ॥१॥ ॐ ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यम्मरुद्भ्यो वैश्यन्तपसे शूद्रन्तमसे तस्करन्नारकाय वीरहणम्पाप्मने क्लीबमाक्रयायाऽअयोगूम्कामाय पुँश्चलूमतिक्रुष्टाय मागधम्स्वाहा इदं ब्र० ॥ २ ॥ ब्राह्मणासः पितरः सोम्यासः शिवे नो द्यावापृथिवीऽअनेहसा ॥ पूषा नः पातु दुरितादृतावृधो रक्षा माकिर्नोऽअघशꣳस ईशत स्वाहा इदं० ॥ ३ ॥ ब्राह्मणमद्य विधेयम्पितृमन्तम्पैतृमत्यमृषिमार्षेयꣳ सुधातुदक्षिणम् ॥ अस्मद्राता देवत्रा गच्छत प्रदातारमाविशत स्वाहा इदं ब्र० ॥४॥ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ॥ उपप्रयन्तु मरुतः सुदानवऽइन्द्र प्राशूर्भवा सचा स्वाहा इदं ब्र० ॥५॥ ब्राह्मणोऽस्य मुखमासी० अजायत स्वाहा इदं ब्र० ॥ ६ ॥ प्रनूनम्ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ॥ यस्मिन्निन्द्रो वरुणो मित्रोऽअर्यमा देवाऽओकाꣳसि

सिचक्रिरेस्वाहाइदंब्र०॥ ७ ॥ ततोनाममन्त्रेणचतुर्दशयमानांनामभिराज्याहुतिंजुहुयात् ॥ तद्यथा--ॐयमाय-स्वाहाइदंयमायनमम ॥ यथामन्त्रस्तथैवत्यागः ॥ ॐधर्मराजायस्वा० ॥ ॐमृत्यवेस्वा० ॥ ॐ अन्तकायस्वा० ॥ ॐवैवस्वतायस्वा० ॥ ॐकालायस्वा० ॥ ॐसर्वभूतक्षयायस्वा० ॥ ॐ औदुम्बरायस्वा० ॥ ॐदध्नायस्वा० ॥ ॐनीलायस्वा० ॥ ॐपरमेष्ठिनेस्वा० ॥ ॐवृकोदराय-स्वा०॥ ॐचित्रायस्वा० ॥ ॐचित्रगुप्तायस्वा०इदंचि० ॥१४॥ इतिघृताहुतयः ॥ ततउदीरतामवर-इत्यनेनमन्त्रेणाष्टोत्तरशततिलाहुतयोहोतव्याः ॥ तिलानमध्वाज्यशर्करायवैर्मिश्रित्यजुहुयात् ॥ तत्रमन्त्रः—ॐउदीर-तामवरऽउत्परांऽसऽउन्मध्यमाःपितरः सोम्यासः ॥ असुंयऽईयुरवृकाऽऋतज्ञास्तेनोऽवन्तुपित-रोहवेषुस्वाहा ॥१०८॥ अग्नयेस्विष्टकृतेस्वाहाइदम०॥ नवाहुतयः—ॐभूःस्वाहाइदमग्नयेनमम ॥ ॐभुवःस्वाहाइदंवा०॥ॐस्वःस्वाहाइदंसू०॥ ॐत्वन्नोऽअग्ने०स्वाहाइदम०॥ ॐसत्वन्नोऽअग्ने० स्वाहाइदम०॥ ॐअयाश्चाग्ने०स्वाहाइदंअ०॥ ॐयेतेशतंवरुणंये०स्वाहाइदंव०॥ ॐउदुत्तमं० स्वाहाइदंव० ॥ ॐप्रजापतयेस्वाहाइदंप्रजापतयेनमम ॥ ९ ॥ पूगीफलंगृहीत्वाब्रह्मयज्ञानमितिमन्त्रेण पूर्णाहुतिंजुहुयात् ॥ ॐब्रह्मयज्ञानं० ॥ होमसंकल्पः ॥ प्रणीताविमोकान्तंकृत्वाआचार्यायदक्षिणांदद्यात् ॥ ततस्ते-

जोसीतिब्रह्मसूक्तेनअश्वत्थोपरिजलदुग्धसर्वौषधीभिस्तर्पणंकुर्यात् ॥ ॐतेजोसीत्यध्यायः ॥ तदनन्तरंप्रेतोद्देशेनवैष्ण-वंश्राद्धं ॥ तद्यथा ॥ आचम्यप्राणानायम्य ॥ ततःकर्त्तादेशकालौसंकीर्त्यकृतसपिण्डीकरणस्यपार्वणेन-विधिनाहिरण्येनश्राद्धंकरिष्ये ॥ दशाहमध्येतुएकोद्दिष्टविधिनाहिरण्येनश्राद्धंकुर्यात्॥ यदातुसपिण्डीकरणानन्तरमस्थिक्षेपःतदागोत्राणांपितृपितामहप्रपितामहानांवसुरुद्रादित्यस्वरुपाणांब्रह्मलोकादिप्राप्तयेअमुकतीर्थेअस्थिक्षेपाङ्गंहिरण्येनश्राद्धंकरिष्येतिसंकल्पः ॥ दशाहमध्येतुअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वमु-क्तयेअसद्गतिमृत्युविनाशार्थंसद्गतिप्राप्त्यर्थंअमुकतीर्थेअस्थिक्षेपाङ्गंहिरण्येनश्राद्धंकरिष्ये ॥ ब्रा-ह्मणाभावेकुशबटुनिमं०कुशोसि० ॥ इमंलोकं० ॥ अ० गोत्रअ० प्रेतअसुकतीर्थेअस्थिक्षेपाङ्गिभूतंपाद्यंपादावनेजनंपादप्रक्षालनंएषोर्घः ॥ इदमत्रचन्दनपुष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपा-दौप्रक्षाल्य ॥ आचम्य ॥ तिलाक्षतान्गृहीत्वादिग्बन्धः—ऐन्द्र्यांनारायणोरक्षे० ॥ अपवित्रःपवित्रेतिपवित्री-करणम्—अपवित्रःपवित्रोवा० ॥ ताम्रपात्रेसजलतिलयवाक्षतगन्धादिप्रक्षिप्ययदेवेतितिलोदकंविधायउपहारप्रोक्षणं ॥ देशकालौसंकीर्त्य अपसव्यंकृत्वाअ० गोत्रस्यअ० प्रेतस्यएकोद्दिष्टविधिनाश्राद्धंकरिष्ये ॥ अ० गो-त्रायअ० प्रेतायअर्चनंगंधपुष्पंअस्यार्चनविधेःपरिपूर्णतास्तु ॥ धूपंइदमर्चितंत्वोज्योतिःसुज्यो-

निरंतष्ठस्वाहाइदंय० ॥२॥ असियमोऽअस्यादित्योऽअर्वन्नसित्रितोगुह्येनव्रतेन ॥ असिसो-
मेनसमयाविपृक्तऽआहुस्तेत्रीणिदिविबन्धनानिस्वाहाइदंय० ॥ ३ ॥ यमायत्वाङ्गिरस्वतेपितृम-
तेस्वाहा ॥ स्वाहाघर्म्मायस्वाहाघर्म्मःपित्रेस्वाहाइदंय० ॥ ४ ॥ अपेतोयन्तुपणयोसुम्नादेवपी-
यवः॥ अस्यलोकःसुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तंयमोददात्ववसानमस्मैस्वाहाइदंय०
॥५॥ क्रव्यादमग्निम्प्रहिणोमिदूरंयमराज्यङ्गच्छतुरिप्रवाहः ॥ इहैवायमितरोजातवेदादेवे
भ्योहव्यंवहतुप्रजानन्स्वाहाइदंय० ॥६॥ यमायस्वाहान्तकायस्वाहामृत्यवेस्वाहा ॥ ब्रह्म-
णेस्वाहाब्रह्महत्यायैस्वाहाविश्वेभ्योदेवेभ्यःस्वाहाद्यावापृथिवीभ्याᳫस्वाहाइदंय० ॥७॥
ततःइदंविष्णुरित्यादिसप्तमन्त्रैःपूर्ववत्घृताहुतयः ॥ तत्रमन्त्राः—ॐइदंविष्णु०स्वाहाइदंविष्णवेनमम ॥ १ ॥
( एवंसर्वत्रत्यागः ) ॐइरावती०स्वाहाइदंवि० ॥२॥ ॐदेवश्रुतौ०स्वाहाइदंवि० ॥३॥ ॐविष्णोर्नु-
कं०स्वाहाइदंवि० ॥४॥ ॐदिवोवा०इदंवि० ॥५॥ ॐप्रतद्विष्णु०स्वाहाइदंवि०॥६॥ ॐविष्णो-
रराटमसि०स्वाहाइदंवि०॥७॥नक्षत्रेभ्यःस्वाहाइतिमन्त्रेणसप्तविंशतिनक्षत्रेभ्यःघृताहुतयःमन्त्रविभागेनहोतव्याः॥
कृत्तिकादिभरणीपर्यंतेभ्योघृताहुतयःॐकृत्तिकायैस्वाहाइदंकृत्तिकायैनमम ॥ यथादैवतंत्यागः ॥ ॐरोहि-

ण्यैस्वाहा० ॥ ॐमृगशिरसे० ॥ ॐआर्द्रायै० ॥ ॐपुनर्वसवे० ॥ ॐपुष्याय० ॥ ॐआश्ले
षायै० ॥ ॐमघायै० ॥ ॐपूर्वाफाल्गुन्यै०॥ ॐउत्तराफाल्गुन्यै०॥ ॐहस्ताय०॥ ॐचित्रायै०॥
ॐस्वात्यै०॥ ॐविशाखायै०॥ ॐअनुराधायै०॥ ॐज्येष्ठायै०॥ ॐमूलाय०॥ ॐपूर्वाषाढायै०॥
ॐउत्तराषाढायै०॥ ॐश्रवणाय० ॥ ॐधनिष्ठायै० ॥ ॐशततारकायै० ॥ ॐपूर्वाभाद्रपदे० ॥
ॐउत्तराभाद्रपदे० ॥ ॐरेवत्यै० ॥ ॐअश्विन्यै० ॥ ॐभरण्यै०॥२७॥ ॐनक्षत्रेभ्यःस्वाहा ॥
ॐनक्षत्रियेभ्यःस्वा० ॥ ॐअहोरात्रेभ्यःस्वा० ॥ अर्द्धमासेभ्यःस्वा० ॥ ॐमासेभ्यःस्वा० ॥
ॐऋतुभ्यःस्वा०॥ ॐआर्तवेभ्यःस्वा० ॥ ॐसंवत्सरायस्वा०॥ ॐद्यावापृथिवीभ्याᳬस्वा० ॥
ॐचंद्राय० ॥ ॐसूर्य्याय०॥ ॐरश्मिभ्यःस्वा० ॥ ॐवसुभ्यःस्वा०॥ ॐरुद्रेभ्यःस्वा०॥ ॐआ-
दित्येभ्यःस्वा० ॥ ॐमरुद्भ्यःस्वा० ॥ ॐविश्वेभ्योदेवेभ्यःस्वा० ॥ ॐमूलेभ्यःस्वा० ॥ ॐशा-
खाभ्यःस्वा० ॥ ॐवनस्पतिभ्यःस्वा० ॥ ॐपुष्पेभ्यःस्वा० ॥ ॐफलेभ्यःस्वा० ॥ ॐओषधी- १२०७
भ्यःस्वा० ॥ ॐयदस्यकर्म्मणोत्यरीरिचंयद्वान्यूनमिहाकरम् ॥ अग्निᳬस्विष्टकृद्विद्वांस्विष्टᳬसुहुतंक-
रोतुस्वाहाइदंइन्द्रायनमम ॥ ततोग्रहाणांग्रहमन्त्रैश्चरुहोमः ॥ ततोभूतस्यजातवेदसोतिमन्त्रेणअष्टोत्तरशतसंख्याक-

पायसचरुहोमः ॥ ॐ जातवेदसे० स्वाहा ॥१०८॥ तदनन्तरं यमायत्वेत्यादिभिर्यत्कर्मणात्यरीरिचं इत्यन्तैश्च पायसचरुहोमः ॥ [ यमायत्वेत्यादिक्रव्यादमग्निमित्यन्तैः मन्त्रैः सप्तयमाहुतयः ॥ इदंविष्णुरित्यादिविष्णोरराटमित्यन्तैः सप्तमन्त्रैर्विष्णोराहुतयः ॥ अश्विनीत्यारभ्ययत्कर्मणात्यरीरिचमित्यन्तैरष्टाविंशतिराहुतयः ॥ ] ततोग्रहाणांतिलहोमः ॥ [ भूतायत्वेति ] नमोस्तुसर्वभूतेभ्यः स्वाहेतिमन्त्रेणसार्द्धशतद्वयं [ २५० ] भूतस्यतिलहोमः तदनन्तरं दशसहस्रगायत्रीजपस्यदशांशहोमस्तिलैः कार्यः ॥ ततो ग्रहाणांफलहोमः ॥ ततोभूतस्यफलस्थानेषोडशमाषान्नवटकानिनमोस्तुसर्वभूतेभ्यः स्वाहेति मन्त्रेणहोतव्यानि ॥ त्र्यम्बकमितिमन्त्रेणगुग्गलहोमः ॥ जातवेदसेतिमन्त्रेणराक्षोघ्नसूक्तेनवासर्षपहोमः ॥ श्रीसूक्तेनलक्ष्मीहोमः ॥ ग्रहाणामुत्तरपूजनम् ॥ स्विष्टकृद्धोमः ॥ नवाहुतयः ॥ मूर्द्धानन्दिवेतिमन्त्रेणाग्निपूजनम् ॥ पूर्णाहुति होमः ॥ पूर्णाहुतिसमयेशंखपटभेरीमृदङ्गानांवादनंकार्यम् ॥ शुक्रज्योत्यनुवाकेनघृतेनाच्छिन्नधारया ॥ घृतकुंभंवसोर्द्धारामग्नेरुपरिपातयेत् ॥१॥ चमकान्वसुधानोक्तान्वसोर्द्धाराहुतौपठेत् ॥ शुक्रज्योत्यवाकेनपूर्णाहुतिहोमः ॥ होमसंकल्पः ॥ रुद्रकलशोदकेनअभिषेकंकुर्यात् ॥ आशीर्वादः ॥ अग्निविसर्जनम् ॥ ॐ इदꣳहविः०॥१॥ इदंभूतबलिहोमोपार्जितंपुण्यंमहाभूतायउपतिष्ठतु ॥ अद्यपूर्वो० भूतबलिहोमवि-

१ द्राक्षेक्षुपूगनारिंगजम्बीरंबीजपूर्वकं ॥ उर्वारुनारकेरंस्यादाडिमानियथाक्रमम् ॥

धेःसर्वंपरिपूर्णमस्तु ॥ कृतेनानेनभूतबलिहोमेनमहाभूतस्यभूतत्वानिवृत्तिः ॥ असद्गति० ॥ सद्गतिप्रा०॥ अक्षयात्० ॥ यममार्गेयमयातना० ॥ उत्पन्नभूतपीडोपशान्तिः ॥ अद्येतनदश-दिक्पतीनांदशदिक्भूतानांबलिदानकर्मयोग्यतावाप्तिः ॥ [1]बलिदानम् ॥ तद्यथा—पूर्वे—इन्द्रंसाङ्गं-सपरिवारंगन्धपुष्पधूपादिभिःसम्पूज्य—ॐक्राँक्रींक्रूँक्रैंक्रौंक्रः ॥ अहोशक्रगजेन्द्रस्थवज्रहस्त-पुरन्दर ॥ तुष्टस्त्रातारमन्त्रेणप्राचींरक्षप्रपूजितः ॥१॥ इन्द्रोमरुत्पतेविष्णोस्वर्गलोकेमहाबल ॥ शतयज्ञाधिपस्त्वंहितुभ्यंयज्ञात्मनेनमः ॥२॥ ॐत्रातारमिन्द्रम्० ॥ पूर्वेइन्द्रायदेवाधिपतयेसा-नुचरायवटकबलवाकला ( बाकरा ) पायसान्नबलिःप्रीयताम् ॥ भोइन्द्रइमंबलिंभक्षभक्षमांसप-रिवारंरक्षरक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्ताक्षेमकर्ताशान्तिकर्तापुष्टिकर्तातुष्टिकर्ता-निर्विघ्नकर्तावरदोभव ॥ अनेनपूजनपूर्वकबलिदानेनइन्द्रःप्रीयताम् ॥ ततःभूतायत्वेतिमन्त्रेण



१ ततोदिशांबलिंदद्याद्विचित्रान्नसमायुतम् ॥ नमोस्तुसर्वभूतेभ्यइतिमन्त्रमुदाहरन् ॥ माषपिष्टेनगोधूमपिष्टेनवाकृतानिदीपकसाधनानि ( दिवडां ) एकादश ॥ सप्तधान्योदन ( बाकरा ) माषान्नवटकपायसान्नसप्तस्थानमृत्तिकाचन्दनपुष्पधूपदीपमित्यादीनुपहारान्गृहीत्वाबलिदानंकुर्यात् ॥ बलिदानसमयेशंखपटहादीनांवादनंकार्यम् ॥

पूर्वस्यांदिशिभूतप्रेतपिशाचराक्षसान्गंधपुष्पधूपादिभिःसम्पूज्य ॥ दीपवटकसप्तमृत्तिकाःनिक्षिप्य-
सर्वभूतेभ्योनमइतिमन्त्रमुचार्यबलिंदद्यात् ॥ भोपूर्वदिक्संस्थाःभूतप्रेतपिशाचराक्षसाःइमंबलिंभक्षतमां-
सपरिवारंरक्षतममसकुटुम्बस्याभ्युदयंकुरुतआयुःकर्तारःक्षेमकर्तारःशान्तिकर्तारःपुष्टि० तुष्टि०
वरदाभवतइतिसर्वभूतेभ्योनमम ॥ १ ॥ आग्नेय्यां—अग्निंगन्धादिभिःसम्पूज्यॐरांरींरूंरैंरौंरः ॥
अहोपावकमेषस्थशक्तिबाणधरप्रभो ॥ त्वन्नोअग्नेतवचर्यारक्षाग्नेयींप्रपूजित ॥ १ ॥ सर्वतेजा-
धिपोदेवोरक्तवर्णोमहाबलः ॥ शक्तिहस्तोमहावीर्योवैश्वानरनमोस्तुते ॥ २ ॥ ॐत्वन्नोऽ
अग्ने० ॥ इतिमन्त्रेणाग्नेयांअग्नयेसानुचरायवटकबल०पायसान्नबलिःप्री० ॥ भोअग्नेइमंबलिंभ-
क्षमांसपरिवारंरक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्ता०वरदोभव ॥ अनेनपूजनपू०बलि०
अग्निःप्री० ॥ ॐयोभूतानामधिपतिर्यस्मिँल्लोकाऽअधिश्रिताः ॥ यऽईशेमहतोमहाँस्तेनगृह्णा-
मित्वामहम्मयिगृह्णामित्वामहम् ॥१॥ इतिमन्त्रेणआग्नेयांदिशिभूतप्रेतपिशाचराक्षसान्गन्धादिभिःसम्पूज्यदीपव-
टकबलवाकलामृत्तिकाःनिक्षिप्यसर्वभूतेभ्योनमइतिमन्त्रमुचार्यबलिंदद्यात् ॥ भोआग्नेयदिक्संस्थाःभूतप्रेतपिशा-
चराक्षसाःइमंबलिंभक्षतमांसपरिवारंरक्षतममसकुटुम्बस्याभ्युदयंकुरुत ॥ आयुःकर्तारः०वर-

दाभवतइतिसर्वभूतेभ्योनमम ॥२॥ दक्षिणस्यां—यमंगन्धादिभिःसम्पूज्यमाँमींमूँमैंमौंमः ॥ अहो
महिषमारूढवैवस्वतसुरार्चित ॥ दण्डपाणेदिशंरक्षसुगन्त्वभ्यर्चितोनिजाम् ॥ १ ॥ दण्डहस्तः
कृष्णवर्णोधर्माध्यक्षोमहाबलः॥ प्रेताधिपतयेतुभ्यंधर्मराजायतेनमः॥२॥ॐसुगन्नुपन्थांप्रदिशन्न
एहिज्योतिष्मध्येह्यजरन्नऽआयुः ॥ अपैतुमृत्युरमृतन्नऽआगाद्वैवस्वतोऽअभयंकृणोतुनः ॥ १ ॥
इतिमन्त्रेणदक्षिणस्यांदिशियमायप्रेताधिपतयेसानुचरायवटकबल०पायसान्नबलिःप्री० ॥ भो-
यमइमंबलिंभक्षमांसपरिवारंरक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ता०वरदोभव ॥ अनेन
पूजनपू०बलि०यमःप्री० ॥ ॐयेनेदम्भूतम्भुवनम्भविष्यत्परिगृहीतममृतेनसर्वम् ॥ येनयज्ञ-
स्तायतेसप्तहोता।तन्मेमनःशिवसङ्कल्पमस्तु ॥ १ ॥ इतिमन्त्रेणदक्षिणस्यांदिशिभूतप्रेतपिशाचराक्षसान्ग-
न्धादिभिःसम्पूज्यदीपवटकबलवाकलामृत्तिकाःनिक्षिप्य " सर्वभूतेभ्योनम "इतिमन्त्रमुच्चार्यबलिंदद्यात् ॥ भोदक्षिण
दिक्संस्थाःभूतप्रेतपिशाचराक्षसाःइमंबलिंभक्षतमांसपरिवारंरक्षतममसकुटुम्बस्याभ्युदयंकुरु-
त ॥ आयुःकर्त्तारः०वरदाभवत, इतिसर्वभूतेभ्योनमम ॥ ३ ॥ नैर्ऋत्यां—निर्ऋतिंगन्धादिभिःस-
म्पूज्यक्षाँक्षींक्षूँक्षैंक्षौंक्षः ॥ अहोनिर्ऋतिदिक्पालकौशिकारूढखड्गभृत् ॥ निर्ऋतेनिर्ऋतिंरक्ष-

असुन्वेतिप्रपूजितः ॥ १ ॥ योवैरक्षोधिपोदेवोनिर्ऋतिर्नीलविग्रहः ॥ महाखड्गधरोनित्यंतस्मै-
निर्ऋतयेनमः ॥२॥ ॐअसुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥ अन्यस-
स्मदिच्छसातइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥१॥ नैऋत्यांदिशिनिर्ऋतयेरक्षोधिपतयेसानु-
चरायवटकबल०पायसान्नबलिःप्री० ॥ भोनिर्ऋतेइमंबलिंभक्षमांसपरिवारंरक्षममसकुटुम्ब-
स्याभ्युदयंकुरु ॥ आयुःकर्ता०वरदोभव ॥ अनेनपूजनपू०बलि०निर्ऋतिःप्री० ॥ यस्मिन्स-
र्वाणिभूतान्यात्मैवाभूद्विजानतः ॥ तत्रकोमोहःकःशोकएकत्वमनुपश्यतः ॥ १ ॥ इतिमन्त्रेण-
नैर्ऋत्यांदिशिभूतप्रेतपिशाचराक्षसान्गन्धादिभिः सम्पूज्यदीपवटकबलबालकामृत्तिकाःनिक्षिप्यभोनिर्ऋतिदिक्संस्थाः
भूतप्रेतपिशाचराक्षसाःइमंबलिंभक्षतमांसपरिवारंरक्षतममसकुटुम्बस्याभ्युदयंकुरुत ॥ आयुः
कर्तारः०वरदाःभवतइतिसर्वभूतेभ्योनमम ॥ ४ ॥ पश्चिमायांदिशि—वरुणंगन्धादिभिःसम्पूज्यवाँ
वींवूंवैंवौंवः ॥ अहोवरुणवारीशपाशभृन्मकरध्वज ॥ वारुणींत्वंदिशंरक्षतत्त्वायामीतिपूजितः॥१॥
शक्तिपाशधरोनित्यंजलराजोमहाबलः ॥ निम्नगःशुक्ररूपश्चनमोस्तुवरुणाप्पते ॥२॥ ॐतत्त्वांया-
मि० ॥१॥ इतिमन्त्रेणपश्चिमेवरुणायजलाधिपतयेसानुचरायवटकबल०पायसान्नबलिःप्री० ॥

भोवरुणइमंबलिंभक्षमांसपरिवारंरक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ता०वरदोभव ॥
अनेनपूजनपू० बलि० वरुणःप्री० ॥ ॐसि॒हँ॒ह्यसिस्वाहासि॒हँ॒ह्यस्याषित्यवनि॒ःस्वाहासि॒हँ॒
ह्यसिब्रह्मवनिःक्षत्रवनि॒ःस्वाहासि॒हँ॒ह्यसिसुप्रजावनीरायस्पोषवनि॒ःस्वाहासि॒हँ॒ह्यस्यावहदेवा-
न्न्यजमानायस्वाहाभूतेभ्यस्त्वा ॥ १ ॥ इतिमन्त्रेणपश्चिमायांदिशिभूतप्रेतपिशाचराक्षसान्ग-
न्धादिभिःसम्पूज्यदीपवटकबलबाकलान्मृत्तिकाःनिक्षिप्यभोपश्चिमादिक्संस्थाःभूतप्रेतपिशा-
चराक्षसाःइमंबलिंभक्षतमांसपरिवारंरक्षतममसकुटुम्बस्याभ्युदयंकुरुत ॥ आयुःकर्त्तारः०वर-
दाभवतइतिसर्वभूतेभ्योनमम ॥ ५ ॥ वायव्यांदिशि–वायुंगन्धादिभिःसम्पूज्ययाँयींयूँयैंयौंयः ॥
अहोवायोमृगारूढजगत्प्राणध्वजायुध ॥ स्वकीयांत्वंदिशंरक्षआनोनियुद्भिरर्चितः ॥१॥ सर्वप्रा-
णाधिपोनित्यंसर्वजन्तुष्ववस्थितः ॥ ध्वजहस्तोमहावीर्योतस्मैवातायतेनमः ॥२॥ ॐआनोनि-
युद्भिः० ॥१॥ इतिमन्त्रेणवायव्यांदिशिवायवेमृगाधिपतयेसानुचरायवटकवल०पायसान्नबलिः
प्री० ॥ भोवायोइमंबलिंभक्षमांसपरिवारंरक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ता०वर-
दोभव ॥ अनेनपूजनपू०बलि०वायुःप्री० ॥ ॐअदित्यैरास्नासीन्द्राण्याउष्णीषः पूषासि० ...

न्त्वास्तृणामिस्वासस्थान्देवेभ्योभुवपतयेस्वाहाभुवनपतयेस्वाहाभूतानांपतयेस्वाहा ॥ १ ॥
इतिमन्त्रेणवायव्यांदिशिभूतप्रेतपिशाचराक्षसान्गन्धादिभिः सम्पूज्यदीपवटकवलबाकलान्मृत्तिकाःनिक्षिप्यभोवायव्यदिक्संस्थाःभूतप्रेतपिशाचराक्षसाः इमंबलिंभक्षतमांसपरिवारंरक्षतममसकुटुम्बस्याभ्युदयंकुरुत ॥ आयुकर्तारः०वरदाभवत इतिसर्वभूतेभ्योनमम ॥६॥ उदीच्यांदिशिसोमंगंधपुष्पादिभिःसंपूज्य ॥ साँसींसूँसैंसौंसः ॥ अहोसोमदशाश्वरथगदाधरवरप्रद ॥
उदीचीवांदिशंरक्षवयꣳसोमेतिपूजितः ॥ सर्वनक्षत्रमध्येयःसोमोराजाव्यवस्थितः ॥ शुक्लवर्णोगदाहस्तोतस्मैनित्यंनमोनमः ॥ ॐवयꣳसोम०महि ॥ इतिमन्त्रेणउत्तरेसोमाययक्षाधिपतयेसानुचरायवटकपायसान्नबलिःप्रीयतां इतिसंकल्प्य ॥ भोसोमइमंबलिंभक्षमांसपरिवारंरक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ता०वरदोभव ॥ ॐइरावतीधेनुमतीहिभूतꣳसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमथितोमयूखैःस्वाहा ॥ १ ॥ इतिमन्त्रेण
२६ उदीच्यांदिशिभूतप्रेतपिशाचराक्षसान्गंधपुष्पादिभिः संपूज्यदीपवटकवलबाकलान्मृत्तिकाः निक्षिप्य ॥ भोउदीचीदिक्संस्थाःभूतप्रेतपिशाचराक्षसाःइमंबलिंभक्षतमांसपरिवारंरक्षतममस-

कुटुम्बस्याभ्युदयंकुरुत ॥ आयुःकर्त्तारः०वरदाभवत ॥ इतिसर्वभूतेभ्योनम ॥७॥ ईशान्यांदिशिई
शानंगंधपुष्पादिभिःसंपूज्य ॥ ॐहाँहीँहूँहैँहौँहः ॥ अहोवृषभमहारूढशूलहस्तसुरार्चित ॥ ऐशा-
नींविदिशंरक्षतमीशानेतिपूजितः ॥ ईशानपुरुषःशुक्लसर्वविद्याधिपोमहान् ॥ शूलहस्तोवि-
रूपाक्षस्तस्मैनित्यंनमोनमः ॥ ॐतमीशानं० ॥ इतिमंत्रेणईशान्यांईशानायभूताधिपतयेसानु-
चरायवटकवल०पायसान्नबलिःप्रीयतांइतिसंकल्प्य ॥भोईशानइमंबलिंभक्षमांसपरिवाररक्षममस-
कुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ता०वरदाभव ॥ ॐयोभूतानामधिपतिर्य्यस्मिँल्लोकाऽअधिश्रि-
ताः ॥ यऽईशेमहतोमहाँस्तेनगृह्णामित्वामहम्मयिगृह्णामित्वामहम् ॥ इतिमन्त्रेणईशान्यांदि-
शिभूतप्रेतपिशाचराक्षसान्गंधपुष्पादिभिः संपूज्यदीपवटकबलबालकान्मृत्तिकाः निक्षिप्यभो-
ईशानदिक्संस्थाःभूतप्रेतपिशाचराक्षसाः इमंबलिंभक्षतमांसपरिवाररक्षतममसकुटुम्बस्याभ्यु-
दयंकुरुत ॥ आयुःकर्त्तारः०वरदाभवत ॥ इतिसर्वभूतेभ्योनमम॥८॥ऊर्ध्वायांदिशि–ब्रह्माणंगन्धादि-
भिःसम्पूज्यआँइँउँएँऔँअः ॥ अहोहंससमारूढकमण्डलुधरप्रभो ॥ ब्रह्मरक्षोर्ध्वगाङ्काष्ठांअस्मे-
रुद्रेतिपूजितः ॥१॥ पालाशकुसुमाकारोब्रह्मासर्वार्थसूत्रधृक् ॥ सर्वलोकपतिर्ज्येष्ठस्तस्मैनित्यंन-

मोनमः ॥२॥ ॐअस्मेरुद्रा०॥१॥ इतिमन्त्रेणऊर्ध्वायांदिशिब्रह्मणेसर्वभूताधिपतयेसानुचराय-
वटकबल०पायसान्नबलिःप्री० ॥ भोब्रह्मन्इमंबलिंभक्षमांसपरिवारंरक्षममसकुटुम्बस्याभ्युदयं
कुरु ॥ आयुःकर्त्ता०वरदोभव ॥ अनेनपूजनपू०बलि०ब्रह्माप्री० ॥ ॐगर्भोऽअस्योषधीनाङ्गर्भो
वनस्पतीनाम् ॥ गर्भोविश्वस्यभूतस्याग्नेगर्भोऽअपामसि ॥१॥ इतिमन्त्रेणऊर्ध्वायांदिशिभूत
प्रेतपिशाचराक्षसान्गन्धादिभिःसम्पूज्यदीपवटकबलबाकलान्मृत्तिकाःनिक्षिप्यभोऊर्ध्वदिक्सं-
स्थाःभूतप्रेतपिशाचराक्षसाःइमंबलिंभक्षतमांसपरिवारंरक्षतममसकुटुम्बस्याभ्युदयंकुरुत॥आ-
युःकर्त्तारः०वरदाभवतइतिसर्वभूतेभ्योनमम ॥९॥ अधस्तादनन्तं—गन्धपुष्पादिभिःसम्पूज्यह्राँह्रीँ
ह्रूँह्रैँह्रौँह्रः ॥ अहोगरुडमारूढशंखचक्रगदाधर ॥ रक्षाधस्ताद्दिशंदेवस्योनापृथिवीमन्त्रतः ॥१॥
पन्नगाधिपतिर्देवोअनन्तोनीलविग्रहः ॥ पातालेवसतिनित्यंअनन्तायनमोनमः ॥ २ ॥ ॐस्यो-
नापृथिवी० ॥ १ ॥ इतिमन्त्रेणअधस्तादनन्तायनागाधिपतयेसानुचरायवटकबल०पायसान्न-
बलिःप्री० ॥ भोअनन्तइमंबलिंभक्षमांसपरिवारंरक्षममसकुटुम्बस्याभ्युदयंकुरु ॥ आयुःकर्त्ता०
वरदोभव ॥ अनेनपूजनपू०बलि०अनन्तःप्री० ॥ ॐपरीत्यभूतानिपरीत्यलोकान्परीत्यसर्वाः

प्रदिशोदिशश्च ॥ उपस्थायप्रथमजामृतस्यात्मनात्मानमभिसंविवेश ॥ १ ॥ इतिमन्त्रेणाध-
स्ताद्दिशिभूतप्रेतपिशाचराक्षसान्गन्धादिभिः सम्पूज्यदीपवटकबलबाकलान्मृत्तिकाःनिक्षिप्य-
भोअधोदिक्संस्थाःभूतप्रेतपिशाचराक्षसाः इमंबलिंभक्षतमांसपरिवारंरक्षतममसकुटुम्बस्या-
भ्युदयंकुरुत ॥ आयुःकर्त्तारः०वरदाभवत इतिसर्वभूतेभ्योनमम ॥१०॥ इतिदिक्पतीनांदिक्भू-
तानांचबलिदानंकृत्वापिप्पलेबलिदानंकार्यम् ॥ ॐअश्वत्थेवो० ॥१॥ इतिमन्त्रेणपिप्पलंगन्धा-
दिभिःसम्पूज्यॐभूतायत्वा० ॥ ॐ"नमोस्तुसर्वभूतेभ्य" इतिमन्त्रद्वयेनपिप्पलस्थान्भूतप्रेत
पिशाचराक्षसान्गन्धपुष्पधूपदीपादिभिःसम्पूज्यदीपाःषोडशवटकानिबलबाकलान्मृत्तिकाः बो-
धमूलेनिक्षिप्यभोपिप्पलसंस्थाःभूतप्रेतपिशाचराक्षसाः इमंबलिंगृह्णीतमांसपरिवारंरक्षतममस-
कुटुम्बस्याभ्युदयंकुरुत ॥ आयुःकर्त्तारःक्षेम०शान्ति०पु० तुष्टिकर्त्तारःवरदाभवतइतिसर्वभूते-
भ्योनमम ॥११॥ वादित्राणांघोषःकार्यः॥ इतिबलिदानम् ॥ अथ महाभूतस्यतथाचक्रौंचादिद्वादशभूता-
नांपायसान्नयवसक्तुतिलमिश्रितेनपिण्डान्दद्यात् स्नानं ॥ आचम्यप्राणानायम्य ॥ विष्णुस्मरम् ॥ अद्यपूर्वो०
भूतश्राद्धनिमित्तंविष्णोःपञ्चोपचारैःपूजनमहंकरिष्ये ॥ श्रीविष्णवेचन्दनंपुष्पंधूपंदीपंनैवेद्यंफ-

लताम्बूलंहिरण्यम्पञ्चोपचारैःपूजनविधेःसर्वंपरिपूर्णमस्तु ॥ भूतायत्वेतिमन्त्रेणभूतस्मरणम् ॥ प्रथमं महाभूतपाद्यन्ते ॥ द्वि०क्रौंचभूतपाद्यन्ते ॥ तृ०बिभीतकभूतपाद्यन्ते ॥ च०हयग्रीवभूतपाद्यन्ते ॥ पं०हयाननभूतपा० ॥ष० खरमुखभूतपा० ॥ स० दीर्घदन्तिभूतपा० ॥ अ०रौरवभूतपा० ॥ न०कालरूपभूतपा० ॥ द०विकटवदनभूतपा० ॥ ए०त्रिकालरूपभूतपा० ॥ द्वा०काकोलभूतपाद्यन्ते ॥ त्र०महिषाननभतपाद्यन्ते ॥१३॥ पाद्यंपादावननेजनंपादप्रक्षालनंएषवोर्घः ॥ इद मत्रचन्दनंपुष्पं ॥ पादार्घोदकनिक्षेपःस्वपादप्रक्षालनं ॥ आचमनं ॥ दिग्बन्धः—ऐन्द्र्यांनारायणोरक्षे० ॥३॥ श्राद्धभूमौ० ॥ ससव्याधा० ॥ पञ्चक्रोशंगयाक्षेत्रंक्रोशमेकंगयाशिरम् ॥ यत्रयत्रस्मरिष्यन्तिपितॄणांदत्तमक्षयम् ॥१॥ इतिसम्प्रार्थ्य ॥ अपवित्रःपवित्रोवा० ॥१॥ कर्मार्थेतिलोदककरणम् ॥ यद्देवेति-तिसृणां० ॥ ॐयद्देवा० ॥१॥ यदिदिवा० ॥२॥ यदिजाग्रद्य० ॥ ३ ॥ इतितिलोदकंविधायपाकप्रोक्षणं कुर्यात् ॥ अद्यपूर्वो०महाभूतस्यतथाचक्रौंचादिद्वादशभूतानांएकतन्त्रेणश्राद्धमहंकरिष्ये ॥ महा-भूतस्यतथाचद्वादशभूतानांएकतन्त्रेणभूतश्राद्धेआसनमिदन्ते ॥ महाभूतादिमहिषाननपर्यन्ते-भ्यःप्रत्येकंसर्वोपचारार्थेअर्चनमिदन्ते ॥ अस्यार्चनविधेःसर्वंपरिपूर्णमस्तु ॥ इदमर्चितंवोज्योतिः

सूर्योज्योतिःसूर्यायपुष्पंशेषोपचाराःसम्पूर्णाविधिवत्भवन्तु ॥ आचमनं ॥ महाभूतादिमहिषा-
ननपर्यन्तेभ्यःनैवेद्यमात्रभोजनमिदन्ते ॥ मुखवासताम्बूलंसहिरण्यं ॥ महाभूतादिमहिषान-
नपर्यन्तंप्रत्येकंअवनेजनमिदन्ते ॥ तिलक्षेत्रंकृत्वा ॥ अयोध्यामथुरामाया० ॥१॥ ईशानाविष्णु० ॥
इतिमन्त्रेणाद्भिःसम्प्रोक्ष्यकुशानास्तीर्यपिण्डान्दद्यात् ॥ पायसान्नयवसक्तुतिलादिमिश्रितेनपिण्डदानम् ॥ तद्यथा—महा-
भूतपिण्डस्ते ॥ क्रौंचभूतपिण्डस्ते ॥ विभीतकभूतपिण्डते ॥ हयग्रीवभूतपिं० ॥ हयाननभूत-
पिं० ॥ खरमुखभूतपिं० ॥ दीर्घदन्तिभूतपिं० ॥ रौरवभूतपिं० ॥ कालरूपभूतपिं० ॥ विकटव-
दनभूतपिं० ॥ विकालभूतपिं० ॥ काकोलभूतपिं० ॥ महिषाननभूतपिं० ॥१३॥ पिण्डेप्रत्यव-
नेजनम् ॥ सूत्रवस्त्राच्छादनं ॥ हस्तप्रक्षालनम् ॥ अद्यपूर्वो०महाभूतादिद्वादशभूतानांपिण्ड-
पूजनमहंकरिष्ये ॥ पिण्डसंस्थभूतेभ्यःचन्दनमिदन्ते ॥ पुष्पंधूपमित्यादि ॥ पिण्डपूजनविधेः
सर्वंपरिपूर्णमस्तु ॥ कुशविष्टरसंपन्नाइत्यर्घ्यंदद्यात् ॥ पिण्डोपरिप्रत्येकमेकैकाञ्जलिंतिलयवदुग्ध-
जलैःशंखेनदद्यात् ॥ तत्रमन्त्रः—ॐभूतायत्वा० ॥ १ ॥ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वती-
राजस्वश्चितानाः ॥ याभिर्म्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्यरातीः ॥२॥ येनापा-

वकुचक्षसा० ॥३॥ येदेवासो० ॥४॥ उपयामगृहीतोस्यन्तर्यँच्छमघवन्पाहिसोमम् ॥ उरुष्य-
रायऽएषोयजस्व ॥५॥ अग्निर्ज्योति०॥६॥ हिरण्यगर्भः० ॥७॥ इषेत्वोर्ज्येत्वा०॥८॥ यज्जा-
ग्रतो०॥९॥ याःफलिनीर्या० ॥१०॥ विश्वतश्चक्षु०॥११॥ हँसःशु० ॥१२॥ येभूतानामधि
पतयो०॥१३॥ पुरुषसूक्तेनपिण्डोपरितर्पणंकुर्यात् ॐसहस्रशीर्षेतिषोडशमन्त्राः ॥ अनादिनिधनोदेव०
॥१॥ अतसिपुष्प०॥२॥ कृष्णकृष्ण० ॥३॥ नारायणसुरश्रेष्ठ० ॥ ४ ॥ एतत्भूतश्राद्धोपार्जितं
पुण्यंमहाभूतायोपतिष्ठतु ॥ अद्यपूर्वो०महाभूतादिद्वादशभूतानांश्राद्धविधेःसर्वंपरिपूर्णमस्तु ॥
कृतेतानेनभूतश्राद्धेनमहाभूतस्यभूतत्वानिवृत्तिः ॥ असद्गति०सद्गतिप्रा०अक्षया०यमयातना०
षट्त्रिंशद्दुर्मरणेभूतपीडोपशान्तिः ॥ अद्येतनकृष्णकलशादिस्थापितमहाभूतस्यसाङ्कल्पितश्रा
द्धयोग्यतावाप्तिः ॥ भद्रंकर्णेतिपिण्डविसर्जनम् ॥ स्नानं ॥ आचम्यप्राणानायम्य ॥ विष्णुस्मरणम् ॥
अद्यपूर्वो० ममउत्पन्नभूतपीडोपशान्त्यर्थंकृतभूतबलिसाङ्गतासिद्ध्यर्थंमहाभूतस्यसाङ्कल्पेनविधि
नाश्राद्धमहंकरिष्ये ॥ महाभूतपाद्यन्ते ॥ पाद्यंपादा० ॥ पादार्घो०॥ स्वपाद्० ॥ आचमनं ॥
दिग्बन्धः—ऐन्द्रयांनारायणोरक्षे०॥३॥ अपवित्र०॥१॥ यदेवेतितिलोदकंविधायउपहारप्रोक्षणंकुर्यात् ॥ अद्य-

पूर्वो० महाभूतस्यसांकल्पिकश्राद्धमहंकरिष्ये ॥ महाभूतायआसनंअर्चनं० ॥ अस्यार्चनविधेः
परिपू० ॥ इदमर्चितंवोज्यो० ॥ मुखवासताम्बूलं ॥ ब्राह्मणभोजनसंकल्पः–अष्टोत्तरशतब्राह्मणान्
भूतबलिकर्मसाङ्गतासिद्ध्यर्थंभोजयिष्येतेनमहाभूतःप्रीयताम् ॥ दानसंकल्पः–अद्यपूर्वो० कृत-
स्यभूतबलिकर्मणःसाङ्गतासिध्यर्थमिदंतिलपात्रंतिलपूरितंरुद्रदैवतंगन्धपुष्पाद्यर्चितंसदक्षिणा-
कंकस्मैचिद्ब्राह्मणायदास्येतेनमहाभूतःप्रीयताम् ॥ ( दानसंकल्पेदेयवस्तूनामूहःकार्यः ) कपिलागौः ॥
कृष्णवृषभं ॥ अष्टविधंपदं ॥ उमामाहेश्वरं ॥ वरुणपात्रं ॥ महिषी ॥ बार्हस्पत्यंवासः ॥ उपानद्यु-
गलं ॥ लघ्वष्टदानानि ॥ सुवर्णदानं ॥ कांस्यपात्रं ॥ अष्टसौभाग्यपूरितवंशपात्रं घृतपात्रंच ॥ ततो-
यजमानःयस्यब्राह्मणस्ययस्मिन्कलशेवरणंतस्मैतंकलशंसोपस्करंसंकल्पपूर्वकंदद्यात् ॥ आचा-
र्यःतैःब्राह्मणैःसहस्वस्तिवाचनंविधाय, वर्धिनीयकलशस्यजलंमृन्मयकलशादित्रयोदशकलशेषुनिक्षिप्य, "उत्तिष्ठब्रह्मणस्पते"
तिमन्त्रेणतान्कलशानुत्थाप्य, भद्रासनोपविष्टस्यवाश्रीपर्णपीठोपविष्टस्ययजमानस्य अभिषेकंकुर्यात् ॥ अभिषेकसमयेशंख-
पटहभेरीमृदङ्गानांवादनंकार्यं ॥ अभिषेकमन्त्राः–ॐआपोहिष्ठेतितिसृभिः ॥३॥ त्रातारमिन्द्रम्० ॥ वरुणस्यो-
त्तं० ॥ भगप्रणेतर्भग० ॥ इदमापः० ॥ समुद्रायत्वा० ॥ पुनन्तुमेतिनवभिः–ॐपुनन्तुमापितरः० ॥
अग्नऽआयूꣳषि० ॥ पुनन्तुमादेवजनाः० ॥ पवित्रेणपुनीहिमा० ॥ यत्तेपवित्रमर्चिष्यग्ने० ॥

पवमानः० ॥ उभाभ्यान्देवसवितः० ॥ वैश्वदेवीपुनती०॥ चित्पतिर्म्मा० ॥१॥ आप्याउस्वेतिषद् ॥ ॐआप्यायस्वसमे० ॥ पञ्चनद्यः० ॥ शिरोमेश्रीर्यशो० ॥ जिह्वामेभद्रं०सह÷ ॥ बाहूमेबलं०मम ॥ नाभिम्मेंचित्तं०ष्ठितः ॥ देवस्यत्वा०सरस्वत्यैवाचोयन्तुर्यन्त्रियेद०सौ ॥ देवस्यत्वा०सरस्वत्यैवाचोयन्तुर्यन्त्रेणाग्नेः०मि ॥ देवस्यत्वा०अश्विनोर्भैष०॥ पालाशंभवति०॥ सहस्राक्षेतिपञ्च ॥ अमृताभिषेकोऽस्तु ॥ ततआचार्यादिसमस्तब्राह्मणेभ्योदानानिदद्यात् ॥ मुखावलोकनम्-आज्यंतेजसमुद्दिष्टं० ॥ ॐरूपेणवो० ॥ ततोआशीर्वादः-ॐशतंमिन्नुशरदो०तोः ॥१॥ अद्यपूर्वोममकुलेगृहेवाउत्पन्नभूतपीडोपशमनार्थंमहाभूतस्यतथाचद्वादशभूतानांभूतबलिविधानविधिः सर्वंपरिपूर्णमस्तु ॥अपसव्यं ॥ कृतेनानेनभूतबलिविधानेनमहाभूतस्यभूतत्त्वनिवृत्तिः ॥ असद्गति० सद्गतिप्रा०अक्षयातृ० ॥ यममार्गेयमयातनाभय०उत्पन्नभूतपीडोपशान्तिः ॥ सव्यं ॥ तुलसीदलंगृहीत्वा-यस्यस्मृत्येतिविष्णुंनमस्कृत्य ॥ यस्यस्मृत्या० ॥ चरणोदकग्रहणम् ॥ हस्तप्रक्षालनम् ॥ हस्तेजलंगृहीत्वा-अस्मिन्भूतबलिविधानेयन्न्यूनातिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनात् श्रीतीर्थराजमहाविष्णुःप्रसादात्सर्वंपरिपूर्णमस्तु ॥ अस्तुपरिपूर्णम् ॥ इतिभूतबलिप्रयोगः ॥

अथप्रेतबलिप्रयोगः ॥ पूर्वेदिनेउपवासोहविष्यभोजनंवाकृत्वागृहीतसर्वोपचारसामग्रिकस्तीर्थेगत्वाविधिना-स्नायात्-आचम्यप्राणानायम्य ॥ देशकालौसंकीर्त्य अद्यपूर्वो० तिथौकरिष्यमाणप्रेतबलिकर्माधिकारार्थंयथाशक्त्यादेहशुद्धिप्रायश्चित्तमहंकरिष्ये ॥ यथोक्तदेहशुद्धप्रायश्चित्तंविष्णुपूजनपूर्वकंकृत्वास्नात्वाचम्य-प्राणानायम्य ॥ अद्यपूर्वो० तिथौअपसव्यंगोत्राणांस्वगोत्रादिसप्तगोत्रप्रवर्तमानअनादिष्टसापेक्षिकप्रेतानांअसद्गतिमृत्युविनाशार्थंनित्यज्वरतृतीयज्वरएकांतज्वरचातुर्थिकज्वरचित्तोद्वेगाद्यनेककष्टदुःखप्ररोगादिदोषोपद्रवशान्त्यर्थंतथाचऊर्ध्वोच्छिष्टाधोच्छिष्टस्पर्शास्पर्शशय्यास्थखानपानादिरसौषधादिकृतदोषविनाशार्थंअशौचकादिदुष्टमरणजनितपापविशुद्ध्यर्थंयममार्गेयमयातना

---

१ प्रथमंप्रेतबलिःद्वितीयःनागबलिःतृतीयःभूतबलिःचतुर्थःनारायणबलिःपञ्चमवृषोत्सर्गःपञ्चबलिकरणेऽयंक्रमः ॥ तत्रादौप्रेतबलिःसचनारायणबलियुक्तोभवति । तत्रकालः—कार्तिकादिशुभेमासिउत्तरायणगेरवौ । शुक्लपक्षेऽथवाकृष्णेद्वादश्यादौशुभेतिथौ ॥ तथाच कार्तिकेमार्गशीर्षेमाघेविशेषतः । वैशाखेविष्णुमासेवाकुर्यान्नारायणोबलिः ॥ अथदेशाः—अश्वत्थेवामहानद्यांगवांगोष्ठेगृहेपिवा । तडागे जलपूर्णेचहृदेवाविमलेजले ॥ अश्वत्थमूलाद्दशहस्तमात्रंतीर्थंस्मृतंवैपुरुषोत्तमस्य । अश्वत्थमूलेसलिलस्यमध्येवसेचनित्यंत्रिपथाचगङ्गा ॥ अथाधिकारी—पुत्रोवापिपितावापिपौत्रोबन्धुजनस्तथा । सगोत्रोचार्थभागीवाब्राह्मणोवाबहुश्रुतः । राजावाराजपुत्रोवाकुर्याच्चैवाविचारयन् ॥ केशानांवपनंकार्यंप्रायश्चित्तंसमाचरेत् । केशानांरक्षणार्थायद्विगुणंव्रतमाचरेत् । जपहोमैस्तथादानैःप्रकुर्याद्देहशोधनम् ॥

।२१५

दिकष्टभयनिवृत्त्यर्थंशास्त्रोक्तपुण्यफलावाप्त्यर्थंप्रेतदोषनिवृत्यर्थंप्रेतबलिकर्मारंभनिमित्तंचतुर्दशयमानांतथाचद्वादशप्रेतसहितप्रेतराजस्थापनप्रतिष्ठापूजनमहंकरिष्ये ॥ पूर्वस्यांदिशिहस्तमात्रपीठंकृत्वाकृष्णवस्त्रेणाच्छाद्यतदुपरिद्वादशदलमण्डलंकृत्वाद्वादशप्रेतसहितप्रेतराजस्थापनं । तद्यथा—पूर्वादिक्रमेणभूरसीत्यादिमन्त्रैःत्रयोदशकृष्णकलशान्तन्मध्येसप्तछिद्रयुक्तंएकंमध्यकलशंमध्वाज्यशर्करायुक्तंस्थापयेत् । ततः सर्वेकलशाःपूर्णपात्रनिधानान्ताःतथाचमध्यकलशंवंशपात्रेणनिधानांतंकृत्वातदुपरिप्रेतराजप्रमुखद्वादशप्रेतानांस्थापनम् ॥ ( मूर्त्यभावेकुशचटाः ) तद्यथा—मध्यकलशेॐविष्णुरूपिप्रेतायनमःप्रेतंआवाहयामिस्थापयामि । भोप्रेतइहागच्छ० ॥१॥ एवंसर्वत्र ॥ ततःपूर्वादिक्रमेणॐमहाप्रेतायन०महाप्रे०आ०स्था० ॥२॥ ॐय-

---

१ कारयेन्निष्कमात्रंहिपुरुषंप्रेतरूपिणं ॥ चतुर्भुजदण्डहस्तंमहिषानसंस्थितं ॥ कृष्णवर्णंचकलशंपञ्चपल्लवसंयुतम् ॥ मध्वाज्यशर्करायुक्तंसर्वौषधिसमन्वितम् ॥ वंशपात्रसमायुक्तंपञ्चरत्नसमन्वितम् ॥ सप्तधारांचकलशंतस्योपरिचविन्यसेत् ॥ कृष्णवस्त्रेणसंछाद्यकलशेपुरुषंचतं ॥ ब्राह्मणैःकारयेत्तस्यप्रतिष्ठापूजनंजपः ॥ षडङ्गाँश्चजपेद्रुद्रान्कलशेतत्रवेदवित् ॥ यमसूक्तेनकुर्वीतजपपूजादिकंतथा ॥ तत्पुरुषंकलशेस्थाप्यमन्त्रैर्द्वादशसंख्यया ॥ एकंचैवतुकलशंविष्णुमुद्दिश्यस्थापयेत् ॥ विष्णुसूक्तेनकर्तव्याजपपूजादिकाक्रिया ॥ सकलांकृष्णकलशान्तिलपायससंयुतान् ॥ द्वादशप्रेतमुद्दिश्यदद्यादेकंचविष्णवे ॥ जपार्थंचनियोक्तव्याब्राह्मणास्तत्रतत्रवै ॥ इति ॥

माय न०यमंआ०स्था० ॥३॥ ॐकालरूपायन०कालरूपंआ०स्था० ॥ ४ ॥ ॐकरालरूपायन०
करालरूपंआ०स्था० ॥५॥ ॐकृशरूपायन०कृशरूपंआ०स्था०॥६॥ ॐभीमाय०भीमंआ०स्था०
॥७॥ ॐभयानकाय०भयानकंआ०स्था०॥८॥ ॐघोराय०घोरंआ०स्था०॥९॥ ॐमहाघोराय०
महाघोरंआ०स्था०॥१०॥ ॐअघोरायन०अघोरंआ०स्था० ॥११॥ ॐकेतुप्रेताय०केतुप्रेतंआ०
स्था०॥१२॥ ॐभूताय०भूतंआ०स्था० ॥१३॥ इतिसंस्थाप्यतत्पार्श्वेमाषान्नेनचतुर्दशयमानां
स्थापनम्—ॐयमायनमः यमंआ०स्था०॥ (एवंसर्वत्र) ॐधर्मराजाय० ॥मृत्यवे०॥ ॐअन्तकाय०॥
ॐवैवस्वताय०॥ ॐकालाय०॥ ॐसर्वभूतक्षयाय०॥ ॐऔदुम्बराय० ॥ ॐदध्नाय० ॥ ॐ
नीलाय०॥ ॐपरमेष्ठिने०॥ ॐवृकोदराय०॥ ॐचित्राय० ॥ ॐचित्रगुप्ताय० ॥१४॥ इतिसं-
स्थाप्यमनोजूतिरितिप्रतिष्ठाकार्या ॥ ॐमनोजूति० ॥ विष्णुरूपिप्रेतराजसहितद्वादशप्रेताः
तथाचचतुर्दशयमाःसाङ्गाःसपरिवाराःसायुधाःसशक्तिकाःसकलशाःसुप्रतिष्ठितावरदाभवेयुःइद
मत्रचन्दनंपुष्पं ॥ ततःपुरुषसूक्तेनप्रेताजयताइत्यनेनमन्त्रेणचस्वदेहेदेवेचन्यासांकृत्वाषोडशो-
पचारैःपूजनंकार्यम् ॥ ॐप्रेताजयता० ॥१॥ विष्णुरूपिप्रेतराजसहितद्वादशप्रेतेभ्योनमःतथाच

चतुर्दशयमेभ्योनमः आसनंसमर्पयामि ॥ एवंसर्वत्र ॥ कृतेनानेनपूजनेनप्रेतराजसहितद्वादश-
प्रेतास्तथाचचतुर्दशयमाः प्रीयन्तांनमम ॥ ततः सूक्तजपार्थंत्रयोदशब्राह्मणानांवरणं ॥ तेचब्रा-
ह्मणाः द्वादशकलशान्स्पृष्ट्वाषडंगरुद्राध्यायंजपेत् ॥ मध्यस्थंस्पृष्ट्वाविष्णुसूक्तंअपेताध्यायंचपठेत् ॥
ततः पश्चात्स्थंडिलंकृत्वापञ्चभूसंस्कारपूर्वकमग्निप्रतिष्ठांकृत्वासक्षीरप्रणिताः प्रणयनं ॥ दक्षिण-
तोब्रह्मासनादिचरुश्रुवप्रतपनादिआज्यभागान्तंकृत्वातदेतहचा० ॥ प्रेतबलिकर्मणिप्रेतनामा-
नंवह्निंआ० ॥ ततः पुरुषसूक्तेनाध्यायेनद्वाविंशत्याज्याहुतयः ॥ आशुः शिशानः इत्यनेनद्वादशाज्याहुतयः ॥ पायसच-
रुमभिघार्य ॐप्रेताजयता० ॥ इत्यनेनद्वादशप्रेताहुतयः ॥ चतुर्दशयमानांनाममन्त्रेणप्रत्येकंआज्याहुतिंजुहुयात् ॥
ततः स्विष्टकृद्धोमः ॥ नवाहुतयः ॥ ततः स्थापितप्रेतादीनामुत्तरपूजनपूर्वकमाषान्नवटकादिपायसबलिंदत्वाइन्द्रादि
दशदिक्पालान्सम्पूज्यतेभ्योबलींश्चदत्वातदनन्तरंश्रुचीद्वादशगृहीतमाज्यंगृहीत्वारक्तसूत्रवेष्टितंचंदनपुष्पयुतंश्रीफलंपूगीफलं-
३७ वानिधायश्रुवंचोपरिअपिधायोत्थायस्वाहाप्राणेभ्यइतिकंडिकात्रयंपठित्वापूर्णाहुतिंकुर्यात् ॥ मृडाश्रयेनमइतिसंस्रवप्राशना-
दिसर्वंकर्मसमापनीयं ॥ अथप्रेतश्राद्धम् ॥ स्नानंआचम्यप्राणानायम्य ॥ पवित्रधारणं ॥ दक्षिणाभि
मुखउपविश्य ॥ एकंचटंदक्षिणेसंस्थाप्य ॥ अद्यपूर्वो० अपसव्यंस्वगोत्रादिसत्तगोत्रप्रवर्तमानअनादिष्ट

सापेक्षकप्रेतानांप्रेतत्वनिवृत्त्यर्थंअसद्गतिमृत्युविनाशार्थंसद्गतिविष्णुलोकफलप्राप्त्यर्थंभ्रातृपुत्र-
कलत्रपशुद्रव्यलक्ष्मीसौख्यविविधनिरुपद्रवफलप्राप्त्यर्थंआधिदैविकआधिभौतिकआध्यात्मिक
त्रिविधतापोपशमनार्थंप्रेतबल्यंगभूतंप्रेतश्राद्धमहंकरिष्ये ॥ सव्यं ॥ तदङ्गभूतंमहाविष्णोः
पञ्चोपचारैःपूजनंकुर्यात् ॥ अपसव्यंस्वगोत्रादिसप्तगोत्रप्रवर्तमानअनादिष्टंसापेक्षकप्रेत,
पाद्यंपादावनेजनंपादप्रक्षालनंएषवोर्घः ॥ इदमत्रचंदनंपुष्पं ॥ सव्यं पादार्घोदकनिक्षेपः ।
स्वपादप्रक्षालनं आचमनं ॥ अपसव्यं ॥ दिग्बंधः—ऐंद्र्यांनारायणो० ॥ सव्यं ॥ श्राद्धभूमौ० ॥
येदेवेतितिलोदकंविधाय ॥ अपसव्यंउदक्यादिदृष्टिदोषनिपातश्वमार्जारादिसंपर्कदोषपरिहारार्थंप्रे-
तबल्यंगभूतप्रेतश्राद्धपिंडद्रव्योपहाराःपवित्राःसन्तु ॥ सव्यं ॥ देशकालपाकपात्रअन्नद्रव्यश्राद्ध-
संपत्सर्वेपाकाःशुचयोभवन्तु ॥ अद्यपूर्वो०अपसव्यंस्वगोत्रादिसप्तगोत्रप्रवर्तमानअनादिष्टसा-
पेक्षकप्रेतानांप्रेतत्वनिवृत्त्यर्थंअसद्गति०मृत्युवि० सद्गतिविष्णुलोकफलप्राप्त्यर्थंचतुर्दशयमानांत-
थाचविष्णुरुपिप्रेतराचसहितद्वादशप्रेतानांएकतन्त्रेणप्रेतश्राद्धमहंकरिष्ये ॥ स्वगोत्रादिसप्त-
गोत्रप्रवर्तमानअनादिष्टसापेक्षकप्रेतानांचतुर्दशयमानांचइदमासनंसुस्वासनं ॥ अर्घपात्रपूरणम् ।

[illegible] ॐपवित्रेस्थो० ॥ उदकपूरणम्—ॐशन्नोदेवी ०॥ तिलप्रक्षेपः—तिलोसि० ॥ गंधंपुष्पं । प्रेत-पात्रस्यार्चनविधेःपरिपूर्णतास्तु ॥ स्वधार्घ्याभवन्तु । पवित्रार्पणंपूजाच । ॐयादिव्या० ॥ स्व-गोत्रादिसप्तगोत्रप्रवर्तमानअनादिष्टसापेक्षकप्रेतेभ्यःएषवोर्घः । ( नार्घवंदनं ) चटपूजनं ॥ तिलो-पचारन्गृहीत्वा । अत्राच्छादनंगंधपुष्पधूपदीपवस्त्रप्रत्याम्नायेनमनसोद्दिष्टंद्रव्यंस्वगोत्रादिसप्तगोत्र० अना०सा०प्रेतेभ्यःतथाचयमेभ्यःमयादीयतेइदंते ॥ दीपादीनांप्रदत्तानांइदंवोज्योतिःसूर्यो-ज्योतिःसूर्यायपुष्पं ॥ अस्यश्राद्धस्यार्चनविधेःपरिपूर्णतास्तु ॥ ब्राह्मणभोजनसंकल्पः—स्वगोत्रादि० अना०सा०प्रेतेभ्यःत्रयोदशब्राह्मणभोजनंसिद्धान्नेनआमान्नेनवामयादीयतेइदंते । अपहतेति रेषाकरणं । तद्यथा—प्रथमंअनादिष्टसापेक्षकविष्णुरुपिप्रेतराजअवनेजनंमयादीयतेइदंते । ( एवंसर्वेषामूहःकार्यः ) । द्वि०अना०सा०महाप्रेतअवनेजनं० । तृ०अ०सा०यमअवजन० । च० अ०सा०कालरूप० । पं०अ०सा०करालरूप० । ष०अ०सा०कृशरूप० । स०अ०सा०भीम०। अ०अ०सा०भयानक० । न०अ०सा०घोर०। द०अ०सा०महाघोर० । ए०अ०सा०अघोर०। द्वा०अ०सा०केतुप्रेत० । त्रयो०अ०सा०भूतअवनेजनंमयादीयतेइदंते ॥१३॥ अवनेजनस्थाने

तिलयवकुशाश्चदक्षिणाग्रापूर्वापवर्गादर्भास्तरणम् । ततःपिण्डदानम्–मध्वाज्यादितिलोदकमिश्रितसपादप्र-
स्थपरिमिततिलपिष्टेनएकंपिंडंकृत्वा ॥ पितृवंशेमृता०॥ येमेकुले० ॥ विरूपाम० ॥ इदंतिलमयंपिण्डं-
मधुसर्पिसमन्वितम् ॥ ददामितस्मैप्रेताययःपीडांकुरुमेमम ॥ येकेचित्तामसाःप्रेताभूमौतिष्ठ-
न्तिसर्वदा ॥ पिण्याकपिण्डदानेनतेतृप्यन्तुक्षुधार्दिताः ॥ तेषामुद्धरणार्थायइमंपिण्डंददा-
म्यहम् ॥ स्वगोत्रादि०अनादिष्टसापेक्षकविष्णुरूपिप्रेतएषपिण्डोमयादीयतेअयन्ते ॥१॥ पश्चाद्य-
वपिष्टेनद्वादशपिण्डान्कृत्वाद्वादशप्रेतानांनामोच्चार्यपिण्डान्दद्यात् । इमंयवमयंपिण्डंमधुसर्पिसमन्वितम् । ददा-
मितस्मैप्रेताययःपीडांकुरुतेमम ॥ येकेचित्प्रेतरूपेणवर्तन्तेपितरोमम ॥ यवपिण्डप्रदानेनतृ-
प्तिंगच्छन्तितेऽक्षयाम् ॥ रौरवेनरकेघोरेप्रस्थितावृक्षयोनिषु ॥ मानुष्यंदुर्लभंतेषांतेभ्यःपिंडं-
ददाम्यहम् ॥ महाप्रेतएषपिण्डोमयादीयतेअयन्ते ॥ १ ॥ इमंयवमयंपिण्डं०मम ॥ आमग-
र्भामृतायेचयेचगर्भाद्विनिस्सृताः ॥ संस्काररहितायेचरौरवादिषुगामिनः ॥ तेषामुद्धरण०॥ अ-
सा०यमप्रेतएषपिण्डोमया०॥२॥ इमंयवमय०मम ॥ नरकेषुसमस्तेषुपतितास्स्वेनकर्मणा ॥
तेषामु० ॥ अ०सा०कालरूपप्रेतएषपिण्डो० ॥३॥ इमंयवमय०मम ॥ कुब्जामूकाश्चबधिरापि-

तृमातृकुलोद्भवाः ॥ बंदिगृहमृतायेचयेहताक्षुधयातृषा ॥ तेषामु०॥ अ०सा०करालरूपप्रेत-
एषपिण्डो० ॥४॥ इमंयवमय०मम ॥ ब्रह्मद्रोहरतानित्यंयेगृध्रादिषुसंस्थिताः ॥ तेषामु० ॥
अ०सा०कृशरूपप्रेतएषपिण्डो० ॥५॥ इमंयवमय०मम ॥ स्वकुलेयेदुराचारायेचदुर्गतिसंस्थि-
ताः ॥ ब्रह्मराक्षससंभूताक्लीवभूतानृपायिनः ॥ तेषामु० ॥ अ०सा०भीमप्रेतएषपिण्डो०॥६॥
इमंयवमय०मम ॥ अन्त्यजैर्यवनैर्मिश्रामार्गेषुप्रेतरूपिणः ॥ तेषामु० ॥ अ०सा०भयानक
प्रेतएषपिण्डो० ॥७॥ इमंयवमय०मम ॥ पीडिताब्रह्मवेतालाजीवयोनिविगर्हिताः ॥ पराप-
वादनिरतापरदारहृताश्चये ॥ तेषामु०अ०सा०घोरप्रेतएषपिण्डो० ॥ ८ ॥ इमंयवमय०मम ॥
अन्धमूकत्वमापन्नायमकिंकरपीडिताः ॥ तेषामु० ॥ अ०सा०महाघोरप्रेतएषपिण्डो० ॥ ९ ॥
इमंयवमय०मम ॥ यमपाशैर्विनिर्बद्धाहाहादेवप्रकारिणः ॥ पूयशोणितनिर्मग्नामत्स्यग्राहादि
दंशिताः ॥ तेषामु०॥आ०य०सा०अघोरप्रेतएषपिण्डो०॥१०॥ इमंयवमय०मम ॥ पितृवंशोद्भ-
वायेचमातृवंशोद्भवाश्चये ॥ गुरुश्वशुरवंशोत्थाभगिनीकुलजाश्चये ॥ तेषामु०॥ अ०सा०केतुप्रे-
तएषपिण्डो०॥११॥ इमंयवमय०मम ॥ कुलमित्राणियेजीवाबालबन्धुस्तथैवच ॥ येमेकुलेलुप्त-

पिण्डाकर्मधर्मविवर्जिताः ॥ तेषामु०॥ अ०सा०भूतप्रेतएषपिण्डो० ॥१२॥ अनेनैवद्रव्येणचतुर्दशयमा-
नामपिनाममात्रेणपिण्डदानम् ॥चतुर्दशयमेभ्यःपिण्डान्दत्वाप्रत्यवनेजनं–विष्णुरूपिप्रेतराजपिण्डोपरिप्रत्यव
नेनिक्ष्व ॥एवंसर्वत्र॥ विष्णुरूपिप्रेतराजादिपिण्डसंस्थप्रेतेभ्योनमःसूत्राच्छादनंमयादीयतेइदंते ॥
एवंगंधंपुष्पंधूपदीपंनैवेद्यंफलताम्बूलंहिरण्यंविष्णुरूपिप्रेतराजादिप्रेतेभ्योमयादीयतेइदंते ॥
पिण्डानामर्चनविधेःपरिपूर्णतास्तु ॥ कृतेनानेनपिण्डदानेनस्वगोत्रादिसप्तगोत्रप्रवर्तमानअना-
दिष्टसापेक्षकप्रेतानांप्रेतत्वान्निवृत्तिःअसद्गतिमृत्युविनाशः ॥ सद्गतिप्रा० ॥ अक्षय्यातृप्तिः ॥
यमयातनाभयकष्टनिवृत्तिः ॥ पिण्डोपरिशङ्खोदकेनजलधारांपातयेत्–रौरवेचान्धतामिस्रेकाल-
सूत्रेचयेगताः ॥ तेषामुद्धरणार्थायजलधारांददाम्यहम् ॥ अ०सा०प्रेतराजपिण्डोपरिजलधा-
रापयधारामयादीयतेइयंते॥१॥ (एवंसर्वत्र) आमगर्भामृतायेचयेचगर्भाद्विनिसृताः ॥ संस्का-
ररहितायेचजलधारांददाम्यहम् ॥ अ०सा०महाप्रेतपिण्डोपरिजलधारा०॥२॥ नरकेषुसमस्ते
षुपतितास्वेनकर्मणा ॥ तेषामुद्ध० हम् ॥ अ०सा०यमप्रेतपिण्डोपरिजल० ॥३॥ अग्निदग्धा-
श्चयेकेचिद्विषशस्त्रहताश्चये ॥ बंदिगृहमृतायेचजलधारांददाम्यहं ॥ अ०सा०कालरूपप्रेतपि-

ण्डोपरिजल०॥ ४ ॥ वायुयोनिगताकेचिद्येमृताक्षुधयातृषा ॥ तेषामु० ॥ अ०सा०करालरूप-
प्रेतपिंडोपरिजल० ॥५॥ भूतयोनिगतायेचपशुयोनिगताश्चये ॥ तेषामु०॥ अ०सा०कृशरूपप्रेत
पिण्डोपरिजल०॥६॥ सर्पेणनिहतायेचयेचात्मनिहताजनाः ॥ तेषामु०॥ अ०सा०भीमरूपप्रेत
पिण्डोपरिजल०॥७॥ चाण्डालैर्निहतायेचयेमृतास्वस्वकर्मभिः ॥ तेषामु०॥ अ०सा०भयानक
प्रेतपिण्डोपरिजल० ॥८॥ क्षयव्याधिमृतायेचजलोदरभगंदरैः ॥ तेषामु० ॥ अ०सा०घोरप्रेत
पिण्डोपरिजल०॥९॥ यमपाशविनिर्बद्धाहाहादेवप्रकारिणः॥ तेषामु०॥ अ०सा०महाघोरप्रेत
पिण्डोपरिजल० ॥ १० ॥ पितृवंशोद्भवायेचमातृवंशोद्भवाश्चये ॥ तेषामु० ॥ अ० सा०अघोर
प्रेतपिण्डोपरिजलधारा० ॥११॥ स्वकुलेयेदुराचारायेचदुर्गतिसंस्थिताः ॥ तेषामु०॥ अ०सा०
केतुप्रेतपिंडोपरिजल० ॥ १२ ॥ येमेकुलेलुप्तपिंडाःधर्मकर्मविवर्जिताः ॥ तेषामु० ॥ अ० सा०
भूतप्रेतपिण्डोपरिजलधारा०॥१३॥ ततःविष्णुरूपिप्रेतराजतिलपिण्डोपरियमसूक्तेनपुरुषसूक्तेनचजलधारांकुर्यात्॥
अपेतोध्यायः ॥ सहस्रशीर्षा० ॥१६॥ ततश्चद्वादशप्रेतसहितप्रेतराजस्यतथाचचतुर्दशयमानांनाममन्त्रेणतर्पयेत्॥
तद्यथा—प्रेतराजायनमःप्रेतंतर्पयामि ॥ एवंसर्वत्र ॥ तर्पणान्तेपिण्डोपरिएकतन्त्रेणजलधारांपातयेत्—अनादि-

निधनो०॥ अतसीपुष्प०॥ कृष्णकृष्णकृपालो० नारायणसुरश्रेष्ठ०॥ हिरण्यगर्भपुरुष० ॥ एषां-प्रेतानांमोक्षार्थंसुप्रीतोभवसर्वदा ॥ ( यदिप्रेतबलिर्नारायणबलियुक्तश्चेत्तदातदाराधनानन्तरंपञ्चदेवतास्थापना-दिपञ्चश्राद्धान्तंकर्मकृत्वातंकुर्यात्नोचेन्न ) ॥ ततोदानसंकल्पः–तिलपात्रं । कृष्णागौः । पदानि । उमामाहेश्वरं । कृष्णोनड्वान् । महिषी । लोहदानं । एतद्दानप्रत्याम्नायेनमनसोद्दिष्टंद्रव्यंस्वगोत्रादि० प्रेतेभ्यउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो०भवतांब्राह्मणानांवचनात्तीर्थराजमहाविष्णुप्रसादात्सर्वंपरिपूर्णमस्तु॥ अपसव्यं ॥ भद्रंकर्णेतिपिंडविसर्जनम् ॥ पिण्डानुद्धृत्य ॥ सव्यं ॥ ईशानविष्णुरितिपिण्डभूमिंसम्प्रार्थ्य ॥ तत्रगंधपुष्पतिलान्विकीर्यनमस्कृत्य । उत्तिष्ठेतिकलशानुत्थाप्य । ततःकृष्णकलशमादायतस्मिन्कलशेद्वादशकलशजलंसप्तछिद्रकलशेएकीकृत्यवंशपात्रोपरिसप्तधान्यैःसप्तफलैर्यजमानस्यमस्तकोपरिजलधारांपातयेत् ॥ ॐआपोहिष्ठेतितिस्रः ॥ ३ ॥ पुनन्तुमेतिनवभिः॥९॥ त्रातारमिन्द्रमितिपंचभिः ॥५॥ सुरास्त्वामभिषिञ्चामीत्यादिभगंतेवरुणेतिपुराणमन्त्रैश्चयजमानस्याभिषेकंकृत्वापिण्डानप्रवाहस्नायात् ॥ मुखावलोकनं ॥ ततःब्राह्मणान्नमस्कृत्यस्वस्तिवाचयित्वातेभ्योदक्षिणांदद्यात् ॥ अद्यपूर्वो०भवतांब्राह्मणानांवचनात्तीर्थराजमहाविष्णुःप्रसादात्प्रेतबलिकर्मविधेःपरिपूर्णतास्तु ॥ अपसव्यं ॥ अनेनप्रेतबलिकर्मकृतेनस्वगोत्रादिसप्तगोत्रप्रवर्तमानअ-

नादिप्रस्तापेक्षकप्रेतानांप्रेतत्वनिवृत्तिः ॥ असद्गतिमृ० ॥ सद्गतिप्रा० अक्षय्यातृ० यमयातना भय०॥ सव्यं ॥ यस्यस्मृत्येतिविष्णुस्मरणम् ॥ इतिप्रेतबलिःसमाप्तः ॥ ॥ कर्मकुशलैर्विद्वद्भिःअस्मिन्नागबलिप्रयोगेनारायणबलिप्रयोगेचयत्रयत्रऋड्मन्त्रैर्विधानंतत्रतत्रयजुःशाखीयाअन्यशाखीयावामन्त्राःप्रयोक्तव्याः । अथनागबलिप्रयोगः ॥ तं च सिनीवाल्यांपौर्णमास्याममावास्यायां वा पंचम्यां वाऽश्लेषार्क्षेदक्षिणायनेउत्तरायणे वासर्पसंस्कारंकुर्यात् ॥ अथबौधायनप्रयोगः ॥ तत्रप्रायश्चित्तमाह ॥ तच्चैत्थं ॥ पर्षदमुपविश्यब्रह्मदण्डंनिधायार्द्रवासास्तंप्रदक्षिणीकृत्यॐसमस्तसंपत्०पादपंकजं ॥इत्यंतंपठित्वासाष्टांगंप्रणेमत् ॥ किंतेकार्यंवदास्माभिःकिंवा मृगयसेद्विज ॥ सत्यतोब्रूहितत्सर्वंसत्यंहिगातिरात्मनः ॥ यदिचेद्रक्षसेसत्यंनियतंप्राप्स्यसेशुभम् ॥ यथागतोऽस्यसत्येननत्वंशुद्ध्यसिकर्हिचित् ॥ एतज्जन्मकृतंपापंजन्मजन्मान्तरंचयत् ॥ प्रायश्चितमनुष्ठातुंदुरितान्यनुचिंतयन् ॥ इतिपृष्टः ॥ तदग्रेगोवृषयोर्मौल्यंनिधाय ॥ करिष्यमाणसर्पसंस्कारकर्मणःचतुर्दशकृच्छ्रप्रायश्चितांगभूतमिदंगोनिष्क्रयभूतंद्रव्यंसभ्येभ्यःदातुमहमुत्सृजेत् ॥ तेनपापहामहाविष्णुःप्रीयताम् ॥ गवामंगेषु०परत्रच । देशकालौसंकीर्त्यममेहजन्मानिजन्मांतरेवामत्पूर्वजैर्मत्सम्बन्धिभिर्वासाक्षात्प्रमादाद्वाकृतसर्पवधस्तस्यमेऽनुग्रहंकृत्वाप्रायश्चित्तमुप-

दिशन्तुभवन्तःइतिपर्षदंप्रतिब्रूयात् ॥ सर्वेधर्मविवेक्तारोगोप्तारःसकलाःद्विजाः॥ ममदेहस्यसंशुद्धिं-
कुर्वन्तुद्विजसत्तमाः ॥ मयाकृतंमहाघोरंज्ञातमज्ञातकिल्बिषम् ॥ प्रसादःक्रियतांमह्यंशुभा-
नुज्ञांप्रयच्छथ ॥ पूज्यैःकृतपवित्रोऽहंभवेयंद्विजसत्तमैः ॥ इति ॥ अनन्तरंमामनुगृह्णंतुभवन्तः ॥
इतिप्रणमेत् ॥ ततःकर्तामासपक्षाद्युल्लिख्य करिष्यमाणसर्पसंस्कारकर्मणिप्रायश्चित्तांगभूतंनिबन्धपूजनं
सभ्यपूजनंअनुवादपूजनंचकरिष्ये ॥ प्रणोदेवीतिमंत्रेणनिबंधपूजनंकृत्वा ॥ यथाशक्तिद्रव्यंसंकल्प्य ॥ पुस्त-
कपूजाःविधेःसाद्गुण्यार्थंनिबंधपूजनकर्तुरुद्देशेनइमांदक्षिणांदातुमहमुत्सृजेत्॥नमोस्त्वनंताय०॥
अनुवादकायचंदनपुष्पंभृतिरूपांदक्षिणांतुभ्यमहंसंप्रददे ॥ ततोऽनुवादकःकथयेत् ॥ कर्तास्वस्थचित्तः
सन्शृणुयात् ॥ अनुवादकेनामुकगोत्रस्यामुकशर्मणःतवइहजन्मनिजन्मान्तरेवातवपूर्वजैःतवस-
म्बधिभिर्वासाक्षात्प्रमादाद्वाकृतसर्पवधस्तत्पापनिरासार्थंचतुर्दशकृच्छ्रात्मकंप्रायश्चित्तंगोनिष्क्र-
यभूतंद्रव्यंरजतप्रत्याम्नायद्वारासभ्यैःउपदिश्यते ॥ तस्मिन्यथाशक्तिप्राच्योदीच्यांगसहिते-
आचरितेपश्चात्सर्पसंस्कारेकृतेतवशुद्धिर्भविष्यतितेनत्वंकृतार्थोभविष्यसि ॥ कर्ता ॥ ॐभवद-
नुग्रहःप्रमाणम्‌ः ॥ पुनःदेशकालौस्मृत्वा ॥ अमुकगोत्रस्यामुकशर्मणःममेहजन्मनिजन्मान्तरेवाम-

त्पूर्वजैर्मत्सम्बन्धिभिर्वासाक्षात्प्रमादाद्वाकृतसर्पवधस्तत्पापनिरासार्थंसभ्येभ्योदिष्टंचतुर्दशकृ-
च्छ्रात्मकंप्रायश्चित्तंप्राच्योदीच्यांगसहितंअहमाचरिष्ये ॥ इतिसंकल्प्य ॥ तिथौवपनंकरिष्ये ॥
शिरसिहस्तंनिधाय ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ केशानाश्रित्यतिष्ठंतितस्माकेशा-
न्वपाम्यहम् ॥ कक्षोपस्थरहितंकेशान्वापयित्वा ॥ आयुर्बलंयशोवर्चःप्रजाःपशुवसुनिच ॥ ब्रह्मप्रज्ञां
चमेधांचत्वन्नोदेहिवनस्पते ॥ इतिमन्त्रेणाभिमंत्रितेनद्वादशांगुलप्रमाणेनअपामार्गादिदंतकाष्ठेनप्राङ्मुखउपविश्य ॥
मुखदुर्गन्धिनाशायदंतानांचविशुद्धये ॥ ष्ठीवनायचगात्राणांकुर्वेऽहंदंतधावनम् ॥ इतिमंत्रेणदंता-
न्धावयित्वाअप्सुनिमज्जेत् ॥ भस्मादिनास्नात्वा ॥ तच्चेत्थं ॥ प्रायश्चित्तांगत्वेनभस्मस्नानमहंकरिष्येइतिभस्म-
आदाय ॥ ईशानायनमःशिरसि ॥ तत्पुरुषायनमःमुखे ॥ अघोराय० हृदि ॥ वामदेवा० गुह्ये ॥
सद्योजाताय० पादयोः ॥ प्रणवेनसर्वांगे ॥ अग्निरितिभस्मेतिमंत्रेणभस्मशुद्धिंकृत्वा ॥ मानस्तोके-
तेतिगोमयं ॥ अश्वक्रान्तेरथक्रान्तेतिमृत्तिका ॥ आपोहिष्ठेतित्रिभिर्मंत्रैःशुद्धोदकस्नानं ॥
ततःगायत्र्यागोमूत्रं ॥ मानस्तोकेतिगोमयं ॥ आप्यायस्वेतिक्षीरं ॥ दधिक्राव्णेतिदधि ॥
तेजोसीत्याज्यं ॥ देवस्यत्वेतिकुशोदकं ॥ ततःसूत्रोक्तस्नानानि ॥ कटिंबस्त्यूरुजंघेचरणौकरौ-

मृदास्त्रिःस्त्रिःप्रक्षाल्याचम्य ॥ नमस्योदकमालभेत् ॥ अंगानिमृदेदंविष्णुरिति ॥ सूर्याभिमुखोनिमज्जेत् ॥ आपोअस्मादितिस्नात्वोदिदाभ्यःइत्युन्मज्यनिमज्योन्मज्याचम्य ॥ ततोऽभिषिंचेदिदंवरुणेतिचतसृभिः मापउद्गुत्तमंमुंचस्ववभृथेत्यंतेचैतंनिमज्ज्योन्मज्ज्याचम्यदर्भैःपावयेत् ॥ आपोहिष्ठेतिसृभिरिदमापोहविष्मतीर्देवीरापइतिद्वाभ्यामापोदेवाद्रुपदादिवशन्नोदेवीरपाᳫंरसमापोदेवीःपुनन्तुमेतिनवभिश्चिरपातिमेंत्योंकारेणव्याहृतिभिर्गायत्र्याचादावन्ते जलेऽघमर्षणंत्रिरावर्तयेद्द्रुपदादिवायंगौरितित्र्यृचंवाप्राणायामंसशिरसमोंकारंवाविष्णोर्वास्मरणम् ॥ ततःवाससीपरिधायद्विराचम्य ॥ देशकालौसंकीर्त्यप्रायश्चित्तांगभूतंविष्णुपूजनंविष्णुश्राद्धंआद्यगोदानंचकरिष्ये ॥ ततःविष्णुंषोडशोपचारैःसम्पूजयेत् ॥ करेयथाशक्तिद्रव्यमादायामान्नचतुष्टयनिष्क्रयभूतंद्रव्यंयथानामगोत्रेभ्योब्राह्मणेभ्योदातुमहमुत्सृजेत् ॥ तेनश्रीपापघ्नविष्णुःप्रीयताम् ॥ ततःएकांगांतन्निष्क्रयभूतंद्रव्यंवाआद्यगोदानत्वेनकुटम्बिनेद्विजायदत्वा ॥ गवामंगेषु—इतिमंत्रंपठेत् ॥ प्रायश्चित्तांगभूतंहोमंकूर्चहोमंचकरिष्ये ॥ तदंगंस्थंडिलादिकरिष्ये ॥ सप्तावृत्यासमस्तव्याहृतिभिराज्यंजुहुयात् ॥ ॐ भूःस्वाहाइदमग्नयेनमम ॥ ॐभुवःस्वाहाइदंवायवेनमम ॥ ॐस्वःस्वाहाइदंसूर्यायनमम ॥

ॐ भूर्भुवःस्वःस्वाहाइदंप्रजापतयेनमम ॥ एवंसप्तवारेकृतेअष्टाविंशतिराहुतयोभवन्ति ॥ ततोब्रह्मकूर्चहोमार्थं
पंचगव्यंकार्यम् ॥ सुवर्णादिभाजनेकृत्वासप्तपवित्रैःकुशैःपलाशदलैर्वाजुहुयात् ॥ तत्रमंत्रः ॥ ॐ इरावती० मयूखैः
स्वाहाइदंपृथिव्यैनममेतिसर्वत्र॥ ॐ इदंविष्णुः०सुरेस्वाहाइदंविष्णवे०॥ ॐ मानस्तोके०हवामहे-
स्वाहाइदंरुद्राय ॥ ॐ शन्नोदेवी०तुनःस्वाहाइदमद्भ्यो० ॥ अथवा ॥ ॐ ब्रह्मयज्ञानं०विवःस्वाहा
इदंब्रह्मणे ॥ ॐ अग्नयेस्वाहाइदमग्नये ॥ ॐ सोमायस्वाहाइदंसोमाय ॥ ॐ तत्सवि० प्रचोदया-
त्स्वाहाइदंसवित्रे ॥ ॐ स्वाहाइदंप्रजापतये ॥ ॐ भूर्भुवःस्वःस्वाहाइदंप्रजापतये ॥ ॐ अग्नयेस्वि-
ष्टकृतेस्वाहाइदमग्नयेस्विष्टकृते ॥ व्रतग्रहणंकरिष्ये ॥ इतिद्विजान्पृष्ट्वाकुरुष्वेत्यनुज्ञातःप्रणवेनहोमशेषंप्राश्नी-
यात्॥ यत्त्वगस्थिगतंपापंदेहेतिष्ठतिमामके ॥ प्राशनात्पंचगव्यस्यदहत्यग्निरिवेन्धनम् ॥ इतिप्राशयि-
त्वा ॥ देशकालौसंकीर्त्यकरिष्यमाणसर्पसंस्कारार्थंचतुर्दशकृच्छ्रात्मकप्रायश्चित्तसिद्ध्यर्थंक्षौरप्र-
२८ त्याम्नायद्वैगुण्येनेदमष्टाविंशतिगोनिष्क्रयभूतंद्रव्यंयथानामगोत्रेभ्यःब्राह्मणेभ्यःयथाकालमहंदा
तुमुत्सृजे ॥ उत्तरांगानिकरिष्ये॥पुनर्व्याहृतिहोमः ॥ विष्णुपूजनं॥ विष्णुश्राद्धं ॥ अंत्यगोदानंक-
रिष्ये॥ कर्मशेषंसमाप्य ॥ इतिप्रायश्चित्तम् ॥ अथसर्पबलिंकुर्यात् ॥ ततःसाक्षाद्वधकर्तुर्लोहदण्ड-

दानम् ॥ अन्यथादण्डमौल्यम् ॥ तच्चैकनिष्कंद्वित्रिभिर्वाविभवानुसारेणकृत्वालोहदण्डदानं ॥
मंत्रः ॥ वधेहजन्मनिकृतेलोहदण्डंद्विजातये ॥ दद्यात्पापविशुद्ध्यर्थंश्रोत्रियायकुटुम्बिने ॥ पूर्वो-
क्तदिनेषुचंद्रानुकूल्यदिनेकृतनित्यक्रियःसामग्रींसम्पाद्य ॥ देशकालौस्मृत्वा ॥ अस्मिन्सर्पसंस्कारकर्मणिआचार्य-
त्वेनत्वामहंवृणेवृतोऽस्मीति वस्त्रादिभिःसम्पूज्य ॥ अस्मिन्सर्पसंस्कारेआज्ञांदत्तेतिब्रूयात् ॥ ओमनु-
ज्ञेत्याचार्यः ॥ यजमानःआचम्यप्राणानायम्यदेशकालौस्मृत्वा ममपुत्रकलत्रादिभिर्वामत्सम्बन्धिभिर्वाइ-
हजन्मनिजन्मान्तरेवाप्रागतीतसप्तजन्मसुबाल्ययौवनवार्द्धक्यान्यतमावस्थासुज्ञानतोऽज्ञानतो
प्रसंगतःप्रमादतोवारात्र्यहनिसंध्ययोर्वायत्कृतःसर्पवधस्तज्जनितसमूलपापोन्मूलद्वारातत्प्रयुक्त
कुष्ठदद्रुकण्डूवातादिरोगविस्फोटकगण्डमालल्लूताद्यहरहरनुभूयमानाचिकित्स्यनानाविधव्या-
धिआयुष्मत्सुपुत्रादिसंततिप्रतिबंधजातापत्यविनाशदारिद्र्यादिक्लेशनिवृत्तयेसर्पस्यपुण्यलोका-
वाप्तयेमद्वंश्यानांजलचरस्थलचरान्तरिक्षचरसर्पबाधानिवृत्तयेसमस्तसर्पाधिनाथश्रीमदनंतप्री-
तयेयथाशक्तियथाज्ञानंयथासंभृतद्रव्यैःशौनकोक्तप्रकारेणसर्पसंस्कारमहंकरिष्ये ॥ पुनःममेह-
जन्मनिजन्मान्तरेवाकृतसर्पवधजन्यसंततिविच्छेदरूपदोषापनोदपूर्वंसंततिप्राप्त्यर्थंनागबलिं-

करिष्ये ॥ पुनः ॥ मयाममपत्न्यापुत्रेणमत्सम्बन्धिभिर्वाइहजन्मनिजन्मांतरेवाकृतसर्पवधज-
नितदोषपरिहारद्वाराश्रीपरमेश्वररूपनागेन्द्रप्रीत्यर्थंसर्पसंस्काराख्यंकर्मकरिष्ये ॥ इतिसंकल्प्य ॥
ततोमृदाशुचिदेशेगोमयेनोपलिप्यतत्रवेदिंकृत्वा ॥ आचार्यः ॥ यदत्रेतिसर्षपान्विकीर्यपंचगव्यंकृत्वाऽऽपोहि-
ष्ठेतिसंप्रोक्ष्य ॥ भूमौप्रादेशंकृत्वा ॥ देवाःआयांतुयातु० विष्णोःदेवयजनंरक्षस्व ॥ इयंत्वेदिः०
व्योम ॥ इतिमंत्रेणभूमिंस्पृशेत् ॥ ततःशूर्पेकुशानन्तर्धायप्रस्थद्वयेनप्रियंगुव्रीहिगोधूमतिलयवानामन्यतमेनपिष्टेनसर्पा-
कृतिंकृत्वाशूर्पेस्थापयेत् ॥ काश्यपगोत्रमनन्तमावाहयामि ॥ मनोजूति० प्रतिष्ठ ॥ प्राणप्रतिष्ठेति-
केचित् ॥ ततोऽनंतायकाश्यपगोत्रायप्राणप्रतिष्ठांकरिष्ये ॥ ॐतदित्यतद्दंनविचिकेतविद्वान् ॥
यन्मृतःपुनरप्येतिजीयान् ॥ त्रिवृद्यद्भुवनरथवृत् ॥ जीवोगर्भोनभृतःसजीवादिति ॥ उच्चैरु-
क्त्वा ॥ पुनर्मनःपुनरायुर्मऽआगात्पुनश्चक्षुःपुनःश्रोत्रंमऽआगात्पुनःप्राणःपुनराकू-तिंमऽआ-
गात्पुनश्चित्तंपुनराधीतंमऽआगात् ॥ वैश्वानरोमेऽअदब्धस्तनूपाअवबाधंदुरितानिविश्वा ॥ पुनर्नःपितरोमनोददातुदैव्योजनः ॥ जीवंव्रातꣳसचेमहि ॥ एहिपूर्वमृतःसर्प-
अस्मिन्पिष्टेसमाविश ॥ संस्कारार्थमिमंभक्त्याप्रार्थयामिसमाहितः ॥ इतिवेदपुराणमंत्रैः

प्रतिष्ठांकृत्वा ॥ भुजंगेशायविद्महेसर्पराजायधीमहि ॥ तन्नोनागःप्रचोदयात् ॥ इतिसर्पगायत्र्याभि-
मन्त्र्य ॥ असुनीते० पुनर्नोऽअसुमितिप्राणंकल्पयित्वा अक्षीभ्यामितिसूक्तेनतंस्पृष्ट्वासोऽयमितिभावयेत् ॥ अनंत-
प्रीत्यर्थंसर्पपूजांकरिष्ये ॥ आयंगौरितिमंत्रेणनाममंत्रेणगायत्र्यावाआसनादिदक्षिणान्तैःषोडशोपचारैःसम्पूज्यपुष्पां-
जलिंदत्वा ॥ अत्रबलिदानंपायसेन भोसर्पइदंबलिंगृहाणउत्तमाभ्युदयंकुरु ॥ प्रार्थयेत् ॥ पापोऽहं
पापकर्माहमित्यादिमंत्रैःप्रणिपत्य ॥ अपराधसहस्राणिक्रियन्तेऽहर्निशंमया ॥ तानिसर्वाणिमे
देवक्षमस्वपरमेश्वर ॥ इतिक्षमापयित्वा ॥ यस्यस्मृत्या० ॥ सशूर्पनागंनद्यादितीरेनीत्वाप्रक्षालितांघ्रिपाणि-
राचम्यप्राणानायम्य ॥ देशकालौस्मृत्वाममइहजन्मनिजन्मान्तरेवामत्पूर्वजैर्मत्सम्बन्धिभिर्वाज्ञाने-
नाज्ञानेनवामनोवाक्कायकर्मभिर्नागहननजनितदोषनिबर्हणद्वाराश्रीपरमेश्वरप्रीत्यर्थंशौनकोक्त-
प्रकारेणसर्पसंस्कारंकरिष्ये ॥ नागबल्यंगहोमंकर्तुंस्थंडिलादिकरिष्ये ॥ अग्निस्थापनं ॥ क्रिय-
माणेनागबलिहोमेदेवतापरिग्रहार्थमन्वाधानम् ॥ अस्मिनन्वाहितेग्नावित्यादिचक्षुषिआज्येने- ।२२४।
त्यंतमुक्त्वाऽत्रप्रधानमग्निंवायुंसूर्यमग्नौनागमुखेप्रजापतिंवाऽऽज्यशेषेनस्विष्टकृतादि०यक्ष्ये ॥
स्रुवपूर्णमाज्यंसर्पदेहे ॥ चितौनागशरीरंहविः ॥ ततोऽग्नेराग्नेयदिग्भागेभूमिंप्रोक्ष्यचितिंकृत्वाऽ

ग्निंपरिसमुह्याग्नेयाग्रकैर्दर्भैः चितिंपरिस्तीर्यपर्युक्ष्यप्रोक्षिणीकृत्यादिषट्पात्रप्रयोगः ॥ पवित्र-
करणादिचक्षुंष्यन्ते ॥ सर्पंचितौदक्षिणशिरसंस्थाप्य ॥ अपःस्पृष्ट्वाश्रोत्रंस्पृशेत् ॥ अग्निसमी-
पमागत्याग्नौ ॥ ॐभूःस्वाहाइदमग्नये ॥ ॐभुवःस्वाहाइदंवायवे ॥ ॐस्वःस्वाहाइदंसूर्याय ॥
चितोपस्थितसर्पमुखे ॥ ॐभूर्भुवःस्वःस्वाहाइदंप्रजापतये ॥ नात्रस्विष्टकृदादिहोमशेषं ॥
नप्रणीताविमोकः ॥ अथाज्यशेषंस्रुवेणादायसर्पदेहेनिषिंचेत् ॥ स्रुवंचतस्मिन्निधाय ॥ अग्ने-
रक्षाणइत्यस्यवसिष्ठोऽग्निर्गायत्रीसर्पाग्निदानेवि० ॥ ॐअग्नेरक्षाणोऽअंहसःप्रतिष्मदेवरीषतः ॥
तपिष्ठैरजरोदह ॥ अग्निंदत्वात्रिःप्रदक्षिणीकृत्यप्रणमेत् ॥ दह्यमानमुपातिष्ठेत ॥ तत्रमंत्रः ॥
ॐनमोऽस्तुसर्पेभ्यो० त्रिः ॥ ज्ञानतोऽज्ञानतोवापिकृतःसर्पवधोमया ॥ संस्कारंकुर्वतोभक्त्याममम-
दोषःप्रणश्यतु ॥ प्रजांदेहिपशून्देहिआयुर्मेदेहिसर्वदा ॥ जन्मजन्मनिनैवेयंबुद्धिरस्तुसदाभम ॥
ततोघटस्फोटादिकंकृत्वा ॥ उदकुंभंस्कंधेधृत्वाजलंप्रसिंच्यत्रिःप्रदक्षिणीकृत्यनागशिरोदेशेकुम्भंस्फोटयित्वाऽपउपस्पृश्य ॥
ततःस्नात्वाक्षीराज्येनचित्यग्निंप्रोक्षयेत् ॥ तत्रमंत्रः ॥ ॐभूःप्रोक्षामि ॥ ॐभुवःप्रो० ॥ ॐस्वःप्रो० ॥
ततस्तद्भस्मजलेप्लावयित्वाऽस्थिसेचनंनाप्यसव्यम् ॥ ततोविप्रादिकंकृत्वातिलांजलिंपिण्डान्दद्यादि-

त्येके तच्चिन्त्यम् ॥ यावद्वचनवाचनिकमितिकाश्यपगोत्रंनागंसंतर्पयामि ॥ इतिशतवारंसंतर्प्यस्नात्वागृहं
गत्वाऽधःशयनब्रह्मचर्यादिकुर्वन्त्रिरात्रमशुचिःस्यात् ॥ ततःचतुर्थेहनिसचैलंस्नात्वाबौधायनंपुण्याहंवाचयित्वाऽष्टौगुण-
शीलसम्पन्नान्ब्राह्मणान् “ सर्पोऽनंतस्तथाशेषःकपिलोनागएवच ॥कालीयःशंखपालश्चभूधरश्चप्रकीर्तिताः ” इत्यष्टसर्पना-
मभिरामंत्र्यपादप्रक्षालनंगंधपुष्पधूपदीपाच्छादनउपवीतजलपात्राद्यैःसमभ्यर्च्यपरिवेषणोत्तरं सर्पाग्रेइदमन्नंपरिविष्टंपरिविश्य
माणंचआतृप्तेःस्वाहासम्पद्यतांनमम ॥ एवंसर्वत्रघृतपायसभक्ष्यैर्मधुरद्रव्यैस्तान्भोजयेत् ॥ पश्चाद्यथाशक्तिदक्षिणांदत्वाक्षमा-
पयेत् ॥ कर्कोटकनमस्तेस्तुशंखपालनमोस्तुते ॥ नागराजमहादेवपुण्यमूर्तेनमोऽस्तुते ॥ अफणाः
फणिनोयेचसविषानिर्विषाश्चये ॥ सर्वेसर्पवरादेवरूपेभ्योवोनमोनमः ॥ त्वयैवजगतिस्थानं
स्वफणामंडलोपरि ॥ धृतंह्यणुवच्चैकदेशेतस्मैनित्यं० ॥ त्वयाभगवतेश्रीमद्वासुदेवायनिर्विषं ॥
स्वभोगेनैवपर्यङ्कमायतंभोगिनांवरं ॥ त्राहित्राहिमहाभोगिन्सर्पोपद्रवदुःखितः ॥ संततिंदेहिमे
पुण्यांनिर्दुष्टांदीर्घजीविनीम् ॥ प्रपन्नंपाहिमांभक्त्याकृपालोदीनवत्सल ॥ ज्ञानतोऽज्ञानतोवा- 
पिकृतःसर्पवधोमया ॥ जन्मान्तरेतथैतस्मिन्मत्पूर्वैरथवाविभो ॥ तत्पापंनाशयक्षिप्रमपराधं
क्षमस्वमे ॥ एवंविधानेकृतेसर्पहत्यादोषोविनश्यति ॥ आरोग्यंपुत्रादिकंप्राप्नोतीत्याहभगवा-

न्बौधायनःशौनकश्च ॥ इतिसर्पसंस्कारंकृत्वानागबलिंततःदत्वास्वर्णमयंनागसपराधात्प्रमुच्यत इतिवचनात् ॥ अथनागदानं ॥ देशकालौसंकीर्त्यपूर्वोक्तसंकल्पंकृत्वानागवल्यांगभूतंस्वर्णनागदानमहंकरिष्ये ॥ आचार्यपूजनं ॥ महीद्यौरित्यादिपूर्णपात्रान्तंकृत्वातदुपरिस्वर्णनागंप्रतिष्ठाप्य ॥ आयंगौरितिमंत्रेणनाममंत्रेणवाषोडशोपचारैःसम्पूज्यप्रार्थयेत् ॥ ब्रह्मलोकेचयेसर्पाः शेषनागपुरोगमाः ॥ नमोऽस्तुतेभ्यःसुप्रीताप्रसन्नाःसंतुमेसदा ॥ विष्णुलोकेचयेसर्पाःवासुकिप्रमुखाश्चये ॥ नमोऽस्तु० ॥ रुद्रलोकेचयेसर्पास्तक्षकप्रमुखाश्चये ॥ नमोऽस्तु० ॥ कापिलेया श्चयेसर्पाःमातृभक्तिपरायणाः ॥ नमोऽस्तु०॥ खांडवस्यसुदाहेचयेचस्वर्गंसमागताः॥ नमोस्तु० ॥ समुद्रेचैवयेसर्पाःयेसर्पाजलवासिनः ॥ नमोऽस्तु० ॥ धर्मलोकेचयेसर्पाःवैतरिण्यांसमागताः ॥ नमोऽस्तु० ॥ सर्पसत्रेचयेसर्पाःआस्तिकेनचरक्षिताः ॥ नमोस्तु० ॥ मलयेचैवयेसर्पाःककोट प्रमुखास्तथा ॥ नमोऽस्तु०॥ येसर्पाःपर्वताग्रेचयेचसंधिषुसंस्थिताः ॥ नमोस्तु० ॥ पृथिव्यांचैवयेसर्पायेसर्पाबिलवासिनः ॥ नमोऽस्तु० ॥ ग्रामेवायदिवारण्येयेसर्पाप्रचरंतिहि ॥ नमोऽस्तु० ॥ रसातलेचयेसर्पाअनंताद्यामहाबलाः नमोऽस्तु० ॥ एवंस्तुत्वातुनागेन्द्रंब्राह्मणायनिवेदयेत् ॥

देशकालौसंकीर्त्यकृतस्यसर्पसंस्कारकर्मणः सांगतासिद्ध्यर्थमिमंस्वर्णनागंसकलशंसवस्त्रंसद-
क्षिणमाचार्यायतुभ्यमहंसंप्रददे ॥ आचार्योदेवस्येतिमंत्रंपठित्वाप्रतिगृह्णामीतिवदेत् ॥ अने-
नस्वर्णनागदानेनानन्तादयोनागाःप्रीयन्ताम् ॥ यस्यस्मृत्या० ॥ नागेशःप्रीयताम् ॥ आचा-
र्यायततोदद्यात्कृष्णांगांवृषभेणहि ॥ वस्त्रालंकरणैःपूज्यब्राह्मणंब्राह्मणस्तथेतिवचनाद्वृषवत्सां
गांकृष्णांतदभावेऽन्यांवातदभावेगोमूल्यंवादत्वासांगतासिद्ध्यर्थंब्राह्मणान्भोजयित्वा ॥ सुहृद्यु-
तोभुञ्जीतपाकान्तरे ॥ इतिसर्पविधिःसमाप्तः इतिनागबलिप्रयोगः ॥ ॥ अथनारा-
यणबलिप्रयोगः ॥ हेमाद्रौगरुडपुराणे ॥ संतत्यादिप्रतिबंधनिवृत्त्यर्थमुपयाचितनारायणबलिप्रयोगः ॥
सौकर्यार्थं ॥ शुक्लैकादश्यांनदीमन्यद्वातीर्थंगत्वास्नात्वानूतनवस्त्रंपरिधायाचम्यपवित्रपाणिःप्राणानायम्य ॥
देशकालौस्मृत्वाअमुकगोत्रस्यामुकशर्मणःममानेकजन्मार्जितानपत्यत्वमृतापत्यत्वादिनिदानभूत-
बालघातविप्ररत्नहरणादिजन्यंयद्दुरितंतत्समूलनाशनद्वाराश्रीपरमेश्वरप्रीत्यर्थंतथाममपत्न्या-
अनेकजन्मार्जितंयत्पापंतत्समूलनाशनद्वाराश्रीपरमेश्वरप्रीत्यर्थंतथाअज्ञातनामकाश्यपगोत्रत-
[illegible]नंतथानाममत्कुलेयःकश्चिदात्महत्यादिकृतमरणसम्बधःतथातेषांभूतप्रेत-

पिशाचादियोनिप्राप्तानांमोक्षार्थंयत्कृतोपद्रवनिवृत्त्यर्थंमदीयकुलाभिप्रतिबंधकप्रेतस्यानिवृत्त्यर्थं मायुष्मत्सुपुत्रावाप्त्यर्थंउपयाचितनारायणबलिंकरिष्ये ॥ तदंगत्वेनगणेशपूजनमाचार्यपूजनं ब्रह्मवरणंचकरिष्ये ॥ तत्कृत्वाऽचार्यःयदत्रेति० सर्षपान्विकीर्य ॥ ततःप्रतिमासुअग्न्युत्तारणंप्राण-प्रतिष्ठांचकरिष्ये ॥ अग्निःसमितिअग्निरहितंपठित्वा ॥ पुनःअग्निसहितंपठेत् ॥ अस्यश्रीप्राण-प्रतिष्ठामंत्रस्यब्रह्मविष्णुमहेश्वराऋषयःऋग्यजुःसामानिछंदांसिक्रियामयवपुः प्राणाख्यदेवता प्राणप्रतिष्ठायांविनियोगः ॥ प्रतिमांस्पृष्ट्वा ॥ ॐआँह्रींक्रोंमित्यादितिष्ठन्तुस्वाहान्तं ॥ गर्भाधा-नादिसंस्कारार्थंपंचदशप्रणवावृत्तिंकरिष्ये ॥ ततःपंचकलशान्संस्थाप्य ॥ महीद्यौरितिपूर्णपात्रान्तंकृत्वा ॥ ततःषोडशोपचारैःपुरुषसूक्तेनविष्णुंसम्पूज्य ॥ प्रतिमालक्षणं ॥ ब्रह्माराैप्यमयःकार्योविष्णुःस्वर्णमयोभ-वेत् ॥ रुद्रस्ताम्रमयःकार्योयमोलोहमयस्मृतः ॥ प्रेतोदर्भमयःकुर्यादितिगारुडोक्ताः ॥ अथवा सर्वाहैमीवाकार्याः॥पंचकलशाग्रेपंचधान्यैप्रस्थमितंसमर्प्य ॥ यथा-गोधूमाःतण्डुलाःमुद्गाःमाषाःतिलाः— ब्रह्मयज्ञानं०विवः ॥ ब्रह्माणंपूजयेत् ॥ नमस्तेरुद्र०नमः ॥ रुद्रंपूजयेत् ॥ यमायत्वा०पित्रे ॥ यमंपूजयेत् ॥ प्रेतंनाममंत्रेणपूजयेत् ॥ काश्यपगोत्रंअज्ञातप्रेतमावाहयामिइति ॥ स्वगृह्यो-

क्तमार्गेणाग्निंप्रतिष्ठाप्य ॥ चरुहोमंकुर्यात् ॥ क्रियमाणनारायणबलिहोमदेवतापरिग्रहार्थमन्वाधानंक-
रिष्ये ॥ अस्मिनन्वाहितेऽग्नावित्यादिचक्षुषिआज्येनेत्यन्ते ॥ अत्रप्रधानंनारायणंषोडशसंख्या-
काभिःपुरुषसूक्तेनप्रत्यृचमेकैकयाचर्वाहुत्याशेषेणस्विष्टकृतमित्यादिप्रकृतमुक्त्वाऽन्वाधानस-
मिधौहुत्वास्वगृह्योक्तमार्गेणचतुःषष्टिमुष्टिंतूष्णींनिर्वापादितथैवप्रोक्ष्य ॥ अवघातादित्रिःफली-
कृत्य ॥ चरुस्थाल्यांसहायार्थपिंडदानपर्याप्तंशेरकद्वयंतण्डुलानोप्यचरुंश्रपयित्वाऽऽज्यभागान्तं-
कृत्वापुरुषसूक्तेनप्रत्यृचमवदानधर्मेणषोडशाहुतीर्जुहुयात् ॥ नारायणायेदंनममेतित्यागः ॥
स्विष्टकृतादिहोमशेषंसमाप्य ॥ अंगीकृतनारायणबलौविहितंप्रेतरूपीविष्णुप्रीत्यर्थंपिंडदानं
करिष्ये ॥ अपहतेत्यादिदक्षिणसंस्थाःदशरेखाःकृत्वाताअभ्युक्ष्य ॥ सकृदाच्छिन्नैर्दर्भैरवस्तीर्य ॥
प्राचीनावीति ॥ शुधंतांविष्णुरूपीप्रेतःदशस्थानेषुदक्षिणसंस्थमपोनिनीय ॥ मधुघृताप्लुत-
तिलमिश्रितान्दशपिंडान्कृत्वा ॥ काश्यपगोत्रअज्ञातनामप्रेतविष्णुरुपअयंपिंडःस्वधा- ।२२७।
नमम ॥ इतिदशपिंडान्दद्यात् ॥ अत्रपितरेत्यादिनाप्राणभक्षणं ॥ यत्तेयमितिसूक्तेनपिंडाननुमंत्र्य ॥
यत्तेयमंवैवस्वतंमनोजगामदूरकं ॥ ततआवर्तयामसीहक्षयायजीवसे ॥ १ ॥ यत्तेदिवं

पृथिवीमं० ॥ २ ॥ यत्तेभूमिचतु० ॥ ३ ॥ यत्तेचतस्रोप्रदिशोम० ॥ ४ ॥ यत्तेसमुद्रमर्णवंम० ॥५॥ यत्तेमरीचिः प्रवतेम० ॥६॥ यत्तेआपोयदोषधीर्मं० ॥७॥ यत्तेसूर्यंयदुषसंम० ॥८॥ यत्ते-पर्वतन्महतोम० ॥९॥ यत्तेविश्वामिदंजगन्म०॥ १० ॥ यत्तेपराःपरावतोम० ॥११॥ यत्तेभूतंच-भव्यंम० ॥१२॥ ततःकुशैःशंखोदकेनपुरुषसूक्तेनपिंडानभिषिंच्य ॥ अंजनाभ्यंजनेदत्वा ॥ कुलाभिवृद्ध्यर्थंपिंडपूजनंकरिष्ये ॥ वस्त्रयज्ञोपवीतचंदनादिभिःसम्पूज्य ॥ नमोवःपितरोपिंडेषुनमस्कारः ॥ पिंडान् विसृज्यनद्यांक्षिपेत् ॥ नपत्न्यैपिंडंदद्यात् ॥ तर्पणंकुर्यात् ॥ सहस्रशीर्षेतिसूक्तेनऋगन्तेकाश्यप-गोत्रमज्ञातनामप्रेतंनारायणंतर्पयामि ॥ इतिषोडशवारंतर्पयेत् ॥ ततःपंचदेवतोद्देशेनबलिदानंकुर्यात् ॥ तिथ्यादिसंकीर्त्यविष्ण्वादिपंचदेवताप्रीत्यर्थंबलिदानंकरिष्ये ॥ अर्चितदेवतासमीपेघृताक्तोदनं पुरुषाहारपरिमितंनिधाय ॥ तत्रमंत्रः ॥ ब्रह्माविष्णुर्महादेवोयमश्चैवसकिंकरः ॥ बलिंगृही-त्वाकुर्वन्तुप्रेतस्यास्यशुभांगतिं ॥ ब्रह्मविष्णुरुद्रयमकिंकराःअज्ञातनामगोत्रेभ्यःयथांशेनभक्त-बलिंनिवेदयामि ॥ हस्तौपादौप्रक्षाल्याचम्य ॥ तिथौविष्ण्वादिपंचदेवताप्रीत्यर्थंप्रतिदैवतं त्रिविधफलसहितंअर्घदानंकरिष्ये ॥ ताम्रपात्रेउदकंगंधपुष्पाणित्रिविधफलंनिधाय ॥ ॐसहस्रशीर्षा०

गुलं ॥ विष्णवेत्रिविधफलैरिदमर्घ्यंसमर्पं० ॥ ॐब्रह्मयज्ञानं०विवः ॥ ब्रह्मणे०मि० ॥ ॐ
नमस्ते०नमः ॥ रुद्राय०मि० ॥ ॐयमायत्वा०पित्रे ॥ यमाय०मि० ॥ काश्यपगोत्रायाज्ञात-
नामप्रेतायत्रिविधफलैरिदमर्घ्यं० ॥ ततोविष्ण्वादिपंचदेवताप्रीत्यर्थंशर्करामधुगुडसर्पिषोनिवे-
दयामि ॥ गीतादिजागरणंकुर्यात् ॥ इत्यधिवासनं ॥ ततोऽस्यामेवरात्र्यामयुग्मान्पंचसप्तवा-
ब्राह्मणान्निमन्त्र्य ॥ उपोषितोश्वोभूतेमध्यान्हेविष्ण्वादीनभ्यर्च्य ॥ देशकालौस्मृत्वाविष्णुब्र-
ह्मरुद्रयमसकिंकराणांकाश्यपगोत्रस्याज्ञातनामप्रेतस्यक्षुत्पिपासानिवृत्त्यर्थंनारायणबलौविहितं
श्राद्धपंचकंएकोद्दिष्टविधिनातंत्रेणकरिष्ये ॥ तिलोदकंनास्ति ॥ समस्तसंपदिश्राद्धवद्द्वितीय
संकल्पान्तंकृत्वाविष्णोस्थानेआवाहनीयार्थेक्षणःक्रियतां ॥ ब्रह्मणःस्थाने ॥ रुद्रस्थाने ॥ यम-
स्थाने ॥ काश्यपगोत्रस्याज्ञातप्रेतस्यस्थानेक्षणाउपतिष्ठन्तु ॥ एवंश्राद्धसमाप्तिपर्यन्तंश्राद्धवद्वि-
भक्तियोज्या ॥ प्रेतस्थानेऽर्थंशब्दःश्राद्धसमाप्तिपर्यंतंलापनीयः ॥ चतुःस्थानेषुवर्तुलंमंडलंप्रे-
तस्थानेत्रिकोणं ॥ पाद्यादिसर्वंश्राद्धवत्कृत्वायद्यपिआवाहनंनास्ति ॥ तथापिभट्टप्रयोगेउक्तं ॥
एकोऽर्घएकपवित्रकःसर्वत्रकर्तव्यः ॥ प्रेतार्घपात्रेतूष्णींतिलान्निक्षिप्यआवाहनेतत्तन्मंत्रैरावा-

हयेत् ॥ चतुःस्थानेषुपाणिहोमंकृत्वाप्रेतस्थानेअग्नौहोमः ॥ काश्यपगोत्रायप्रेतायस्वाहा ॥
तथैवंत्यागः ॥ मूर्द्धानमित्यादिअन्नंपायसंभक्ष्यादिपरिवेश्य ॥ पृथिवीतेपात्रंस्वाहा ॥ विष्ण्वा-
दिचतुःपात्रेएवं ॥ प्रेतपात्रेकाश्यपगोत्रायप्रेतायेदमन्नंसोपस्करमुपतिष्ठतु ॥ ब्रह्मार्पणमित्यादि ॥
तृप्तिप्रश्नान्तंकृत्वास्वदितमितितृप्तिप्रश्नःसुस्वदितः ॥ नोच्छिष्टपिंडःआचान्तेषूपविष्टेषुनारायण-
बलौपिंडदानंकरिष्ये ॥ अपहतेत्यादिकुशानास्तीर्य ॥ शुंधन्तांविष्णवः ॥ शुंधन्तांब्रह्माणः ॥
शुंधन्तांरुद्राः ॥ शुंधन्तांयमाः ॥ शुंधन्तां०काश्यप०प्रेताः ॥ ततःअन्नशेषेणविष्णुब्रह्मशिवेभ्यः
सपरिवारायमायचतुरःपिंडान्दत्त्वाकाश्यपगोत्रअज्ञातप्रेतविष्णुरूपअयंतेपिंडउपतिष्ठताम् ॥
काश्यपाय०नमम ॥ अत्रपितरइतिघ्राणभक्षणान्तंकृत्वा ॥ शुंधन्तामित्यादिपूर्ववत् ॥ प्रेतपिंडो-
परितिलतोयांजलिदानंब्राह्मणाःकुर्वन्तु ॥ ब्राह्मणाःपवित्रपाणयःकुशतुलसीतोयांजलिंकृत्वा ॥
२९ काश्यपगोत्राय०प्रेतायविष्णुरूपिणेएषतिलतोयांजलिरुपतिष्ठतु ॥ एवंप्रत्येकंब्राह्मणाःदद्युः ॥
ततःपरेतनेत्यादिनाविकिरादानंविष्ण्वादिभ्यःभोजनपात्रोच्चालनान्तंकृत्वा ततःशंखेतुलसीजलंत्रि-
धायहस्तेगृहीत्वा ॥ विष्णोर्गृहदत्तंनारायणबलिःश्राद्धीयमन्नोदकादितदक्षय्यमस्तु ॥ ब्रह्मणःयद्दत्तं०

स्तु० ॥ रुद्रस्ययद्दत्तं०स्तु० यमस्ययद्दतं०स्तु० ॥ प्रेतस्थानेकाश्यप०प्रेतस्वरूपीविष्णोर्यद्दत्तंतदु-
पतिष्ठताम् ॥ ततःसाद्गुण्यार्थंदक्षिणाविशिष्टादेया ॥ प्रेतस्थानीयब्राह्मणायभूहिरण्यवस्त्राभर-
णादिदत्वाविशिष्टंतोषयेत् ॥ स्वधावाचनादिसर्वंपरिपूर्णमस्त्वित्यंतंकृत्वाआशिषोविशेषः ॥
यजमानःस्वयमुक्त्वाध्ययनंयद्ब्राह्मणमुखादिमान्यक्षराणिवाचयित्वा ॥ तान्यक्षराणि ॥ अनेन-
यथाशक्तियथाज्ञानेननारायणबलिकर्मणाभगवान्विष्णुरिमंकाश्यप०प्रेतंशुद्धमपापमर्हंकरोतु ॥
ततोगयाकृतश्राद्धेत्यादिकृतस्यनारायणबलिकर्मणःसांगतासिद्ध्यर्थंआचार्यायगोभूहिरण्यादि-
दक्षिणांदत्वा ॥ चरुस्थालिमाचार्यायदद्यात् ॥ मयायथाशक्तियथाज्ञानेनकृतेननारायण-
बलिकर्मणाश्रीविष्ण्वादिदेवताःप्रीयंतामनमम ॥ यस्यस्मृत्या० ॥ प्रमादात्० ॥ विष्णु-
स्मरणम् ॥ श्राद्धांगतर्पणंनास्ति ॥ ततःस्नात्वाचम्यधौतेवाससीपरिधायतिलपात्रदानं ॥
ब्राह्मणंसम्पूज्य ॥ तिलाःस्वर्णमयायुक्तादुरितक्षयकारकाः ॥ विष्णुप्रीतिकराःनित्यंअतःशांतिं
प्रयच्छमे ॥ अथवा ॥ तिलाःपुण्याःपवित्राश्चसर्वकामकराःशुभाः ॥ शुक्लाश्चैवतथाकृष्णाः
विष्णुगात्रसमुद्भवाः ॥ यानिकानिचपापानिब्रह्महत्यासमानिच ॥ तिलपात्रप्रदानेनतानिन-

श्यन्तितेसदा ॥ इदंतिलपात्रंसहिरण्यंसदक्षिणाकंयथानामददे ॥ गुडशर्करापायसादिस्वजनैः सहभुंजीत ॥ इतिनारायणबलिप्रयोगः समाप्तः ॥ ॥ ॥ ॥ ॥

॥ **अथ त्रिपिण्डीश्राद्धेशास्त्रसंमतकालनिर्णयः** ॥ कार्तिक्यांशुक्लायांचतुर्दश्यां (वैकुंठचतुर्दशी) प्रसिद्धा ॥ कार्तिक्यांश्रावणेमासेमार्गशीर्षेतथैवच ॥ माघफाल्गुनवैशाख्यांशुक्लपक्षेतथैवच ॥ चतुर्दश्यांविशेषेणषण्मासःकालउच्यते ॥ एतेकालाःप्रशस्यंतेपिशाचत्वविमोचने ॥ त्रिपिण्डीश्राद्धंमध्याह्नेमुख्यःकालउदीरितः ॥ इति सिंहस्थमाहात्म्येब्रह्माण्डपुराणेकाशीखण्डे ॥ तत्रसाग्निकश्चेत्कर्त्तातर्पणानन्तरंश्राद्धात्पूर्वंवैश्वदेवः ॥ निरग्निकश्चेच्छ्राद्धं कृत्वातंकुर्यात् ॥ अतोमाध्यन्दिनव्यतिरिक्तैःअन्यशाखीयैर्यदाकर्तव्यंतदास्वशाखोक्ताःमन्त्राग्राह्याइतिविशेषः ॥ शूद्रैर्यदाकर्तव्यंतदावेदोक्तमन्त्रैर्विनाकार्यम् ॥ ब्राह्मणभोजनस्थलेआमान्नदानंकार्यमितितेषांविशेषः ॥ इदंकर्मयावदुक्तमेवभवतितस्मादत्रविकिरपिण्डावघ्राणादिकंकिमपिनभवतिइत्येवविशेषःनान्यःकश्चन ॥ तदहःशुचिरक्रोधनोऽस्त्वरितइत्यादयोनियमास्तुभवन्त्येव ॥ अधिकारविशेषणत्वेनफलप्राप्तिग्रहयोग्यतासंपादकत्वात्तेषाम् ॥ यावदुक्ततायांप्रमाणोपपादनंतुमूलभूतगरुडपुराणस्याध्यायस्यव्याख्यावसरेकृतमितितत्रैवद्रष्टव्यंतत्कांक्षिभिः ॥ अपरञ्चकाशीखण्डे—"मार्गेशुक्लचतुर्दश्यांकपर्दीश्वरसंनिधौ ॥ आचारात् कार्तिकशुक्लचतुर्दश्यांकार्यम्चातुर्मासस्यान्तरभावत्वात् ॥ अथवायस्मिकस्मिन्मासेरिक्तायांतिथौकार्यम् ॥ दशम्यांकृष्णपक्षेचत्रयोदश्यामथापिवा ॥ त्रिपिण्डीकरणंकुर्याच्छुक्लपक्षेऽथपञ्चमी॥ इदंश्राद्धंमुहूर्तत्रयात्मकंप्रातःकालोत्तरंपूर्वाह्णेएवकर्तव्यम् ॥ "आमश्राद्धंतुपूर्वाह्णेएकोद्दिष्टंतुमध्यमे ॥ पार्वणंचापराह्णे-

पुत्रजातवृद्धिनिमित्तकमिति " हारितशातातपवचनात् ॥ तथाचव्याघ्रपादः—कालात्प्रातस्तनादूर्ध्वंत्रिमुहूर्तातुयातिथिः ॥ आमश्राद्धंतत्रकुर्यात्द्विमुहूर्तापिवाभवेत्इति ॥ पूर्वाह्णस्यपञ्चधाविभागपक्षादिनानेकप्रकारत्वेसत्यपिआवर्तनात्पूर्वोह्णाद्ब-पराह्णस्ततःपरइतिस्कंदपुराणोक्तद्वेधाविभागपक्षाश्रयणंकर्तव्यंब्राह्मणभोजनानुरोधरूपसामर्थ्यात् ॥ यत्रतुब्राह्मणभोजनं विनाआमश्राद्धंतत्रपञ्चधाविभागादिपक्षस्यैवाश्रयणमितिविवेकः ॥ अत्रमाषान्नकृसरादेर्नियमेनद्रव्यान्तरपरिसंख्यात-स्यांदोषत्रयापत्तेः ॥ नियमविधेर्लघुत्वाच ॥ अत्रोक्तंमधुरत्रयंकात्यायनेन ( आज्यक्षीरमधूनीति ) अत्रानुक्तं-यत्तत्ग्रंथान्तरतोबोद्धव्यमित्यलंग्रंथगौरवेण ॥

अथत्रिपिण्डीश्राद्धप्रयोगः ॥ उपहारान्गृहीत्वाआचार्येणसहश्राद्धार्थंतीर्थेगत्वा ॥ तीर्थभूमौअश्वत्थमूले-

---

१ ततःश्राद्धार्थयव ( गोधूम ) व्रीहि ( तण्डुल ) तिलधान्यैरष्टदलमण्डलत्रयंकृत्वातदुपरिपूर्णपात्रान्तंमहीद्यौरित्युक्तप्रकारेणकलशत्रयंसंस्थाप्यस्वर्णरौप्यताम्रनिर्मितंप्रतिमात्रयंस्थापयेत् ॥ मूर्त्यादीनांसर्वेषामभावेकेवलंकुशचटान्स्थाप्यतत्कुर्यात् ॥ गरुडउवाच—देवदेवजगन्नाथलोकानांहितकाम्यया ॥ और्ध्वदेहिकमाख्यातंप्रेतमोक्षस्यकारणम् ॥ नारायणबलिःप्रोक्तःस्तथापुत्तलकोविधिः ॥ विधिहीनविदग्धानां विदेशमरणेसति ॥ तथापिजन्तवःकेचिद्दुर्गतिंसमुपाश्रिताः ॥ यत्तत्कृत्यंत्वयाख्यातंतथादुर्मरणेसति ॥ स्वकुलेतुप्रजातानांपीडांकुर्वन्तिदारुणाम् ॥ नतेषांविधर्तेस्वामिन्तृणवापिदयातथा ॥ कथयस्वप्रसादेनतेषांमोक्षःकथंभवेत् ॥ किंकार्यंस्वकुलोद्भूतैःपुत्रैर्वापुरुषोत्तम ॥ गयांगन्तुमशक्तायेतथानीलविमोक्षणे ॥ किंकुर्युस्तेजगन्नाथत्वेतम्मेतत्त्वतोवद ॥ श्रीभगवानुवाच—शृणुसम्यक्प्रवक्ष्यामियत्प्रष्टोसित्वयानघ ॥ प्रेत-×

वास्थलंप्रकल्प्यगोमयेनोपलिप्यतत्रोपहारान्मुक्त्वा ॥ ततोमृदादीनिस्नानोपकरणान्यादायनाभिमात्रजलेप्रविश्यस्नानवि-
धिनास्नानंकार्यम् ॥ प्रयोगादिमाध्याह्निकंविधायनिमन्त्रितब्राह्मणसन्निधौत्रिपिण्डीश्राद्धंकुर्यात् ॥ **आचम्यप्राणाना-**

---

×मुक्तिकरंकर्मलोकानांसुखदायकम् ॥ यस्यस्मरणमात्रेणप्रेतपीडानजायते ॥ करिष्यामीतिसङ्कल्प्यप्रेतमोक्षमवाप्नुयात् ॥ यन्नकस्यचिदा-
ख्यातंगोपनीयमिदंमम ॥ रहस्यंपरमंह्येतत्सत्यंसत्यंखगेश्वर ॥ पिण्डत्रयात्मकंकर्मवक्ष्यामिसाम्प्रतंखग ॥ प्रेतानांतृप्तिजननंलोकानांसुखदा-
यकम् ॥ गरुडउवाच—भगवन्कोविधिस्तत्रकिंदानंकोऽत्रपूज्यते ॥ सर्वविस्तरतोब्रूहिदयांकृत्वाममोपरि ॥ भगवानुवाच--तीर्थेगत्वाशुचि-
स्नात्वाकृतमाध्याह्निकक्रियः॥ स्थलंप्रकल्पयेद्विद्वान्गोमयेनलिपेत्ततः ॥ सुप्रदेशेशुचौस्थानेदेवालयेमनोरमे ॥ नदीसंगमतीर्थेवापुण्यक्षेत्रेशिवा-
लये ॥ यथावकाशसम्प्राप्तेह्यश्वत्थसन्निधौऽपिवा ॥ लिप्त्वागोमयमृदाभूमींशुचौदेशेचसंस्थितः ॥ तत्रपिण्डत्रयंकुर्यात्प्रेतान्विष्णुमयान्स्मरन् ॥
आदौसम्पूजयेद्विष्णुमुपचारैःखगोत्तम ॥ भूतप्रेतपिशाचाद्यायक्षगन्धर्वराक्षसाः॥ शाकिन्यादिग्रहैर्ग्रस्तारेवतीजृम्भकादयः ॥ एकद्वित्रीज्वरां-
श्चैवचतुर्थापक्षमासजाः ॥ सततंचसमायुक्तानानाविधिसमन्विताः ॥ यथाश्रुश्रुतसम्प्रोक्ताःसारग्राहेणसम्भृताः ॥ पुराणसंमताश्चात्रस्मृतिसंमा-
नितास्तथा ॥ अन्येचविविधास्तेषांशान्त्यर्थंकथयाम्यहम् ॥ विधानंसर्वरोगघ्नंसर्वग्रहनिवारणम् ॥ श्राद्धत्रयविधानन्तुविष्णुब्रह्मशिवात्मकम् ॥
एकोद्दिष्टविधानेनकर्तव्यंरोगशान्तये ॥ कार्तिकादिषुमासेषुमार्गेपौषेविशेषतः ॥ शुक्लपक्षेतथाकृष्णेएकादश्यांतथैवच ॥ अष्टम्यांवाचतुर्दश्यां
पक्षयोरुभयोस्तथा ॥ नकालनियमस्तत्रदोषोत्पन्नेद्रुतंचरेत् ॥ विष्णुब्रह्मशिवानान्तुकुर्याद्यजनमुत्तमम् ॥ एकोद्दिष्टविधानेनकुर्याच्छ्राद्धंयथाविधि ॥
स्थापनंकलशानान्तुपूर्वपश्चिमसंभवम् ॥ कलशत्रयंप्रकल्पेततीर्थोदकेनपूरितम् ॥ पूर्वोक्तविधिनास्थाप्यमूर्तित्रयंयथाक्रमम् ॥ स्वर्णरौप्यताम्र-
मयंविष्णुब्रह्मशिवात्मकम् ॥ मूर्तित्रयंप्रतिष्ठाप्यह्यग्न्युत्तारणपूर्वकम् ॥ स्नानंचविधिवत्कृत्वामूर्तिसंस्कारजंशुभम् ॥ प्रतिष्ठांचततस्तेषांपूजाका-*

यम्य ॥ अद्यपूर्वो०तिथौअपसव्यंअ०गोत्रस्य०ममशरीरे ( पुत्रपौत्रकलत्रादेर्वा ) जनितप्रेत-
पीडोपशमनार्थंप्रेतमोक्षार्थंचअनिर्दिष्टगोत्राणांअनिर्दिष्टसापेक्षकानांविष्णुब्रह्मरुद्राणांसत्त्वरज-
तमोरूपाणांदिव्यन्तरिक्षभूमिस्थानांयक्षराक्षसपिशाचभूतसर्पयोनिगतानांवायुरूपाणांअसद्ग-

---

*र्पयथाविधिः ॥ विष्णुसूक्तविधानेनपूजादेवत्रयात्मिका ॥ चन्दनाद्यैःपुष्पैश्चधूपैर्दीपैर्निवेदनैः ॥ पत्रपूगादिभिःफलैरर्घ्यंदद्याद्यथाक्रमम् ॥ ततोभिमन्त्रयेत्विप्रान्सुशीलान्दम्भवर्जितान् ॥ त्रीनेवविनतापुत्रवेदवेदाङ्गपारगान् ॥ विष्णुब्रह्मशिवानान्तुजपेयुस्तेह्यतन्द्रिताः ॥ विष्णुंच विष्णुसूक्तेनविष्णुकुम्भेयथाविधि ॥ अग्निमीळेतिमन्त्रेणब्रह्माणंब्रह्मसूक्ततः ॥ अग्नआयाहीतिमन्त्रेणरुद्रञ्चरुद्रसूक्ततः ॥ अनेनविधिनाजप्त्वा-जपान्तेपुनिवेदयेत् ॥ श्राद्धत्रयंप्रकुर्वीतयवव्रीहितिलैःक्रमात् ॥ उपविश्यशुचौदेशेप्राणानायम्ययत्नतः ॥ श्राद्धेविधिमिमंतिष्ठन्विष्णुंसर्वत्रसंस्म-रेत् ॥ पठित्वासत्यावेतिह्युपहाराणिप्रोक्षयेत् ॥ मधुवातेत्यृचंजप्त्वाजपेन्मधुमधुमधु ॥ देशकालौततःस्मृत्वाकरिष्यइतिकल्पयेत् ॥ पाद्यासनमर्घ्यादिसङ्कल्पार्चनभोजनैः ॥ अवनेजनंततःपश्चात्पिण्डद्रव्येषुप्रक्षिपेत् ॥ तिलान्नमध्वाज्यमिश्र स्त्वेषपिण्डविधिस्मृतः ॥ आदौयवमयःपिण्डोद्वितीयोव्रीहिसंभवः ॥ तिलमयस्तृतीयश्चह्येतत्पिण्डत्रयंस्मृतम् ॥ कुशानास्तीर्यसर्वत्रतेषांकृत्वाऽद्भिःसिंचयेत् ॥ प्रथमंपिण्ड-मादायपितृवंशेतिपूर्ववत् ॥ इमंयवमयंपिण्डं० ॥ एकान्तरं० ॥ सान्निपातं० येकेचित्० ॥ येकेचिद्दिवि० इतिप्रथमपिण्डविधिः ॥ इमं व्रीहिमयंपिण्डं० ॥ भूतप्रेतपिशाच० ॥ ज्वरादिसर्व० ॥ येकेचित्० ॥ अन्तरिक्षे० ॥ इतिद्वितीयपिण्डविधिः ॥ इमंतिलमयंपिण्डं० ॥ असगोत्रःसगोत्रोवा० ॥ पिण्याक० ॥ येकेचित्तामसा० ॥ तमोरूपा० ॥ इतितृतीयपिण्डविधिः ॥

तिप्राप्तानांस्वर्गलोकाद्यक्षय्यविष्णुलोकप्राप्त्यर्थंसव्यंएकोद्दिष्टविधिनात्रिपिण्डीश्राद्धमहंकरि-
ष्ये ॥ ( तत्रादौत्रिपिण्डीश्राद्धाधिकारार्थंकृच्छ्रत्रयात्मकप्रायश्चित्तसङ्कल्पः ) पुनर्जलमादाय—तदङ्गभूतंविष्णोः
षोडशोपचारैःपूजनमहंकरिष्ये ॥ इतिविष्णुंसम्पूज्य ॥ श्राद्धारंभः ॥ आचम्यप्राणानायम्य ॥
अपसव्यं ॥ अक्रोधनैःशौचपरैःसततंब्रह्मचारिभिः ॥ भवितव्यंभवद्भिश्चमयाचश्राद्धकारिणा
॥ १ ॥ अनिर्दिष्टगोत्राःअस्मत्कुलेसापेक्षकदिविस्थाःसात्विकप्रेताःएतद्वःपाद्यंपादावनेजनंपा-
दप्रक्षालनंएषवोऽर्घः ॥ इदमत्रचन्दनंपुष्पम् ॥ १ ॥ अक्रोधनैःशौ० ॥ १ ॥ अनिर्दिष्टगोत्राः
अस्मत्कुलेसापेक्षकअन्तरिक्षस्थराजसप्रेताःएतद्वःपाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽर्घः ॥
इदमत्रचन्दनंपुष्पम् ॥ २ ॥ अक्रोधनैःशौ० ॥१॥ अनिर्दिष्टगोत्राःअस्मत्कुलेसापेक्षकभूमिस्थ
तामसप्रेताःएतद्वःपाद्यंपादावनेजनंपादप्रक्षालनंएषवोऽर्घः ॥ इदमत्रचन्दनंपुष्पम् ॥ ३ ॥
सव्यं ॥ अतिथिस्वरूपीश्रीमहाविष्णवेनमःपाद्यंपा०र्घः ॥ इदम० ॥ पादार्घोदकनिक्षेपःस्वपादप्र-
क्षालनं ॥ आचम्य ॥ दिग्बन्धः—ऐंद्र्यांनारायणोरक्षे० ॥ ३ ॥ इतिदिग्बन्धः ॥ प्रार्थना—श्राद्धभूमौगयां
ज्ञात्वा०॥ १ ॥ सप्तव्याधा० ॥२॥ तेऽपिजाता० ॥३॥ देवताभ्यश्च ( अपसव्यं ) पितृभ्यश्च

( सव्यं ) महायोगिभ्यएवच ॥ नमःस्वाहायैस्वधायैनित्यमेवनमोनमः ॥ गयायांपितृरूपेण०
॥१॥ तिलोदककरणम्—ईशानकोणेत्रिदर्भासनोपरिपात्रंनिधायशन्नोदेवीरितिमन्त्रेणजलपूरणम्—ॐशन्नोदेवी०तुनः
॥१॥ नवदर्भात्मककुशकूर्चप्रक्षेपः—ॐपवित्रेस्थो० ॥ २ ॥ यवप्रक्षेपः—ॐयवोसि० ॥ ३ ॥ तिलप्रक्षेपः—
तिलोसिसो० ॥४॥ गन्धप्रक्षेपः—त्वांगन्धर्वा० ॥ ५ ॥ तूष्णींपुष्पम् ॥ तुलसीपत्रम्—तुलसीशतपत्राणि
भृङ्गराजस्तथवच ॥ मालतीमोगरंचैवपितृणांदत्तमक्षयम् ॥ तूष्णींपूगीफलहिरण्यप्रक्षेपः ॥ ततःयद्देवे-
तिमन्त्रेणआलोड्य—ॐयद्देवा० ॥१॥ यदिदिवा० ॥२॥ यदिजाग्रत्० ॥३॥ कुशकूर्चेणश्राद्धीयद्रव्यप्रोक्ष-
णम्—अपवित्रःपवित्रोवा० ॥१॥ ( ततःएकस्मिन्पात्रेतिलोदकंगृहीत्वातज्जलंगायत्र्याभिमन्त्रयेत् ॥ पाकशाला-
यांगत्वाअपसव्येनपाकप्रोक्षणम् ) अपसव्यं ॥ उदक्यादिक्षुद्रदृष्टिनिपतितपाकादिदोषाणांपवि-
त्रतास्तु ॥ देशकालपाकपात्रद्रव्यश्रद्धासंपदस्तु ॥ सर्वेपाकाःसर्वोपहाराःशुचयोभवन्तु ॥
सव्यं ॥ आसनेउपविश्य ॥ अद्यपूर्वो०अपसव्यंअनिर्दिष्टगोत्राणांसापेक्षकसात्विकराजस
तामसप्रेतानांप्रेतत्वोत्तारणार्थंअसद्गति०सद्गतिप्रा०सव्यं ॥ मध्वाज्यक्षीरसंयुक्तयवव्रीहितिल
पिष्टपिण्डत्रययुतमर्घ्यसहितंत्रिपिण्डीकरणश्राद्धमहंकरिष्ये ॥ अपसव्यं ॥ अनिर्दिष्टगोत्राणां

अस्मत्कुलेसापेक्षकसात्विकप्रेतानांइदमासनंसुखासनम् ॥१॥ अनिर्दिष्टगोत्राणांअस्मत्कुलेसापे-
क्षकराजसप्रेतानांइदमासनंसु० ॥२॥ अनिर्दिष्टगोत्राणांअस्मत्कुलेसापेक्षकतामसप्रेतानांइद्-
मासनंसु० ॥३॥ सव्यं ॥ श्रीमहाविष्णोइदमासनंसु० ( पलाशपत्रनिर्मितचत्वारिपात्राणिस्थापयित्वा
अधोलिखितद्रव्याणिनिक्षिपेत् ) ॥ अपसव्यं ॥ शन्नोदेवीत्युदकपूरणम्—ॐशन्नोदेवी० ॥ १ ॥ तिलप्रक्षेपः—
तिलोसि० ॥२॥ पवित्रद्वयंनिधाय—ॐपवित्रेस्थो० ॥३॥ गन्धपुष्पैःप्रच्छाद्य ॥ अनिर्दिष्टगोत्राः
अस्मत्कुलेसापेक्षकसात्विकप्रेताःपवित्रंवःपूजनंवः ॥ अर्घ्यंगृहीत्वा—ॐयादिव्याऽआपःपयसास-
म्बभूवुर्याऽआन्तरिक्षाउतपार्थिवीर्याः ॥ हिरण्यवर्णायज्ञियास्तानऽआपःशिवाशᳬस्योनाःसुह-
वाभवन्तु ॥ १ ॥ सात्विकप्रेताःएषवोऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ उदकस्पर्शः ॥ १ ॥ अनिर्दिष्ट
गोत्राःअस्म०सापे०राजसप्रेताःपवित्रंवःपूजनंवः ॥ अर्घ्यंगृहीत्वा—ॐयादिव्या० ॥ राजसप्रेताः
एषवोर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ उदकस्पर्शः—अनिर्दिष्टगोत्राःअस्म०सापे०तामसप्रेताःपवित्रंवः ॥
पूजनंवः ॥ अर्घ्यंगृहीत्वा—ॐयादिव्या० ॥ तामसप्रेताःएषवोऽर्घःअर्घेपुनःप्रत्यर्घः ॥ उदकस्पर्शः॥
सव्यं ॥ ॐयादिव्या० ॥ अतिथिस्वरूपिश्रीमहाविष्णोएषतेऽर्घः ॥ अर्घेपुनःप्रत्यर्घः ॥ उद-

कस्पर्शः ॥ अपसव्यं ॥ (नात्रपात्रन्युब्जीकरणम्) अथपूजनम्—यथादत्तंगन्धाद्यर्चनंसोमसूर्यवायुर्दै-
वतंअनिर्दिष्टगोत्रेभ्यःसात्विकराजसतामसप्रेतेभ्यःयथादत्तंगन्धाद्यर्चनंवः ॥ सव्यं ॥ अतिथि
स्वरूपिश्रीमहाविष्णवेयथादत्तंगन्धाद्यर्चनंमहाविष्णवेस्वाहासंपद्यन्तांनमम ॥ अस्यत्रिपिण्डी-
करणश्राद्धस्यार्चनविधेःसर्वंपरिपूर्णमस्तु ॥ इदमर्चितंवोज्योतिःसूर्योज्योतिःसूर्यायपुष्पं ॥
शेषोपचाराःसम्पूर्णाविधिवन्तोभवन्तु ॥ अस्तुविधिवत् ॥ आचम्य ॥ अग्रेतनसूक्तजपयोग्यतावाप्तिः ॥
ततोविष्णुब्रह्मरुद्रसूक्तजपार्थेब्राह्मणान्वृत्वातेभ्योवरणंदद्यात्तेचसूक्तानिजपेयुः ॥ अपसव्यं ॥ पात्रपरिवेषणम्—
पात्रत्रयेप्रथुकपायसान्नादिपूरयित्वा—ॐऋतन्त्वासत्येन० ॥ अनिर्दिष्टगोत्रेभ्यःअस्मत्कुलेसापेक्षकसा-
त्विकराजसतामसप्रेतेभ्यःनैवेद्यमात्रभोजनमिदंवः॥ सव्यं विष्णवेतुलसीमात्रभोजनंवः॥ अप-
सव्यं ॥ अनिर्दिष्टगोत्रेभ्यःसा०रा०ता०प्रेतेभ्यःमुखवासताम्बूलमिदंवः ॥ कुशमूलेनरेपात्रयंकृत्वा ॥
कुशानास्तीर्यतिलोदकंसिञ्चेत् तत्रमन्त्राः—अस्मत्कुलेमृतायेचगतिर्येषांनविद्यते ॥ आवाहयिष्येतान्स-
र्वान्दर्भपृष्ठेतिलोदकम् ॥१॥ मातामहकुलेयेचगतिर्येषांनविद्यते ॥ आवाहयिष्ये० ॥२॥ बन्धु-
वर्गेकुलेयेचगतिर्येषांनविद्यते ॥ तेषांजलंमयादत्तंह्यक्षय्यमुपतिष्ठताम् ॥३॥ अथावनेजनम्—अनि-

र्दिष्टगोत्राःअस्मत्कुलेसापेक्षकसात्विकप्रेताःअवनेजनंमिदंव: ॥१॥ अनिर्दिष्टगो०अस्म० सापे० राजसप्रेताःअवनेजनमिदंवः ॥२॥ अनिर्दिष्टगो०अस्म०सापे०तामसप्रेताःअवनेजनामिदंवः॥३॥ अवनेज्यतिलान्विकिरेत् ॥ ( यवपिष्टतण्डुलपिष्टतिलपिष्टप्रतिपिण्डद्रव्येषुतिलमधुदुग्धघृतानिक्षिप्त्वापिण्डान्दद्यात् ॥ प्रथमं यवमयपिण्डमादाय—पितृवंशेमृतायेचमातृवंशेतथैवच ॥ गुरुश्वशुरबन्धूनांयेचान्येबान्धवाःस्मृताः ॥१॥ येमेकुलेलुप्तपिण्डाःपुत्रदारविवर्जिताः ॥ क्रियालोपगतायेचजात्यन्धाःपङ्गवस्तथा ॥ २॥ विरूपाआमगर्भाश्चज्ञाताज्ञाताकुलेमम ॥ तेषांपिण्डोमयादत्तोह्यक्षय्यमुपतिष्ठताम् ॥ ३ ॥ इमं यवमयंपिण्डंमधुसर्पिःसमन्वितम् ॥ ददामितस्मैप्रेतायय:पीडांकुरुतेमम ॥ ४ ॥ एकान्तरंच सततंतृतीयंचचतुर्थकम् ॥ पाक्षिकंमासिकंचैवसांवत्सरादिकंतथा ॥५॥ सन्निपातंमहारौद्रंकालातिकमथापिवा ॥ नाशयेत्तंममक्षिप्रंवासुदेवोमहेश्वरः ॥ ६ ॥ येकेचित्प्रेतरूपेणवर्तन्तेपितरोमम ॥ यवपिण्डप्रदानेनतृप्तिंगच्छन्तुशाश्वतीम् ॥ ७ ॥ येकेचिद्दिवितिष्ठन्तिप्रेताःसात्विक रूपिणः ॥ यवपिण्डप्रदानेनतृप्तिंगच्छन्तुतेक्षयाम् ॥८॥ अनिर्दिष्टगोत्राःअस्मत्सापे०सात्विक प्रेताःममगृहेममकुलेयेपीडांकुर्वन्तितेषांपीडोपशान्त्यर्थंइमंयवमयपिण्डंअहंददामिपितृतीर्थेन-

द्द्यात् ॥ इदंसात्विकायनमम ॥१॥ ततोद्वितीयंतण्डुलमयपिण्डमादाय–पितृवंशेमृता० ॥३॥ इतिश्लोक
त्रयंपठित्वा ॥ इमंव्रीहिमयंपिण्डंमधुसर्पिःसमन्वितम् ॥ तन्मुक्तयेप्रयच्छामिपीडांयेकुर्वतेमम
॥४॥ भूतप्रेतपिशाचोत्थंयक्षवैतालसंभवम् ॥ रेवतीगृहजंदोषंसर्वग्रहनिवारणम् ॥ ५॥ ज्वरा-
दिसर्वरोगघ्नंसर्वाभयनिवारणम् ॥ संबन्धिषुप्रेतरुपःप्रेतरूपोमदीयकः ॥ ६॥ येकेचित्प्रेतरू-
पेणवर्तन्तेपितरोमम ॥ तण्डुलपिण्डप्रदानेनव्रजन्तुगतिमुत्तमाम् ॥ ७ ॥ अन्तरिक्षेचयेकेचि-
त्राजसावायुरूपिणः ॥ तण्डुलपिण्डप्रदानेनतेतृप्यन्तुमुदान्विताः ॥८॥ अनिर्दिष्टगोत्राःराज-
सप्रेताःममगृहेममकुलेयेपीडांकुर्वन्तितेषांपीडोपशान्त्यर्थंइमंतण्डुलमयंपिण्डंअहंददामिपितृ-
तीर्थेनदद्यात् ॥ इदंराजसायनमम ॥ २ ॥ ततस्तृतीयंकृष्णतिलमयंपिण्डमादाय–पितृवंशेमृता० इति
श्लोकत्रयंपठित्वा ॥ इमंतिलमयंपिण्डंमधुसर्पिःसमन्वितम् ॥ तेभ्योददामियेपीडांकुलेमेकुर्व-
तेसदा ॥४॥ असगोत्रःसगोत्रोवास्वगोत्रोवान्यगोत्रजः ॥ यःकश्चित्प्रेतरूपेणपीडाञ्चकुरुतेमम
॥५॥ भवायभवरूपायघोररूपायतेनमः ॥ पिण्याकपिण्डदानेनतृप्तिर्भवतुशाश्वतीम् ॥ ६ ॥
रौद्रज्वरादिसम्भूतंभूतप्रेतादिसम्भवम् ॥ तत्सर्वंनाशमायातिपिण्डेनानेनरुद्रतः ॥ ७ ॥ येके-

चित्तामसाःप्रेताभूमौतिष्ठन्तिसर्वदा ॥ तिलपिण्डप्रदानेनगतिंगच्छन्तुतेध्रुवम् ॥८॥ तमोरूपा-
श्रयेकेचिद्वर्त्तन्तेपितरोमम ॥ तिलपिण्डप्रदानेनतेतृप्यन्तुक्षुधार्दिताः ॥ ९ ॥ अनिर्दिष्टगोत्राः
तामसप्रेताः ममगृहेममकुलेपीडांकुर्वन्तितेषांपिडोपशान्त्यर्थंइमांतिलमयंपिण्डंअहंददामिपितृ-
तीर्थेनदद्यात् ॥ इदंतामसायनमम ॥ पिण्डेप्रत्यवनेजनम्—ॐनमोवःपितरोरसाय ॥ नमोवःपितरः
शोषाय ॥ नमोवःपितरोजीवाय ॥ नमोवःपितरःस्वधायै ॥ नमोवःपितरोघोराय ॥ नमोवः
पितरोमन्यवे ॥६॥ ( इतिषण्मन्त्रान्तेषुप्रतिमन्त्रमेकैकंनमस्कृत्य ) प्रतिपिण्डंसूत्रत्रयदानं ॥ सव्यं ॥
हस्तप्रक्षालनम ॥ आचम्य ॥ अद्यपूर्वो० अपसव्यं अनिर्दिष्टगोत्राणांसात्विकराजसता-
मसप्रेतानांप्रेतत्वनिवृत्तिपूर्वकमक्षय्यलोकावाप्त्यर्थंत्रिपिण्डीकरणश्राद्धनिमित्तंपिण्डपूजनमहं-
करिष्ये ॥ पिण्डेचन्दनमिदन्ते ॥ पिण्डेपुष्पंधूपंदीपंनैवेद्यंघृतदुग्धफलताम्बूलसहिरण्यदक्षिणा-
५० मिदन्ते ॥ अर्घदानम्—मातुलिङ्गैश्चजम्बिरैरुत्तरीभिर्यथाक्रमम् ॥ अयमर्घमयादत्तःपुत्रपौत्रविवृद्धये
॥१॥ अनिर्दिष्टगोत्रायसात्विकरूपायदिविस्थप्रेतायमातुलिङ्गार्घमक्षय्यस्तवोपतिष्ठताम् ॥ १ ॥
अनिर्दिष्टगोत्रायराजसरूपायान्तरिक्षस्थायप्रेतायजम्बिरार्घमक्षय्यस्तवो० ॥२॥ अनिर्दिष्टगो-

त्रायतामसरूपायभूमिस्थप्रेतायखर्जुरार्घमक्षय्यस्तवो० ॥ ३ ॥ सव्यं ॥ ब्राह्मणभोजनसङ्कल्पः— अद्यपूर्वो०अपसव्यंत्रिपिण्डीश्राद्धनिमित्तं ( सप्तवात्रीन्ब्राह्मणान्वटुकत्रयंकुमारिकात्रयंच ) ब्राह्मणान्भोजयिष्येतेनसात्विकराजसतामसप्रेताःप्रीयन्ताम् ॥ सव्यं ॥ ततःसा०रा०ता०प्रीत्यर्थंवस्त्रकमण्डलुउपानद्दानंकुर्यात् ॥ अद्यपूर्वो०पिण्डपूजनविधेःसर्वंपरिपूर्णमस्तु॥ अथतर्पणम्—आचम्य ॥ अद्यपूर्वो०अपसव्यं अनिर्दिष्टगोत्राणांसा०रा० ता० प्रेतानांपिपासादोषनिवृत्यर्थंत्रिपिण्डीश्राद्धनिमित्तंसव्यंविष्णुब्रह्मरुद्रतर्पणमहंकरिष्ये ॥ ताम्रपात्रेगन्धपुष्पतुलसीतिलयवसर्वौषधीदुग्धमिश्रितंजलंकृत्वाशङ्खोदकेनकुशेनवाशालिग्रामोपरिदर्भकुशचटत्रयोपरिविष्णुसूक्तेनब्रह्मसूक्तेनरुद्रसूक्तेनचतर्पणंकुर्यात् ॥ अथविष्णुतर्पणम्—इषेत्वा०विष्णोरराटमसि०ॐसहस्रशीर्षापुरुषः।२२।अथब्रह्मसूक्तम्—ॐअग्निमीळे०।१।ब्रह्मयज्ञानं० ॥२॥ तेजोसीतिसम्पूर्णाध्यायः ॥ अथरुद्रसूक्तम्—ॐअग्नआयाहि०॥१॥ ॐनमस्तेरुद्रमन्यव०॥६६॥ अपसव्यं सात्विकपिण्डेविष्णुतर्पणोपार्जितंपुण्यंउपतिष्ठतु ॥१॥ राजसपिण्डेब्रह्मतर्पणोपार्जितंपुण्यं उप०॥२॥तामसपिण्डेरुद्रतर्पणोपार्जितंपुण्यंउप०॥३॥ सव्यं॥तर्पणान्तेआचार्यःउपविष्टैर्ब्राह्मणैः सार्द्धंपञ्चवाक्यात्मकंस्वस्तिवाचनंविधाययजमानस्यअभिषेकंकुर्यात् ॥ तद्यथा—आपोहिष्ठेति-

त्रिभिः०सहस्राक्षादिभिःपञ्चश्लोकैः॥पालाशंभवतीत्यंतैरभिषिच्यआशीषोदद्यात् ॥अथाशीर्वादः—ॐआब्रह्मन्ब्राह्मणो० ॥१॥ अद्यपूर्वो०अनिर्दिष्टगोत्राणांअनिर्दि० सापेक्षकसात्विकराजसतामसप्रेतानांत्रिपिण्डीकरणश्राद्धविधेःसर्वंपरिपूर्णमस्तु॥ अपसव्यं ॥ कृतेनानेनात्रिपिण्डीकरणश्राद्धेनअनिर्दिष्टगोत्राणांअस्मत्कुलेसापे० सात्विकराजसतामसप्रेतानांप्रेतत्वनिवृत्तिः असद्गति०सद्गतिप्रा० ॥ अक्षयातृप्तिः॥ यमयातनाभ० ॥ प्रेतत्वमुक्तिःद्वात्रिंशद्दुर्मरण०॥ सव्यं॥ प्रार्थना—दिव्यन्तरिक्षभूमिस्थासात्विकाराजसास्तथा ॥ प्रेताश्चतामसायेन्येशांतिगच्छन्तुतर्पिताः॥ यस्यस्मृत्येतिविष्णुंनमस्कृत्य॥ चरणोदकंपिबेत्॥ हस्तप्रक्षालनं॥ जलमादाय—अस्मिन्त्रिपिण्डीकरणश्राद्धविधौर्यन्न्यूनातिरिक्तंतत्सर्वंभवतांब्राह्मणानांवचनाच्छ्रीविष्णोः प्रसादात्सर्वंपरिपूर्णमास्त्विति० ॥ अस्तुपरिपूर्णता॥ इतित्रिपिण्डीकरणश्राद्धप्रयोगः ॥ ॥ ॥

अथआत्मघातादिदुर्मरणेनारायणबलिः—शस्त्राग्निजलविषपानादिभिःप्रमादमृतानांआत्मघातिनांदुर्मरणेक्रियाविशेषः ॥ शुक्लैकादश्यांदेवालयेतीर्थेवागत्वायथोपस्करान्संपाद्यकर्मार्थंशुद्धभूमिंप्रकल्प्ययथाविधिस्नात्वातीर्थंप्र-

१ एतत्तुवर्षोत्तरकरणपक्षेद्विगुणप्रायश्चित्तद्रव्यसंकल्पंकृत्वासंततिफलककाम्यनारायणबलिवत्सर्वंकुर्यात्॥ सद्यःकरणपक्षेतुयथाशक्तिः

योगंदेहशुद्धिंसत्येशस्थापनादिपुरश्चरणाङ्गश्राद्धान्तंकर्मकृत्वाऽइदंकुर्यात् ॥ तत्रादौप्रायश्चित्तद्रव्यसङ्कल्पः—अद्यपूर्वो० तिथौ अपसव्यं अ०गोत्रस्य अ०प्रेतस्यअमुकदुर्मरणनिमित्तकप्रत्यवायपरिहारद्वाराऔर्ध्वदेहिक

÷प्रायश्चित्तद्रव्यंसंकल्प्यशुक्लैकादश्यादिकालमनपेक्ष्यैवसमनन्तरोक्तसंकल्पंकृत्वाऽइदंकुर्यात् ॥ काम्यप्रयोगेऽस्मिन्प्रयोगेचसंकल्पेनामगोत्रोच्चारे विशेषस्तुस्पष्टएव ॥ यत्रनामगोत्राद्यजानन, “ काश्यपगोत्रदेवदत्तप्रेत ” इत्युच्चारयेत् ॥ यत्रमृतस्यंनामगोत्रादिज्ञानंतत्रमृतस्यनामगोत्रादि-ग्रहणम् ॥ अत्रमिताक्षरायांमूलवचनानि ॥ नारायणवलिस्वरूपंवैष्णवेऽभिहितंयथा—एकादशींसमासाद्यशुक्लपक्षस्यवैतिथिम् ॥ विष्णुंसमर्च्ये-येद्देवंयमंवैवस्वतंतथा ॥ दशपिण्डान्घृताभ्यक्तान्दर्भेषुमधुसंयुतान् ॥ तिलमिश्रान्प्रदद्याद्वैसंयतोदक्षिणामुखः ॥ विष्णुंबुद्धौसमासाद्यनद्यम्भ-सिततःक्षिपेत् ॥ नामगोत्रग्रहंतत्रपुष्पैरभ्यर्चनंतथा ॥ धूपदीपप्रदानञ्चभक्ष्यंभोज्यंतथाऽपरम् ॥ निमन्त्रयेतविप्रान्वैपञ्चसप्तनवाऽपिवा ॥ विद्यातपःसमृद्धान्वैकुलोत्पन्नान्समाहितान् ॥ अपरेऽहनिसम्प्राप्तेमध्याह्नेसमुपोषितः ॥ विष्णोरभ्यर्चनंकृत्वाविप्रांस्तानुपवेशयेत् ॥ उदङ्मु-खान्यथाज्येष्ठंपितृरूपमनुस्मरन् ॥ मनोनिवेश्यविष्णौवैसर्वंकुर्यादतन्द्रितः ॥ आवाहनादियत्प्रोक्तंदेवपूर्वंतदाचरेत् ॥ तृप्तान्ज्ञात्वाततोविप्रान् तृप्तिंपृष्ट्वायथाविधि ॥ हविष्यव्यञ्जनेनैवतिलादिसहितेनच ॥ पञ्चपिण्डान्प्रदद्याच्चदैवंरूपमनुस्मरन् ॥ प्रथमंविष्णवेदद्याद्ब्रह्मणेचशिवायच ॥ यमायसानुचरायचतुर्थंपिण्डमुत्सृजेत् ॥ मृतंसंकीर्त्यमनसागोत्रपूर्वमतःपरम् ॥ विष्णोर्नामगृहीत्वैवपञ्चमंपूर्ववत्क्षिपेत् ॥ विप्रानाचाम्यविधि-वद्दक्षिणाभिःसमर्चयेत् ॥ एकंवृद्धतमंविप्रंहिरण्येनसमर्चयेत् ॥ गवावस्त्रेणभूम्याचप्रेतंतंमनसास्मरन् ॥ ततस्तिलाम्भोविप्रास्तुहस्तैर्दर्भसम-न्वितैः ॥ क्षिपेयुर्गोत्रपूर्वंतुनामबुद्धौनिवेश्यच ॥ हविर्गन्धतिलाम्भस्तुतस्मैदद्युः समाहिताः ॥ मित्रभृत्यजनैस्सार्वंपश्चाद्भुञ्जीतवाग्यतः ॥ इति ॥

सम्प्रदानत्वयोग्यतासिद्ध्यर्थंअमुकप्रायश्चित्तंनारायणबलिंचकरिष्ये इतिसङ्कल्प्यतत्प्रायश्चित्तं-दानंचकार्यम् ॥ अशक्तौदानमेवकार्यम् ॥ ततोयथाविधिस्थापितेकलशद्वयेहैमप्रतिमयोर्विष्णुंयमंचावाह्यपुरुषसूक्तेनय-मायत्वेति यमदैवतमन्त्रेणचक्रमेणविष्णुंयमंचषोडशोपचारैःसम्पूज्यतत्पूर्वभागेरेखायांदक्षिणाग्रान्कुशानास्तीर्य "शुन्धन्तांवि ष्णुरूपामुकेप्रेत" इतिदशस्थानेषुअवनिज्यमधुघृततिलमिश्रानोदनपिण्डान्दश "अमुकगोत्रामुकप्रेतविष्णुरूपअ-यंतेपिण्ड" इतिदक्षिणसंस्थानपित्र्यधर्मेणदद्यात् ॥ पिण्डान्गन्धादिभिरभ्यर्च्यप्रवाहणान्तंकृत्वानद्यांक्षिपेत् ॥ ततःरात्रौ नवसप्तपञ्चवाविप्रान्निमन्त्र्यजागरणंकृत्वाश्वोभूतेपुनर्विष्णुंसम्पूज्य, सद्यएववाविप्रान्तदभावेकुशवटून्निमन्त्र्यविष्णुंसम्पूज्य एकोदिष्टविधिनाश्राद्धपञ्चकंकरिष्ये इतिसङ्कल्प्यब्रह्मविष्णुशिवयमप्रेतान्स्मरन्विप्रानुपवेश्यप्रेतस्थानेचैकंविष्णुं-स्मरन्नुपवेश्यएकस्मिन्विप्रेविप्राभावेदर्भवटौवाएकोदिष्टविधिनापादप्रक्षालनादितृप्तिप्रश्नान्तंविष्णुरूपप्रेतावाहनपूर्वकंकृत्वा विप्रसमीपेतूर्णींरेखाःकृत्वादर्भास्तरणेऽवनेनिनयंचकृत्वादर्भेषुसव्येनविष्णवे, ब्रह्मणे, शिवाय, सपरिवारायमायचेति-चतुर्भ्यःपिण्डचतुष्टयंदत्त्वाऽपसव्येन 'विष्णुरूपप्रेतामुकगोत्रामुकप्रेतायंतेपिण्ड, इत्येवंपञ्चमंपिण्डंदत्त्वागन्धादिभिरभ्यर्च्यप्रवा हणान्तेविप्राचामनादिश्राद्धशेषसमापनान्तेप्रेतबुद्ध्यातेषुएकस्मैविप्रायवस्त्राभरणादिविशेषतोदत्त्वादर्भवटौवावस्त्रादिसमर्प्य विप्रसत्त्वेविप्रेणप्रेतायतिलाञ्जलिंदापयेत्–' अमुकगोत्रायामुकशर्मणेविष्णुरूपिणेप्रेतायतिलतोयाञ्जलिः' इतिमन्त्रेण ॥ विप्राभावेस्वयंदद्यात् ॥ ततः 'अनेननारायणबलिकर्मणाभगवान् विष्णुरिमममुकप्रेतं-

शुद्धमपापमहंकरोतु ' इतिविप्रान्वाचयेत् ॥ ततःस्नात्वाभुञ्जीतेति ॥ इतिदुर्मरणेऔर्ध्वदेहिकाधिकारार्थं नारायणबलिः ॥ पितृगयायांपिण्डदानेविशेषः–अजातदन्तायेकेचिद्येचगर्भेप्रपीडिताः ॥ तेषामुद्धरणार्थायइमंपिण्डंददाम्यहम ॥१॥ अग्निदग्धाश्चयेकेचिन्नाग्निदग्धास्तथापरे ॥ विद्युच्चौरहतायेचतेभ्यःपिण्डंददाम्यहम् ॥२॥ दावदाहेमृतायेचसिंहव्याघ्रहताश्चये ॥ दंष्ट्रिभिःशृङ्गिभिर्वापितेभ्यःपिं० ॥३॥ उद्बन्धनमृतायेचविषशस्त्रहताश्चये ॥ आत्मापघातिनोयेचतेभ्यः० ॥ ४ ॥ जात्यन्तरसहस्रेणभ्रमन्तिस्वेनकर्मणा ॥ मानुष्यंदुर्लभंयेषांतेभ्यः० ॥५॥ अरण्येवर्त्मनिवने-क्षुधयातृषयाहताः ॥ भूतप्रेतपिशाचेभ्यस्तेभ्यः० ॥६॥ अनेकयातनासंस्थाःप्रेतलोकंचयेगताः॥ तेषामुद्धरणार्थायतेभ्यः० ॥ ७ ॥ रौरवेचान्धतामिस्रेकालसूत्रेचयेमृताः ॥ तेषामुद्धरणार्थायइमंपिण्डंददाम्यहम् ॥ ८ ॥ असंख्ययातनासंस्थैर्येनीतायमशासनैः ॥ तेषामु०इमंपिं० ॥९॥ पशुयोनिगतायेचपक्षिकीटसरीसृपाः ॥ अथवावृक्षयोनिस्थास्तेभ्यःपिं० ॥१०॥ नरकेषुसमस्तेषुयातनासुचयेस्थिताः ॥ तेषा०इमंपिं० ॥११॥ दिव्यन्तरिक्षभूमिस्थाःपितरोबान्धवादयः॥ ।२३७।

१ श्रीतारानाथतर्कवाचस्पतिकृतगयाश्राद्धपद्धतौ–पितॄणांपश्चिमेभागेपितृपिण्डंयथाक्रमम् ॥ मातामहश्वशुरपूर्वंश्चात्मपत्न्यास्तथोत्तरे ॥

मृताअसंस्कृतायेचतेभ्यःपिं० १२॥। येकेचित्प्रेतरूपेणवर्तन्तेपितरोमम ॥ तेसर्वेतृप्तिमायान्तु-
पिण्डदानेनसर्वदा ॥ १३ ॥ मातृगयायांपिण्डदानेविशेषः—गर्भस्थेगमनेदुःखंविसर्गेप्राणसङ्कटे ॥
तस्यचोद्धरणार्थायमातृपिंडंददाम्यहम् ॥ १ ॥ मासिमासिनिषेकाद्यैःशिशुसन्तानदुःखिता ॥
तेषामुद्धरणार्थायमातृपिं० ॥२॥ मासिमासिकृतंकष्टंवेदनाप्रसवेषुच ॥ तेषामु०॥३॥ सम्पूर्णेदश-
मेमासिह्यत्यन्तंमातृपीडनम् ॥ तेषा० ॥४॥ गात्रगङ्गोभवेन्मातुर्मृत्युरेवनसंशयः ॥ तस्यनिष्क्र-
मणार्थायमातृपिं० ॥५॥ यावत्पुत्रोनभवतितावन्मातुश्चशोचनम् ॥ तस्यचोद्धरणार्थायमातृपिं०
॥६॥ शैथिल्यंप्रसवेप्राप्तेमाताविन्दतिदुःसहम् ॥ तस्यनिष्क्रमणार्थायमातृपि० ॥ ७ ॥ पद्भ्यां-
जनयतेपुत्रेजनन्याःपरिवेदना ॥ तस्यनिष्क्रम० ॥ ८ ॥ अल्पाहारकृतामातायावत्पुत्रोऽस्ति
बालकः ॥ तस्यउद्धरणार्थायमातृपिं० ॥ ९ ॥ रात्रौमूत्रपुरीषाभ्यांक्लिश्यतेमातृकुक्षिके ॥ तस्य-
निष्क्रम० ॥१०॥ कटुद्रव्याणिक्वाथांश्चविविधानिचभक्षति ॥ तस्यनिष्क्र० ॥ ११ ॥ क्षुधया
विह्वलेजातेतृप्तिंमाताप्रयच्छति ॥ तस्यनिष्क्र० ॥ १२ ॥ दिवारात्रौचयन्माताआनन्दतिसभ-
र्तृका ॥ तस्यनिष्क्र० ॥१३॥ यमद्वारेमहाघोरेपथिमातुश्चशोचनम् ॥ तस्यनिष्क्रम० ॥ १४ ॥

अन्तकाय०॥वैवस्वताय०॥ कालाय०॥ सर्वभूतक्षयाय०॥ औदुंबराय०॥ दध्नाय०॥ नीलाय०॥
परमेष्ठिने०॥ वृकोदराय०॥चित्राय०॥चित्रगुप्ताय०॥१४॥ मनोजूतिरितिमन्त्रेणप्रतिष्ठा-ॐमनोजूतिर्जु
षता० ॥ इमेसकलशाःविष्णवग्निवायुसूर्यवरुणदेवताः तथाच चतुर्दशयमाः सुप्रतिष्ठिताः वरदा-
भवेयुः ॥ इदमत्रचंदनं॥ पुष्पं ॥ अद्यपूर्वो० अपसव्यंअ०गोत्रायाःअ०प्रेतायाःसूतिकामरणज-
नितदोषोपशान्त्यर्थंसव्यंविष्णवग्निवायुसूर्यवरुणानांतथाचचतुर्दशयमानांपञ्चोपचारैः पूजनमहं-
करिष्ये ॥ विष्णवग्निवायुसूर्यवरुणदेवताभ्यःतथाचचतुर्दशयमेभ्यःचंदनंपुष्पंधूपंदीपंनैवेद्यंफलं-
ताम्बूलंहिरण्यंनमस्कारएवमादिकांपूजांविधाय॥अद्यपूर्वो०अपसव्यंएतद्विष्ण्वादिपञ्चदेवतानां
तथाचचतुर्दशयमानांपूजनोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं॥ अद्यपूर्वो०वि
ष्ण्वादिपञ्चदेवतानांतथाचचतुर्दशयमानांपूजनविधेःसर्वपरिपूर्णमस्तु ॥ अपसव्यं कृतेनानेनवि-
ष्ण्वादिपञ्चदेवतानांतथाचचतुर्दयमानांपूजनेन अ० गोत्रायाः अ० प्रेतायाः प्रेतत्वनिवृत्तिःअ-
सद्गति०सद्गतिप्रा०अक्षयातृप्तिःयमयातना भयकष्टनिवृत्तिः सूतिकामरणजनितदोषोपशान्तिः॥
सव्यं । अग्रेतनपञ्चदेवतानांतथाचचतुर्दशयमानांसूक्तजपयोग्यतावाप्तिः ॥ सूक्तजपार्थंपञ्चब्राह्मणानांवरणम् ॥

विष्णुंसूक्तम् ॥ अग्निंसूक्तम् ॥ वायुंसूक्तम् ॥ सूर्यंसूक्तम् ॥ वरुणसू० ॥ यमंसूक्तम् ॥ ६ ॥
एवं सूक्तानिजप्त्वा ॥ एतद्विष्णवादिपञ्चदेवताभ्यःतथाचचतुर्दशयमेभ्यःप्रत्येकंसूक्तजपंस० ॥
अपस०यंएतद्विष्णवादिपञ्चदेवतानांतथाचचतुर्दशयमानांसूक्तजपोपार्जितंपुण्यंअ० गोत्रायैअ०
प्रेतायैउपतिष्ठतु ॥ सव्यं ॥ अद्यपूर्वो०अपसव्यंकृतेनानेनविष्णवादिपञ्चदेवतानांतथाच चतु-
र्दशयमानांसूक्तजपेनअ० गोत्रायाअ० प्रेतायाप्रेतत्वनिवृत्तिःअसद्भति० सद्गति० ॥ सूतिका-
मरणजनितदोषोपशान्तिः ॥ सव्यं ॥ अग्रेतनहोमयोग्यतावाप्तिः॥ ततःआचार्यःस्थंडिलेपञ्चभूसंस्कारपूर्वकम-
ग्निंप्रतिष्ठाप्यदक्षिणतोब्रह्मासनादिपर्युक्षणान्तंकृत्वाप्रजापतिंमनसाध्यात्वाजुहुयात्॥ मनसा—ॐप्रजापतयेस्वाहाइदं
प्रजापतयेनमम ॥ ॐइन्द्राय०इदंइ० ॥ ॐअग्नये०इदंअ० ॥ ॐसोमाय०इदंसो० ॥४॥ ततो-
दिक्पालपूजनम् ॥ पूर्वेइन्द्रायनमइत्यादि ॥ तदेतद्दचा०अर्चंति ॥ वरदनामानंवह्निंआवाहयामि
सर्वोपचारार्थेगंधंपुष्पंस० ॥ विष्ण्वादिपञ्चदेवतानांतथाचचतुर्दशयमानांउक्तमन्त्रैस्तथाचनमस्तेइत्यादिषोडशम-

---

१ ॐसहस्रशीर्षा० १६ ॥ २ ॐअस्याजरास:० १७ ॥ ३ ॐपीवोऽअन्ना० १२ ॥ ४ विभ्राडितिसप्तदश १७ ॥
५ ॐइमग्मे० ४ ॥ वरुणस्योत्तं० ॥ १ ॥६ ॐअपेतोष्यायोयमसूक्तम् ॥

 न्त्रैराज्यहोमःतद्यथा ॥ ॐविष्णोरराटमसि० इदंविष्णवेनमम ॥ यथादैवतंत्यागः ॥ ॐत्वन्नोऽअग्ने० 
इदमग्नये० ॥ ॐआनोनियुद्भिः०इदंवा० ॥ ॐआकृष्णेन०इदंसूर्याय० ॥ ॐतत्त्वायामि०
 इदंवरुणाय० ॥ ततःचतुर्दशयमानांनाममन्त्रैर्होमः ॥ ॐयमायस्वाहाइदंयमायनमम ॥ १४ ॥ ॐ
 नमस्ते०इदंरुद्राय० ॥ एवंसर्वत्र ॥ यातेरुद्र० ॥ यामिषुं० ॥ शिवेन० अध्यवो० ॥ असौय-
स्ताम्रो० ॥ असौयो० ॥ नमोस्तुनी० ॥ प्रमुंच० ॥ विज्यंधनु०॥ यातेहे० ॥ परिते० ॥ अव-
तत्य०॥ नमस्तआ० ॥ मानो० ॥ मानस्तोके० स्वाहाइदंरुद्रायनमम ॥ १६ ॥ इति आज्याहु-
तयः ॥ एभिर्मन्त्रैरेवचरुहोमः ॥ एवंचरुहोमंकृत्वाविष्णोरराटमसीतिमन्त्रेणाष्टोत्तरशततिलाहुतयः ॥ ॐविष्णोररा-
टमसि०॥१०८॥ततःस्विष्टकृद्धोमः ॥ अथनवाहुतयः ॥ ॐभूःस्वाहाइदमग्नयेनमम,इत्यादि ॥९॥ पूर्णाहुतिः
ॐस्वाहाप्राणेभ्यस्साधिपतिकेभ्यः ॥ पृथिव्यैस्वाहाग्नयेस्वाहान्तरिक्षायस्वाहावायवेस्वाहा॥
दिवेस्वाहासूर्य्यायस्वाहा ॥ १ ॥ दिग्भ्यःस्वाहाचन्द्रायस्वाहानक्षत्रेभ्यःस्वाहाद्भ्यःस्वाहाव- 
रुणायस्वाहा ॥ नाभ्यैस्वाहापूतायस्वाहा ॥ २ ॥ वाचेस्वाहाप्राणायस्वाहाप्राणायस्वाहा॥
चक्षुषेस्वाहाचक्षुषेस्वाहाश्रोत्रायस्वाहाश्रोत्रायस्वाहा ॥ ३ ॥ होमसङ्कल्पः—आधारावाज्यभा-

गादिपूर्णाहुतिपर्यन्तंयद्द्रव्यंयावद्यावत्संख्याकंयेनयेनमन्त्रेणयस्यैयस्यैदेवतायैहुतंसूतिकाम-
रणजनितदुर्मृत्युपापविनाशार्थंसासादेवताप्रीयताम् ॥ संस्रवप्राशनम् ॥ पवित्राभ्यांमार्जनम्॥
पवित्रप्रतिपत्तिः ॥ बर्हिर्होमः ॥ प्रणीताविमोकः ॥ ब्रह्मणेपूर्णपात्रं ॥ आचार्यायदक्षिणांतेन-
कर्माधीशःप्रीयताम् ॥ अपसव्यं ॥ इदंहोमोपार्जितंपुण्यंअ०गोत्रायैअ०प्रेतायैउपतिष्ठतु ॥
सव्यं ॥ अद्यपूर्वो० विष्णवादिपञ्चदेवतानांतथाचचतुर्दशयमानांहोमविधेःसर्वंपरिपूर्णमस्तु ॥
अपसव्यं ॥ कृतेनानेनसूतिकाविधानहोमाख्येनअ०गोत्रायाः अ०प्रेतायाःप्रेतत्वनिवृत्तिःअस-
द्गति०सद्गति०सूतिकामरणदोषोपशान्तिः ॥ सव्यं ॥ अग्रेतनविष्णवादिपञ्चदेवतानांतथाचचतुर्दशयमानां
साङ्कल्पश्राद्धयोग्यतावाप्तिः ॥ स्नानं ॥ आचम्यप्राणानायम्य ॥ पवित्रधारणम् ॥ विष्णुंनमस्कृत्य ॥ विष्णवा-
दिपञ्चदेवताभ्यः तथाचचतुर्दशयमेभ्यः पाद्यंपादावनेजनंपादप्रक्षालनंएषवोर्घः इदमत्रचंदनंपु-
ष्पं ॥ पादार्घोदकनिक्षेपः ॥ स्वपादप्रक्षालनं ॥ आचमनं ॥ दिग्बन्धः–ऐन्द्र्यांनारायणोरक्षे० ॥
अपवित्रःपवित्रोवा० ॥ यद्देवेतित्रिभिर्मन्त्रैःतिलोदककरणम्–ॐयद्देवा० ॥ यदिदिवा०यदिजाग्रद्य० ॥
॥३॥ उपहारप्रोक्षणम्–विष्णवादिपञ्चदेवतानांतथाचचतुर्दशयमानांसाङ्कल्पिकश्राद्धोपहाराणांपवि-

त्रतास्तु ॥ देशकालपाकपा०स्तु ॥ सर्वोपहारा०भवन्तु ॥ अद्यपूर्वो० अपसव्यंअ० गोत्रायाः
अ०प्रेतायाःसूतिकामरणजनितदोषोपशान्त्यर्थं ॥ सव्यं ॥ विष्ण्वादिपञ्चदेवतानांतथाचचतु-
 र्दशयमानांश्राद्धमहंकरिष्ये ॥ विष्ण्वादिपञ्चदेवतानांतथाचचतुर्दशयमानामासनम् ॥ अर्च-
नम् ॥ अस्यार्चनविधे० तास्तु ॥ इदमर्चितंवोज्योतिःसूर्यायपुष्पं ॥ शेषोपचाराःसम्पूर्णावि-
 धिवद्भवन्तु ॥ आचमनं ॥ विष्ण्वादिपञ्चदेवेभ्यःतथाचचतुर्दशयमेभ्यःभोजनम् ॥ यथासंभवं
ब्राह्मणान्वाभोजयिष्येतेनविष्ण्वादिपञ्चदेवतास्तथाचचतुर्दशयमाःप्रीयन्ताम् ॥ फलमुखवा-
सताम्बूलंहिरण्यम् ॥ ततःविष्ण्वादिपञ्चदेवताभ्योदानसङ्कल्पः—विष्णवे शय्या ॥ अग्नये सुवर्णम् ॥ वायवे
गोदानं ॥ सूर्याय अश्वदानं ॥ वरुणाय वरुणपात्रदानं ॥ अपसव्यं अ०गोत्रायाः अ० प्रेतायाः सूतिकाम-
रणजनितदोषोपशान्त्यर्थंसुवर्णरजतताम्रपित्तलकांस्यलोहसीसादिधातुनांत्रयोदशकलशाः दे- 
याः ॥ धात्वसंभवे मृन्मयाश्चदेयाः ॥ ततो नवविधंधान्यदानम्—व्रीहि, यव, माष, तिल, मुद्ग, प्रियंगु, गोधूम, खल्व,
चणकान्नमिति ॥ सव्यं ॥ यस्यब्राह्मणस्य यस्मिन्कलशेवरणं तस्मै तं कलशं तद्दानं च दद्यात् ॥ ततः आचार्यः तैः
ब्राह्मणैःसह स्वस्तिवाचनंविधाय उत्तिष्ठब्रह्मणस्पते इतिमन्त्रेणतान्कलशानुत्थाप्यैतै रेवजलैरुपविष्टंयजमानमभिषिञ्चेत् ॥

ॐउत्तिष्ठब्रह्मणस्पतेदेवयन्तस्त्वेमहे ॥ उपप्रयन्तुसुदानवऽइन्द्रप्राशूर्भवासचा ॥१॥ अभिषेकमन्त्राः—
ॐआपोहिष्ठा० ॥ योवः शिवतमो० ॥ तस्माऽअरङ्गमा० ॥ ३ ॥ इमम्मेतिनवभिर्मन्त्रैर्वरुणसूक्तम् ॥
ॐइमम्मे० ॥ तत्त्वायामि० ॥ त्वन्नोऽअग्ने० ॥ सत्वन्नोऽअग्ने० ॥ वरुणस्योत्तम्० ॥ यऽइन्द्रऽ-
इन्द्रियन्दधुःसविताबरुणोभर्गः॥ ससुत्रामाहविष्पतिर्यजमानायसश्चत ॥ सविताबरुणोदध-
द्यजमानायदाशुषे ॥ आदत्तनमुचेर्वसुसुत्रामाबलमिन्द्रियम् ॥ वरुणःक्षत्रमिन्द्रियम्भगेनस-
विताश्रियम् ॥ सुत्रामायशसाबलन्दधानायज्ञमाशत ॥ वरुणःप्राविताभुवन्मित्रोविश्वाभिरू-
तिभिः॥ करतान्नःसुराधसः ॥ ९ ॥ पुनन्तुमेतिनव ॥ पुनन्तुमापितरः० ॥ पुनन्तुमापितामहाः०॥
अग्नऽआयूंषि०॥ पुनन्तुमादेवजनाः०॥ पवित्रेणपुनीहिमा०॥ यत्तेपवित्रमर्चिं०॥ पवमानः-
सो०॥ उभाभ्यान्देव०॥ वैश्वदेवीपुनती०॥ ९ ॥ सहस्राक्षमित्यादिपंच ॥ पालाशंभवति०॥ अमृता-
भिषेकोस्तु ॥ आशीर्वादःॐ विश्वानिदेवसवित० ॥ अग्निविसर्जनम्—ॐइदःहवि:० ॥ तुलसीदलंगृहीत्वा-
यस्यस्मृत्येति विष्णुंनमस्कृत्य ॥ अपसव्यं एतत्सूतिकाविधानोपार्जितंपुण्यंगोत्रायैप्रेतायैउपतिष्ठतु ॥

सव्यं ॥ अथजलंगृहीत्वा–कृतेनानेनसूतिकाविधानेनगोत्रायाः प्रेतायाः प्रेतत्वनिवृत्तिः असद्गति० सद्गतिप्रा० अक्षयातृप्तिः यमयातनाभयकष्टनिवृत्तिः सूतिकामरणजनितदोषोपशांतिः ॥ सव्यं॥ अग्रे एकादशाहकर्मयोग्यतावाप्तिः ॥ इतिसूतिकारजस्वलाविधानम् ॥

अथ पञ्चकविधानम् ॥ कर्मार्थंउपहारान्संपाद्यतीर्थेगत्वाभूमीशोधनंविधायउपहारान्संस्थाप्ययथाविधिस्नात्वातीर्थप्रयोगंकृत्वाशुद्धवस्त्रेपरिधायदेहशुद्धिंसत्येशस्थापनादिपुरश्चरणाङ्गश्राद्धान्तंकृत्वाप्रायश्चित्तंचरेत् ॥ ततआचार्यः कर्मार्थंहोमार्थंचस्थण्डिलद्वयंविरच्यदक्षिणस्थण्डिलेपञ्चकलशान्संस्थाप्यतेषामुपरिपञ्चनक्षत्रदेवतानांसुवर्णमयींमूर्तिंकुशमयींवाअग्न्युत्तारणपूर्वकंस्थापयेत् ॥ तत्पार्श्वेकृष्णवस्त्रोपरिचतुर्दशयमानांस्थापनम् ॥ ईशान्येअघोरमृत्युञ्जयस्थापनम् ॥

प्रयोगः ॥ आचम्यप्राणानायम्य ॥ कुशपवित्रधारणम् ॥ शिखाबन्धनम् ॥ विष्णुस्मरणम् ॥ यज्ञोपवीतधारणम् ॥ अद्यपूर्वो० तिथौअपसव्यंअ० गोत्रस्यअ० प्रेतस्य ( गोत्रायाःप्रेतायाः ) पञ्चकेमरणजनितदोषोपशान्त्यर्थंसव्यंममग्रहेसपरिवाराणांआयुरारोग्यसुखश्रीप्राप्त्यर्थंधनिष्ठादिपञ्चनक्षत्राणांसकल

---

१ अत्रणान्कलशान्दिक्षुचतुरोविन्यसेत्क्रमात् ॥ कलशंपञ्चमंमध्येस्थापयेद्विधिपूर्वकम् ॥ उच्चार्यवारुणंमन्त्रंपूरयेत्तीर्थवारिणा ॥ मध्येसर्वौषधीः क्षिप्त्वामृद्दूर्वापञ्चपल्लवान् ॥ हिरण्यंफलसंयुक्तंवस्त्रेणावेष्टयेत्ततः ॥ कलशोपरिन्यसेन्मूर्तीःपञ्चस्वर्णमयीस्तथा ॥ प्रतिष्ठापूजनंकार्यंपञ्चसूक्तंजपेत्ततः ॥

शानांआवाहनस्थापनप्रतिष्ठांकरिष्ये ॥ तदङ्गत्वेनपञ्चोपचारैःविष्णुंसम्पूज्यभूरसीत्यादिभिर्मन्त्रैःकलशान्सं-
स्थाप्यनक्षत्रदेवताःस्थापयेत् ॥ हस्तेअक्षतानादायपूर्वकलशे—वसोःपवित्रमितिमन्त्रेणधनिष्ठानक्षत्राधिष्ठातृदेवतास्था-
पनम् ॥ ॐवसोःपवित्रमसिशतधारंवसोःपवित्रमसिसहस्रधारम् ॥ देवस्त्वासवितापुनातुव-
सोःपवित्रेणशतधारेणसुप्वाकामधुक्षः ॥ १ ॥ ॐभूर्भुवःस्वःधनिष्ठाधिष्ठातृवसुभ्योनमःधनि-
ष्ठाधिष्ठातृवसूनावाहयामिस्थापयामि ॥ भोधनिष्ठाधिष्ठातरोवसवइहागच्छतइहतिष्ठत ॥ दक्षि-
णकलशे—वरुणस्योतम्भनमसीतिमन्त्रेणशततारकाधिष्ठातृदेवतास्थानम् ॥ ॐवरुणस्योत्तम्भनमसि० ॥ २ ॥
ॐशततारकाधिष्ठातृवरुणायनमःवरुणंआ० स्था० ॥ भोशततारकाधिष्ठातर्वरुणइहागच्छइह-
तिष्ठ ॥ पश्चिमकलशे—उतनोहिर्बुध्न्यइतिमन्त्रेणपूर्वाभाद्रपदाधिष्ठात्रजैकपादेवतास्थापनम् ॥ ॐउतनोहिर्बु-
ध्न्यः शृणोत्वजऽएकपात्पृथिवीसमुद्रः ॥ विश्वेदेवाऽऋतावृधोहुवानास्तुतामन्त्राःकविशस्ता-
ऽअवन्तु ॥ ३ ॥ ॐपूर्वाभाद्रपदाधिष्ठात्रजैकपाद्देवतायैनमः पूर्वाभाद्रपदाधिष्ठात्रजैकपाद्देव-
ताम् आ० स्था० ॥ भो पूर्वाभाद्रपदाधिष्ठातरजैकपाद्देवते इहा० इ० ॥ उत्तरकलशे—

---

१ वसवोवरुणश्चैवअजैकपात्तृतीयकः ॥ अहिर्बुध्न्यश्चतुर्थश्चपूषावैपञ्चमस्तथा ॥ यमायधर्मराजायमृत्यवेचान्तकायच ॥ वैवस्व-
तायकालायसर्वभूतक्षयायच ॥ औदुम्बरायदध्नायनीलायपरमेष्ठिने ॥ वृकोदरायचित्रायचित्रगुप्तायवैनमः ॥ अघोररुद्रमन्त्रैश्चनिर्वापयेत्क्रमेणच ॥

शिवोनामाइतिमन्त्रेणउत्तराभाद्रपदाधिष्ठात्रहिर्बुध्न्यस्थापनम् ॥ ॐशिवोनामा० ॥ ४ ॥ ॐउत्तराभाद्रपदाधिष्ठात्रेहिर्बुध्न्यायनमः उत्तराभाद्रपदधिष्ठात्रहिर्बुध्न्यं आ० स्था०॥ भो उत्तराभाद्रपदाधिष्ठात्रहिर्बुध्न्य इहा० इ० ॥ मध्यकलशे—पूषंतवव्रतेइतिमन्त्रेणरेवतीनक्षत्राधिष्ठातृपूषदेवस्थापनम् ॥ ॐपूषन्तवव्रतेवयन्नरिष्येमकदाचन ॥ स्तोतारस्तऽइहस्म्मसि ॥ ५ ॥ ॐरेवतीनक्षत्राधिष्ठात्रेपूष्णेनमः रेवतीनक्षत्राधिष्ठातृपूषणं आ० स्था० ॥ ततः नाममन्त्रेण चतुर्दशयमानांस्थापनम् ॥ ॐयमायनमः यमं आ० स्था० ॥ एवं सर्वत्र ॥ ॐधर्मराजाय० ॥ ॐमृत्यवे० ॥ ॐअन्तकाय० ॥ वैवस्वताय० ॥ कालाय० ॥ सर्वभूतक्षयाय० ॥ औदुंबराय० ॥ दध्नाय० ॥ नीलाय० ॥ परमेष्ठिने० ॥ वृकोदराय० ॥ चित्राय० ॥ चित्रगुप्ताय० ॥ १४ ॥ ईशान्ये—"यातेरुद्रशिवा"इतिमन्त्रेणमृत्युञ्जयस्थापनम् ॥ ॐयातेरुद्रशिवातनू०॥१॥ ॐमृत्युञ्जयायनमः मृत्युञ्जयं आ० स्था० ॥ ततः पञ्चनक्षत्राणां सुवर्णमूर्तीनां अग्न्युत्तारणपूर्वकं प्राणप्रतिष्ठांकृत्वा तेषामुपरिनिधायमनोजूतिरितिमन्त्रेण प्रतिष्ठां कुर्यात् ॥ ॐमनोजूति० ॥ १ ॥ धनिष्ठाद्यधिष्ठातृवस्वादिदेवताः सुप्रतिष्ठिताःवरदाःभवत ॥ इदमन्त्रचंदनंपुष्पम् ॥अद्यपूर्वो०अपसव्यं अ०गोत्रस्य अ०प्रेतस्य (गोत्रायाःप्रेतायाः) पञ्चकजनितदुमरणदो-

षोपशान्त्यर्थं सव्यं धनिष्ठादिपञ्चनक्षत्राधिष्ठातृदेवानां तथाचतुर्दशयमानांपूजनमहंकरिष्ये ॥
वस्वादिदेवताभ्यःतथाचचतुर्दशयमेभ्यःचंदनं समर्पयामि॥ एवंपञ्चोपचारैःपूजयेत् ॥ पञ्चनालिकेर-
समर्पणम् ॥ दक्षिणासहितंपञ्चधान्यंस०॥एवंपूजांसमाप्य ॥ अपसव्यं जलंगृहीत्वा-धनिष्ठादिपञ्चनक्ष-
त्राणांतथाच चतुर्दशयमानांपञ्चोपचारैःपूजनोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु॥ स-
व्यं ॥ अद्यपूर्वो०धनिष्ठादिपञ्चनक्षत्राणांतथाचचतुर्दशयमानांपञ्चोपचारैः पूजनविधेः सर्वपरि-
पू०॥अपसव्यं ॥ कृतेनानेनधनिष्ठादिपञ्चनक्षत्राणांतथाचचतुर्दशयमानांपूजनेनअ०गोत्रस्यअ०
प्रेतस्यप्रेतत्वनिवृत्तिः॥असद्गतिमृ०सद्गतिप्रा०अक्षयातृ०यममार्गे०पञ्चकेषुमरणजनितदोषोपशा-
न्तिःसव्यं॥अप्रेतनधनिष्ठादिपञ्चनक्षत्राधिष्ठातृदेवतानांसूक्तजपयोग्यतावाप्तिः॥सूक्तजपार्थंहोमार्थंपञ्चब्राह्मणानांवरणम्॥
तेभ्यःअर्चनपूर्वकंसहिरण्यकुण्डलमुद्रिकावस्त्रादिदद्यात्॥ तेचपञ्चकलशेषुतत्तद्देवतानांजपंकुर्युः॥पूर्वकलशे—राक्षोघ्नसूक्तम् ॥
३० च. ॐकृणुष्वपाजः० ॥५॥ दक्षिणकलशे—अपेतोध्यायः ॥ पश्चिमकलशे—आशुः० ॥ उत्तरक-
लशे—शांतिसूक्तम् ॥ मध्यकलशे—पुरुषसूक्तम् ॥ ईशानकलशे—साङ्गरुद्रजपः ॥ अद्यपूर्वो०
अपसव्यं ॥ धनिष्ठादिपञ्चनक्षत्राणांसूक्तजपोपार्जितंपुण्यंअ०गोत्रायअ०प्रेताय (गोत्रायैप्रेतायै)

उपतिष्ठतु ॥ स०्यं ॥ अद्यपूर्वो० धनिष्ठादिपञ्चनक्षत्राणांसूक्तजपविधेःसर्वंपरिपूर्णमस्तु ॥
अपसव्यं ॥ कृतेनानेनधनिष्ठादिपञ्चनक्षत्राणांसूक्तजपेनअ० गोत्रस्यअ० प्रेतस्यप्रेतत्वनिवृत्तिः
असद्गति० सद्गतिप्रा० अक्षयातृ० यममार्गे० पञ्चकजनितदुर्मरणोपशान्तिः ॥ स०्यं ॥ अद्येतन
प्रेतवाहादिपञ्चदेवतानांश्राद्धयोग्यतावाप्तिः॥स्नानं॥ आचम्यप्राणानायम्य ॥ शिखाबन्धनम् ॥
विष्णुस्मरणम् ॥ अद्यपूर्वो०॥ अपसव्यं ॥ प्रेतवाहादिपञ्चदेवतानांश्राद्धप्रारंभांगनिमित्तंसव्यं
विष्णोःपञ्चोपचारैःपूजनमहंकरिष्ये ॥ इतिसङ्कल्प्यपञ्चोपचारैःपूजयेत् ॥ ततःकुशमयान्पञ्चघटान्संस्थाप्य ॥
अपसव्यं ॥ प्रेतवाहपाद्यंते ॥ प्रेतसखपाद्यंते ॥ प्रेतपपा० ॥ प्रेतभूमिपपा० ॥ प्रेतहर्तःपा०
॥ ५ ॥ पाद्यंपादावनेजनंपादप्रक्षालनंएषवोर्घःइदमत्रचंदनंपुष्पम् ॥ पादार्घोदकनिक्षेपः ॥
स्वपादप्रक्षालनं ॥ स०्यं ॥ आचमनं ॥ दिग्बन्धः—ऐन्द्र्यांनारायणोरक्षेत्० ॥ अपवित्रःपवि-
त्रोवा० ॥ यद्देवेतिकर्मार्थंतिलोदककरणम् ॥ यद्देवेतितिसृणांकु० तिलोदककरणेवि० ॥ ॐयद्देवा० ॥

१ इदंचप्रेतवाहादिपञ्चदेवतानांश्राद्धंपिण्डप्रदानंचकासुचिल्लिखितपद्धतिषुविद्यतेकासुचिन्नविद्यते एवंचकृत्वाविमुग्धावयम् " अपितु" एतद्ग्रंथानुसारिभिर्विद्वद्भिरन्यैःशिष्टैश्चसंमतत्वादस्माभिर्लिखित्वामुद्रापितमिति ॥

यदिदिवा० ॥ यदिजाग्रद० ॥ ३ ॥ इतितिलोदकंविधायपाकप्रोक्षणंकुर्यात् ॥ अपसव्यं ॥ उदक्यादि
दृष्टिदोष० ॥ सव्यं ॥ देशकालपाकपात्रद्र०शुचयोभवन्तु ॥ अद्यपूर्वो०अपसव्यंअ०गोत्रस्य
अ०प्रेतस्यपञ्चकमरणजनितदोषोपशान्त्यर्थंप्रेतवाहादिपञ्चदेवतानांएकतन्त्रेणश्राद्धंकरिष्ये ॥
कुशानादाय ॥ प्रेतवाहादिपञ्चदेवतानामासनमिदन्ते ॥ प्रेतवाहादिपञ्चदेवेभ्यःअर्चनमिदन्ते॥
अस्यार्चनविधेःसर्वंप०स्तु ॥ सव्यं ॥ प्रेतवाहादिपञ्चदेवेभ्यःप्रत्येकंनैवेद्यमात्रभोजनमिदन्ते ॥
मुखवासताम्बूलंहिरण्यमिदन्ते ॥ अपसव्यं ॥ कुशानास्तीर्यतिलोदकैर्भूमिमासिंच्य ॥ अवनेजनं ॥ पिण्ड-
दानम् ॥ प्रेतवाहपिण्डस्ते ॥ प्रेतसखपिण्डस्ते ॥ प्रेतपपिण्डस्ते ॥ प्रेतभूमिपपिं०प्रेतहर्तःपिं०
॥५॥ पिण्डेप्रत्यवनेजनम् ॥ सूत्रवस्त्राच्छादनम् ॥ हस्तप्रक्षालनम् ॥ सव्यं ॥ आचमनं ॥
अद्यपूर्वो०पिण्डपूजनंकरिष्ये ॥ पिण्डेचंदनंपुष्पंधूपंदीपंनैवेद्यंफलताम्बूलंसहिरण्यमिदन्ते ॥
अनेनपिण्डपूजनविधेःसर्वंपरि० ॥ पञ्चब्राह्मणानांभोजनम् ॥ दक्षिणादानम् ॥ अपसव्यं ॥ एत-
त्प्रेतवाहादिपञ्चदेवतानांश्राद्धोपार्जितंपुण्यंअ०गोत्रायअ०प्रेतायउपतिष्ठतु ॥ सव्यं ॥ अद्य-
पूर्वो०प्रेतवाहादिपञ्चदेवतानांश्राद्धविधेःसर्वंपरि० ॥ अपसव्यं ॥ कृतेनानेनपञ्चदेवतानांश्रा-

द्धेनअ०गोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्तिःअसद्गतिमु०सद्गतिप्रा० अक्षयातृ० ॥ यममार्गेभय० ॥ धनिष्ठादिपञ्चनक्षत्रमरणजनितदोषोपशान्तिः ॥ स०यं ॥ अग्रेतनधनिष्ठादिपञ्चनक्षत्राणांतथाचचतुर्दशयमानांहोमयोग्यतावाप्तिः ॥ भद्रंकर्णेतिमन्त्रेणपिण्डविसर्जनम् ॥ ॐभद्रंकर्णेभिः ॥ १ ॥ स्नानं ॥ आचम्यप्राणानायम्य ॥ ततःआचार्यःस्थंडिलेपञ्चभूसंस्कारान्कृत्वा ॥ दक्षिणतोब्रह्मासनाद्याघाराज्यभागान्तंकृत्वाज्यहोमः ॥ ततश्चक्षुषि ॐप्रजापतयेस्वाहाइदंप्रजापतयेनमम ॥ ॐइन्द्रायस्वाहाइदंइन्द्राय० ॥ ॐअग्नयेस्वाहाइदंअ० ॥ सोमायस्वाहाइदंसो० ॥ ४ ॥ अक्षतानादायदिक्पालान्पूजयेत् ॥ पूर्वेइन्द्रायनमः ॥ एवंनाममन्त्रैःपूजनम् ॥ अग्निपूजनम् ॥ ॐतदेतदृचाभ्युक्तं० ॥ वरदनाम्नेवैश्वानरायनमः॥ आवाहयामिस्थापयामि ॥ इदमत्रगंधंपुष्पंस० ॥ अग्नेर्वहिःपूजनम् ॥ द्रव्यत्यागसंकल्पः—इदंसंपादितं चर्वादिहवनीयद्रव्यंयायायक्ष्यमाणदेवताः स्ताभ्यः स्ताभ्यःपरित्यक्तंनमम ॥ यथादैवतमस्तु ॥

होमः ॥ चत्वारोःब्राह्मणाः पालाशवृन्ताज्यचरुतिलैर्द्रव्यैःप्रत्येकमष्टोत्तरशतमष्टाविंशतिमष्टावेकांवा " वसुभ्योनमः " इत्यादिप्रत्येकंनाममन्त्रैर्वेदोक्तमन्त्रैर्वाआहुतिंदद्युः ॥ ( नाममन्त्रैर्यथा—ॐवसुभ्यःस्वाहाइदंवसुभ्योनमम ॥ इत्यादि० ॥ ) तत्रमन्त्रः—ॐवसोःपवित्रंमसिशतधारं०संधुक्षः स्वाहाइदंधनिष्ठाधिष्ठातृवसुभ्योन-

मम ॥ १ ॥ ॐव्वरुणस्योत्तंभनमसि० सीदस्वाहाइदंशततारकाधिष्ठातृवरुणायनमम ॥ २ ॥
ॐउतनोहिर्बुध्न्यः शृणोत्वजऽएकपात्पृथिवीसमुद्रः ॥ विश्वेदेवाऽऋतावृधोहुवानास्तुताना-
मन्त्राःकविशस्ताऽअवन्तुस्वाहाइदंपूर्वाभाद्रपदाधिष्ठात्रजैकपदेनमम ॥ ३ ॥ ॐशिवोनामा०
वीर्य्यायस्वाहाइदंउत्तराभाद्रपदाधिष्ठात्राहिर्बुध्न्यायनमम ॥ ४ ॥ ॐपूषन्तवव्व्रतेवयन्नरिष्ये-
मकदाचन ॥ स्तोतारस्तऽइहस्मसिस्वाहाइदंरेवत्यधिष्ठातृपूष्णेनमम ॥ ५ ॥ ततःचतुर्दशय-
मानांनाममन्त्रैर्होमः ॥ ॐयमायस्वाहाइदंयमायनमम ॥ एवंसर्वत्र ॥ ॐधर्मराजाय० इदं० ॥
ॐमृत्यवे०इदं० ॥ ॐअन्तकाय०इदं० ॥ ॐवैवस्वताय०इदं० ॥ ॐकालाय०इदं० ॥ ॐसर्व
भूतक्षयाय० इदं० ॥ ॐऔदुम्बराय० इदं० ॥ ॐदध्नाय० इदं० ॥ ॐनीलाय०इदं० ॥
ॐपरमेष्ठिने० इदं० ॥ ॐवृकोदराय० इदं० ॥ ॐचित्राय० इदं० ॥ ॐचित्रगुप्ताय० इदं०
॥१५॥ चत्वारोब्राह्मणायातेरुद्रशिवेतिमन्त्रेणपालाशवृंताज्यचरुतिलैःप्रतिद्रव्यैःसहस्राहुतिभिर्होमंकुर्युः ॥ ॐयातेरुद्र
शिवातनू० शीहिस्वाहा ॥ (सहस्राहुतयः १०००) ततःस्विष्टकृद्धोमः ॥ ॐअग्नयेस्विष्टकृतेस्वाहा-
इदं० ॥ नवाहुतयः ॥ ॐभूः स्वाहा इदम० ॥ ॐभुवः स्वाहा इदं० ॥ ॐस्वः स्वा०इदं सू०॥

ॐत्वन्नोऽअग्ने० इदम० ॥ ॐसत्वन्नो० धिस्वाहा इदम०॥ ॐअयाश्चाग्नेस्य० यज ँ स्वाहा
इदम० ॥ ॐयेतेशतं०स्वर्क्काःस्वाहा इदंवरुणाय० ॥ ॐउदुत्तमंवरुण०मस्वाहाइदंवरुणाय०॥
ॐप्रजापतयेस्वाहाइदंप्र०॥९॥इन्द्रादिदशदिक्पालपूजनंबलिदानंच॥यातेरुद्रशिवेति अघोरमन्त्रेणवापूर्णाहुतिहोमः
॥ ॐयातेरुद्रशिवातनू० शीहिस्वाहा ॥१॥ संस्रवप्राशनादिप्रणीताविमोकान्तंकृत्वा ॥ ब्रह्मणेपूर्णपात्रं ॥
आचार्यायदक्षिणां ॥ नानानामगोत्रेभ्यः ब्राह्मणेभ्यः भूयसीं० ॥ अपसव्यं एतद्धनिष्ठादिपञ्च-
देवतानां तथाच चतुर्दशयमानां होमोपार्जितंपुण्यं अ०गोत्राय अ०प्रेताय उपतिष्ठतु॥ सव्यं॥
अद्यपूर्वो० धनिष्ठादि पञ्च० तथाचचतुर्दशयमानांहोमविधेःसर्वंपरि० ॥ अपसव्यं कृतेनानेन
धनिष्ठादि पञ्च० तथाचचतुर्दशयमानांहोमेन अ०गोत्रस्य अ०प्रेतस्यप्रेतत्वनिवृत्तिःअसद्गति०
सद्गतिप्रा० अक्षयातृ० यममार्गेभय०त्तिः ॥ पञ्चकमरणजनितदोषोपशान्तिः ॥ सव्यं ॥
अग्रेतनधनिष्ठादिपञ्च० तथाचचतुर्दशयमानांसाङ्कल्पिकश्राद्धयोग्यतावाप्तिः ॥ स्नानं ॥ आचम्यप्राणानायम्य ॥ विष्णु-
स्मरणम् ॥ अद्यपूर्वो० अपसव्यंधनिष्ठादिपञ्चनक्षत्राणांतथाचचतुर्दशयमानांसाङ्कल्पिकश्राद्धा-
ङ्गीभूतांसव्यंनिष्णोःपञ्चोपचारैःपूजांकरिष्ये॥ विष्णवेनमः इतिनाममन्त्रेणपञ्चोपचारैः पूजनं विधाय ॥

अपसव्यंधनिष्ठादिपञ्चन० तथाचचतुर्दशयमानां पाद्यंपादावनेजनंपादप्रक्षालनंएषवोर्घः इद-
मत्रचंदनंपुष्पं ॥ पादार्घोदकनिक्षेपः स्वपादप्रक्षालनं ॥ आचमनं ॥ दिग्बन्धः—ऐन्द्र्यांनारायणो
रक्षेत्० ॥ अपवित्रः पवित्रेतिजलैःपवित्रंकृत्वायदेवेतितिलोदकंविधायपाकप्रोक्षणंकुर्यात् ॥ अद्यपूर्वो० अपसव्यं
धनिष्ठादिपञ्चन० तथाचचतुर्दशयमानांएकतन्त्रेणसांकल्पिकविधिनाश्राद्धमहंकरिष्ये ॥ धनि-
ष्ठादिपञ्चन० तथाचचतुर्दशयमानामासनमिदन्ते ॥ धनिष्ठादिपञ्चनक्षत्रेभ्यः तथाचचतुर्दशय-
मेभ्यः अर्चनमिदन्ते ॥ अस्यार्चनविधेः सर्वपरि० ॥ षड्ब्राह्मणभोजनसंकल्पंकृत्वास्थापितदेवताभ्योदान-
सङ्कल्पः ॥ धनिष्ठायैगोदानम् ॥ अद्यपूर्वो०अपसव्यं धनिष्ठादिपञ्चनक्षत्रमरणजनितदोषोपशान्त्यर्थं-
धनिष्ठाप्रीत्यर्थंइमामुपस्करसहितांप्रत्यक्षांगांतन्निष्क्रयभूतां दक्षिणांवादास्ये ॥ तेनधनिष्ठा-
प्रीयतांनमम ॥ इतिसङ्कल्प्यधनिष्ठाधिष्ठातृदेवतोपरिजलनिषेकः ॥ एवंतत्तदेवतानामुपरितत्तदानद्रव्यस्योहंकृत्वाजल-
निषेकः ॥ शततारकायैद्रोणमात्रतिलदानम् ॥ पूर्वाभाद्रपदायैसुवर्णदानम्॥ उत्तराभाद्रपदायैवस्त्र
दानम् ॥ रेवत्यैसप्तधान्यम् ॥ यस्यब्राह्मणस्ययस्मिन्कलशेवरणंतस्मैतंकलशंतत्तद्देवतामुद्दिश्य-
कृतंदानंदद्यात् ॥ ततः आचार्यः तैः ब्राह्मणैःसह स्वस्तिवाचनंकृत्वा ॥ उत्तिष्ठब्रह्मणस्पते इतिमन्त्रेणतान् कलशानु-

त्थाप्य सपरिवारंयजमानमभिषिञ्चेत् ॥ ॐउत्तिष्ठब्रह्मणस्पते०शुचा ॥१॥ इतिकलशानुत्थाप्याभिषेकः॥ ॐआ-पोहिष्ठा०॥ योवःशिव०॥तस्माऽअरङ्ग०॥३॥ देवस्यत्वा० सरस्वत्यै० ॥ ४ ॥ देवस्यत्वा० सर-स्वत्यै० ॥५॥ देवस्यत्वा० अश्विनो० ॥६॥ विश्वानिदेव० ॥७॥ धामच्छद्० ॥८॥ अन्नपतेन्न-स्यनो०॥९॥ सहस्राक्षमितिपञ्च ॥५॥ ॐपालाशंभवति० ॥१॥ अमृताभिषेकोस्तु ॥ आशीर्वादः—शतमिन्नु-शरदो०॥१॥ आज्यपात्रेमुखावलोकनं ॥ अपसव्यं ॥ एतत्पञ्चकविधानोपार्जितंपुण्यंअ०गोत्राय अ०प्रेतायउपतिष्ठतु ॥सव्यं॥ अद्यपूर्वो०पञ्चकविधानविधेःसर्वंपरि०॥अपसव्यंकृतेनानेनपञ्चक-विधानेनअ०गोत्रस्यअ०प्रेतस्यप्रेतत्वनिवृत्तिःअसद्गतिमृ०सद्गतिप्रा०अक्षयातृ०यममार्गे०त्तिः ॥ पञ्चकेषुमरणजनितदोषोपशान्तिः ॥सव्यं॥ अग्रेतन एकादशाहकर्मयोग्यतावाप्तिः॥इतिपञ्चकविधानम् ॥

इतिद्विवेद्युपाह्वलीलाधरात्मज "चुनीलालशर्मणा" तथा च ज्योतिर्विदुपनामकभानुशंकरात्मज "सूर्यरामशर्मणा" संवर्ध्यसंशोध्य प्रकाशितेदालभ्योक्ताशुभकर्मप्रदीपे चतुर्थोविभागः ॥

---

१ अभिषेकं ततः कुर्यात्कलशोदकतस्तथा । कलशैः स्नपनं तस्य कुर्यादाज्यावलोकनम् ॥ वस्त्रंचैवपरित्याज्यंरुद्रभक्तिविशेषतः । ब्राह्मणान् भोजयेत्पश्चात्पायसैर्मधुसर्पिषा ॥ एवंयः कुरुतेपुत्रः शुभंतस्य प्रजायते ॥ विधानं यो न कुर्वीत विघ्नस्तस्य भवेत्सदा ॥ तस्मा-त्सर्वप्रयत्नेन शांतिं कुर्याद्यथाविधि ॥

॥ अथ दालभ्योक्ताशुभकर्मप्रदीपे सूक्तसंग्रहाख्यःपञ्चमोभागः ॥ **ब्रह्मसूक्तम्** ॥

हरिःॐतेजोसिशुक्रममृतमायुष्पाऽआयुर्म्मेपाहि ॥ देवस्यत्वासवितुःप्रसवेश्विनोर्बा-
हुभ्याम्पूष्णोहस्ताभ्यामाददे ॥१॥इमामगृभ्णन्रशनामृतस्यपूर्वऽआयुषिविदथेषुकव्या ॥
सानोऽअस्मिन्त्सुतऽआबभूवऽऋतस्यसामन्त्सरमारपन्ती ॥ २ ॥ अभिधाऽअसिभुवनमासि-
यन्तासिधर्त्ता ॥ सत्वमग्निंवैश्वानरꣳसप्रथसङ्गच्छस्वाहाकृतः ॥ ३ ॥ स्वगात्वादेवेभ्यः
प्रजापतयेब्रह्मन्नश्वम्भन्त्स्यामिदेवेभ्यःप्रजापतयेतेनराध्यासम् ॥ तम्बधानदेवेभ्यः
प्रजापतयेतेनराध्नुहि ॥ ४ ॥ प्रजापतयेत्वाजुष्टम्प्रोक्षामीन्द्राग्निभ्यान्त्वाजुष्टम्प्रोक्षा-
मिवायवेत्वाजुष्टम्प्रोक्षामिविश्वेभ्यस्त्वादेवेभ्योजुष्टम्प्रोक्षामिसर्वेभ्यस्त्वादेवेभ्योजुष्ट-
म्प्रोक्षामि ॥ योऽअर्वन्तञ्जिघाꣳसतितमभ्यमीतिवरुणः ॥ परोमर्त्तःपरःश्वा ॥ ५ ॥
अग्नयेस्वाहासोमायस्वाहापाम्मोदायस्वाहासवित्रेस्वाहावायवेस्वाहाविष्णवेस्वाहेन्द्रायस्वा- १२४०।
हाबृहस्पतयेस्वाहामित्रायस्वाहावरुणायस्वाहा ॥६॥ हिङ्कारायस्वाहाहिङ्कृतायस्वाहाक्रन्दते
स्वाहावक्रन्दायस्वाहाप्रोथतेस्वाहाप्रप्रोथायस्वाहागन्धायस्वाहाघ्रातायस्वाहानिविष्टाय-

स्वाहोपविष्टायस्वाहासन्दितायस्वाहावल्गतेस्वाहासीनायस्वाहाशयानायस्वाहास्वपतेस्वाहा-
जाग्ग्रतेस्वाहाकूजतेस्वाहाप्रबुद्धायस्वाहाविजृम्भमाणायस्वाहाविचृत्तायस्वाहासꣳहानायस्वा-
होपस्थितायस्वाहायनायस्वाहाप्रायणायस्वाहा ॥ ७ ॥ यतेस्वाहाधावतेस्वाहोद्द्रावायस्वाहो
द्द्रुतायस्वाहाशूकारायस्वाहाशूकृतायस्वाहानिषण्णायस्वाहोत्थितायस्वाहाजवायस्वाहाविवर्त्ते-
मानायस्वाहाविवृत्तायस्वाहाविधून्वानायस्वाहाविधूतायस्वाहाशुꣳश्रूषमाणायस्वाहाशृण्वते-
स्वाहेक्षमाणायस्वाहेक्षितायस्वाहावीक्षितायस्वाहानिमेषायस्वाहायदत्तितस्मैस्वाहायत्पिब-
तितस्मैस्वाहायन्मूत्रङ्करोतितस्मैस्वाहाकुर्वतेस्वाहाकृतायस्वाहा ॥ ८ ॥ तत्सवितुर्वरेण्य
म्भर्गोदेवस्यधीमहि ॥ धियोयोनꣳप्रचोदयात् ॥ ९ ॥ हिरण्यपाणिमूतयेसवितारमुपह्वये॥
सचेत्तादेवतापदम् ॥ १० ॥ देवस्यचेततोमहीम्प्रसवितुर्हवामहे ॥ सुमतिꣳसत्यराधसम्
५१ ॥ ११ ॥ सुष्टुतिꣳसुमतीवृधोरातिꣳसवितुरीमहे ॥ प्रदेवायमतीविदे ॥ १२ ॥ रातिꣳसत्प
तिम्महेसवितारमुपह्वये ॥ आसवन्देववीतये ॥१३॥ देवस्यसवितुर्म्मतिमासवंविश्वदेव्यम् ॥
धियाभगम्मनामहे ॥ १४ ॥ अग्निꣳस्तोमेनबोधयसमिधानोऽअमर्त्यम् ॥ हव्यादेवेषुनोदधत्

॥१५॥सहव्यवाडमर्त्यऽउशिग्दूतश्चनोहितः ॥ अग्निर्द्धियासमृण्वति ॥१६॥ अग्निन्दूत-
म्पुरोदधेहव्यवाहमुपब्ब्रुवे ॥ देवाँ२ऽआसादयादिह ॥ १७ ॥ अजीजनोहिपवमानसूर्य्यं-
विधारेशक्मनापयः ॥ गोजीरयारंहमाणःपुरन्ध्या ॥ १८ ॥ विभूर्म्मात्राप्प्रभूःपित्राश्वो-
सिहयोस्यत्योसिमयोस्यर्वासिसप्तिरसिवाज्यसिवृषासिनृमणाऽअसि ॥ ययुर्न्नामासिशिशु-
र्न्नामास्यादित्यानाम्पत्वान्विहिदेवाऽआशापालाऽएतन्देवेभ्योश्वम्मेधायप्प्रोक्षितंरक्षतेहर-
न्तिरिहरमतामिहधृतिरिहस्वधृतिःस्वाहा ॥ १९ ॥ कायस्वाहाकस्मैस्वाहाकतमस्मैस्वाहा
स्वाहाधिमाधीतायस्वाहामनःप्रजापतयेस्वाहाचित्तंविज्ञातायादित्यैस्वाहादित्यैमह्यैस्वाहा
दित्यैसुमृडीकायैस्वाहासरस्वत्यैस्वाहासरस्वत्यैपावकायैस्वाहासरस्वत्यैबृहत्यैस्वाहापूष्णेस्वा·
हापूष्णेप्रपथ्यायस्वाहापूष्णेनरन्धिषायस्वाहात्वष्ट्रेस्वाहात्वष्ट्रेतुरीपायस्वाहात्वष्ट्रेपुरुरूपाय-
स्वाहाविष्णवेस्वाहाविष्णवेनिभूयपायस्वाहाविष्णवेशिपिविष्टायस्वाहा ॥ २० ॥ विश्वोदेवस्य
नेतुर्म्मर्त्तोवुरीतसख्यम् ॥ विश्वोरायऽइषुध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा ॥ २१ ॥ आ·
ब्रह्मन्ब्राह्मणोब्रह्मवर्च्चसीजायतामाराष्ट्रेराजन्यःशूरऽइषव्योतिव्याधीमहारथोजाय

तान्दोग्ग्ध्रीधेनुर्वोढानड्वानाशुःसप्तिःपुरन्धिर्योषाजिष्णूरथेष्ठाःसभेयोयुवास्ययजमानस्यवी-
रोजायतान्निकामेनिकामेनःपर्जन्योवर्षतुफलवत्योनऽओषधयःपच्यन्तांयोगक्षेमोनः कल्प-
ताम् ॥ २२ ॥ प्राणायस्वाहापानायस्वाहाव्यानायस्वाहाचक्षुषेस्वाहाश्रोत्रायस्वाहावाचे-
स्वाहामनसेस्वाहा ॥ २३ ॥ प्राच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहादक्षिणायैदिशेस्वाहार्वा-
च्यैदिशेस्वाहाप्रतीच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहोदीच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहो-
र्ध्वायैदिशेस्वाहार्वाच्यैदिशेस्वाहावाच्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २४ ॥ अद्भ्यःस्वाहा
वार्भ्यःस्वाहोदकायस्वाहातिष्ठन्तीभ्यःस्वाहास्रवन्तीभ्यःस्वाहास्यन्दमानाभ्यःस्वाहाकू-
प्याभ्यःस्वाहासूद्याभ्यःस्वाहाधार्याभ्यःस्वाहार्णवायस्वाहासमुद्रायस्वाहासरिरायस्वा-
हा ॥ २५ ॥ वातायस्वाहाधूमायस्वाहाभ्रायस्वाहामेघायस्वाहाविद्योतमानायस्वाहास्त-
नयतेस्वाहावस्फूर्जतेस्वाहावर्षतेस्वाहाववर्षतेस्वाहोग्रंवर्षतेस्वाहाशीघ्रंवर्षतेस्वाहोद्गृह्णतेस्वा-
होद्गृहीतायस्वाहाप्रुष्णतेस्वाहाशीकायतेस्वाहाप्रुष्वाभ्यःस्वाहाह्रादुनीभ्यःस्वाहानीहारा
यस्वाहा ॥ २६ ॥ अग्नयेस्वाहासोमायस्वाहेन्द्रायस्वाहापृथिव्यैस्वाहान्तरिक्षायस्वाहा-

अ० क० दिवेस्वाहादिग्भ्यःस्वाहाशाभ्यःस्वाहोर्व्यैदिशेस्वाहार्वाच्यैदिशेस्वाहा ॥ २७ ॥ नक्षत्रे प्रदीपः
भ्यःस्वाहानक्षत्रियेभ्यःस्वाहाहोरात्रेभ्यःस्वाहार्धमासेभ्यःस्वाहामासेभ्यःस्वाहाऽऋतु-
।२४२। भ्यःस्वाहार्त्तवेभ्यःस्वाहासंवत्सरायस्वाहाद्यावापृथिवीभ्याꣳस्वाहाचन्द्रायस्वाहासू-
र्य्यायस्वाहारश्मिभ्यःस्वाहावसुभ्यःस्वाहारुद्रेभ्यःस्वाहादित्येभ्यःस्वाहामरुद्भ्यःस्वाहा-
विश्वेभ्योदेवेभ्यःस्वाहामूलेभ्यःस्वाहाशाखाभ्यःस्वाहावनस्पतिभ्यःस्वाहापुष्पेभ्यः
स्वाहाफलेभ्यःस्वाहौषधीभ्यःस्वाहा ॥ २८ ॥ पृथिव्यैस्वाहान्तरिक्षायस्वाहादिवेस्वाहा-
सूर्य्यायस्वाहाचन्द्रायस्वाहानक्षत्रेभ्यःस्वाहाद्भ्यःस्वाहौषधीभ्यस्वाहावनस्पतिभ्यःस्वा-
हापरिप्लवेभ्यःस्वाहाचराचरेभ्यःस्वाहासरीसृपेभ्यःस्वाहा ॥ २९ ॥ असवेस्वाहावसवे-
स्वाहाविभुवेस्वाहाविवस्वतेस्वाहागणश्रियेस्वाहागणपतयेस्वाहाभिभुवेस्वाहाधिपतयेस्वाहाशू-
षायस्वाहासꣳसर्प्पायस्वाहाचन्द्रायस्वाहाज्योतिषेस्वाहामलिम्लुचायस्वाहादिवापतयतेस्वा- ।२४२।
हा ॥ ३० ॥ मधवेस्वाहामाधवायस्वाहाशुक्रायस्वाहाशुचयेस्वाहानभसेस्वाहानभस्यायस्वा-
हेषायस्वाहोर्ज्जायस्वाहासहसेस्वाहासहस्यायस्वाहातपसेस्वाहातपस्यायस्वाहाꣳहसस्पतये-

स्वाहा ॥ ३१ ॥ वाजायस्वाहाप्रसवायस्वाहापिजायस्वायाक्रतवेस्वाहास्वः स्वाहामूर्ध्नेस्वाहा
व्यश्नुविनेस्वाहान्त्यायस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहाप्रजा-
पतयेस्वाहा ॥ ३२ ॥ आयुर्यज्ञेनकल्पताᳪस्वाहाप्राणोयज्ञेनकल्पताᳪस्वाहापानोयज्ञेन-
कल्पताᳪ स्वाहाव्यानोयज्ञेनकल्पताᳪ स्वाहोदानोयज्ञेनकल्पताᳪ स्वाहासमानोयज्ञेनक-
ल्पताᳪस्वाहाचक्षुर्यज्ञेनकल्पताᳪस्वाहाश्श्रोत्रंय्यज्ञेनकल्पताᳪ स्वाहावाग्यज्ञेनकल्प-
स्वाहामनोयज्ञेनकल्पताᳪ स्वाहात्मायज्ञेनकल्पताᳪ स्वाहाब्रह्मायज्ञेनकल्पताᳪ
स्वाहाज्ज्योतिर्यज्ञेनकल्पताᳪस्वाहास्वर्यज्ञेनकल्पताᳪस्वाहापृष्ठंय्यज्ञेनकल्पताᳪस्वा-
हायज्ञोयज्ञेनकल्पताᳪस्वाहा ॥ ३३ ॥ एकस्मैस्वाहाद्वाभ्याᳪस्वाहाशतायस्वाहैकशताय-
स्वाहाव्युष्ट्यैस्वाहास्वर्गायस्वाहा ॥३४॥ ॥ इतिश्रीशुक्लयजुर्वेदवाजसनेयसँहितायान्दी
र्घपाठेद्वाविंशोध्यायः ॥ २२ ॥ ॥ ॥ ॥

## ॥ विष्णुसूक्तम् ॥

हरिः ॐ सहस्रशीर्षापुरुषः सहस्राक्षः सहस्रपात् ॥ सभूमिᳪ
सर्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ १ ॥ पुरुषऽएवेदᳪसर्वंय्यद्भूतंय्यच्चभाव्यम् ॥ उतामृ-

अ० क० तत्त्वस्येशानोयदन्नेनातिरोहति ॥२॥ एतावानस्यमहिमातोज्ज्यायाँश्चपूरुषः॥ पादोस्यविश्वा प्रदीपः
भूतानित्रिपादस्यामृतन्दिवि ॥ ३ ॥ त्रिपादूर्ध्वऽउदैत्पुरुषःपादोस्येहाभवत्पुनः ॥ ततो-
।२४३। विष्वङ्व्यक्रामत्साशनानशनेऽअभि ॥ ४ ॥ ततोव्विराडजायतव्विराजोऽअधिपूरुषः ॥
सजातोऽअत्त्यरिच्यतपश्चाद्भूमिमथोपुरः ॥ ५ ॥ तस्म्माद्यज्ञात्सर्व्वहुतःसम्भृतम्पृषदा-
ज्ज्यम् ॥ पशूँस्ताँश्चक्रेवायव्व्यानारण्ण्यग्ग्राम्म्याश्चये ॥ ६ ॥ तस्म्माद्यज्ञात्सर्व्वहुतऽ
ऋचःसामानियज्ज्ञिरे ॥ छन्दाᳫंसिजज्ञिरेतस्म्माद्यजुस्तस्म्मादजायत ॥ ७ ॥ तस्म्मादश्वाऽ
अजायन्तयेकेचोभयादतः ॥ गावोहयज्ज्ञिरेतस्म्मात्तस्म्माज्जाताऽअजावयः ॥८॥ तंय्यज्ञम्ब-
र्हिषिप्प्रौक्षन्न्पुरुषञ्जातमग्ग्रतः ॥ तेनदेवाऽअयजन्तसाध्याऽऋषयश्च्चये ॥ ९ ॥ यत्पुरुषँव्य-
दधुःकतिधाव्व्यकल्प्पयन् ॥ मुखङ्किमस्यासीत्किम्बाहूकिमूरूपादाऽउच्च्येते ॥१०॥ ब्राह्मणो
स्यमुखमासीद्बाहूराजन्न्यःकृतः ॥ ऊरूतदस्ययद्वैश्यःपद्भ्याᳫंशूद्रोऽअजायत ॥ ११ ॥ ।२४३।
चन्द्रमामनसोजातश्च्चक्षोःसूर्य्योऽअजायत ॥ श्रोत्राद्वायुश्चप्प्राणश्चमुखादग्निरजायत-
॥ १२ ॥ नाभ्याऽआसीदन्तरिक्षᳫंशीर्ष्णोद्यौःसमवर्त्तत ॥ पद्भ्याम्भूमिर्दिशःश्रोत्रात्तथालो-

काँ२ऽअंकल्पयन् ॥१३॥ यत्पुरुषेणहविषादेवायज्ञमतन्न्वत ॥ वसन्तोस्यासीदाज्ज्यंग्ग्रीष्मऽ
इध्मश्शरद्धविः ॥ १४ ॥ सप्तास्यासन्परिधयस्त्रिश्सप्तसमिधः कृताः ॥ देवायद्यज्ञन्तन्न्वानाऽ
अवध्नन्न्पुरुषम्पशुम् ॥ १५ ॥ यज्ञेनयज्ञमयजन्तदेवास्तानिधर्म्माणिप्रथमान्न्यासन् ॥
तेहनाकम्महिमानःसचन्तयत्रपूर्वेसाध्याःसन्तिदेवाः ॥१६॥ अद्भ्यःसम्भृतःपृथिव्यैरसाच्च-
विश्श्वकर्म्मणःसमवर्त्तताग्ग्रे ॥ तस्यत्त्वष्टाविदधद्रूपमेतितन्मर्त्यस्यदेवत्त्वमाजानमग्ग्रे ॥१७॥
वेदाहमेतम्पुरुषम्महान्तमादित्यवर्ण्णन्तमसःपरस्तात् ॥ तमेवविदित्त्वातिमृत्युमेतिनान्न्यः
पन्थाविद्यतेयनाय ॥१८॥ प्रजापतिश्चरतिगर्भेऽअन्तरजायमानोवहुधाविजायते ॥ तस्ययो-
निम्परिपश्यन्तिधीरास्तस्मिन्न्हतस्थुर्भुवनानिविश्श्वा ॥ १९ ॥ योदेवेभ्यऽआतपतियो-
देवानाम्पुरोहितः ॥ पूर्व्वोयोदेवेभ्योजातोनमोरुचायब्राह्मये ॥ २० ॥ रुचम्ब्राह्मञ्जन-
यन्तोदेवाऽअग्रेतदब्रुवन् ॥ यस्त्वैवम्ब्राह्मणोविद्यात्तस्यदेवाऽअसन्न्वशे ॥ २१ ॥ श्रीश्चतेलक्ष्मी
श्चपत्न्यावहोरात्रेपाश्श्वेनक्षत्राणिरूपमश्श्विनौव्यात्तम् ॥ इष्णन्निषाणामुम्मऽइषाणस-
र्व्वलोकम्मऽइषाण ॥ २२ ॥ ॥ ॥ ॥

॥ **रुद्रसूक्तम्** ॥ हरिः ॐ नमस्तेरुद्रमन्न्यवऽउतोतऽइषवेनमः ॥ बाहुब्भ्यामु-
ततेनमः ॥१॥ यातेरुद्रशिवातनूरघोरापापकाशिनी ॥ तयानस्तन्न्वाशन्तमयागिरिशन्ताभिचा-
कशीहि ॥२॥ यामिषुङ्गिरिशन्तहस्तेबिभर्ष्यस्तवे ॥ शिवाङ्गिरित्रताङ्कुरुमाहिᳬसीःपुरुषञ्जगत्
॥३॥ शिवेनवचसात्वागिरिशाच्छावदामसि ॥ यथानःसर्वमिज्जगदयक्ष्मᳬसुमनाऽअसत् ॥४॥
अध्यवोचदधिवक्ताप्रथमोदैव्योभिषक् ॥ अहींश्चसर्वाञ्जम्भयन्त्सर्वाश्चयातुधान्न्योधराचीः
परासुव ॥ ५ ॥ असौयस्ताम्रोऽअरुणऽउतबब्भ्रुःसुमङ्गलः ॥ येचैनᳬरुद्राऽअभितोदिक्षुश्रि-
ताःसहस्रशोवैषाᳬहेडऽईमहे ॥ ६ ॥ असौयोवसर्प्पतिनीलग्ग्रीवोविलोहितः ॥ उतैनङ्गो-
पाऽअदृश्रन्नदृश्रन्नुदहार्य्यःसदृष्टोमृडयातिनः ॥ ७ ॥ नमोस्तुनीलग्ग्रीवायसहस्राक्षाय-
मीढुषे ॥ अथोयेऽअस्यसत्त्वानोहन्तेब्भ्योकरन्नमः ॥ ८ ॥ प्रमुञ्चधन्न्वनस्त्वमुभयोरार्त्न्यो-
ज्ज्याम् ॥ याश्चतेहस्तऽइषवःपरा ताभगवोवप ॥ ९ ॥ विज्ज्यन्धनुःकपर्द्दिनोविशल्ल्योबा-
णवाँ२॥ऽउत ॥ अनेशन्नस्ययाऽइषवऽआभुरस्यनिषङ्गधिः ॥ १० ॥ यातेहेतिर्म्मीढुष्टमहस्ते-
बभूवतेधनुः ॥ तयास्म्मान्विश्वतस्त्वमयक्ष्मयापरिभुज ॥ ११ ॥ परितेधन्न्वनोहेतिरस्म्मा-

न्न्वृणक्कुविश्श्वतं÷॥ अथोयऽइषुधिस्तवारेऽअस्म्मान्निधेहितम् ॥ १२ ॥ अवतत्यनुष्ट्वꣳसहस्राक्ष-
शतेषुधे ॥ निशीर्य्यशुल्ल्यानाम्मुखाशिवोनं÷सुमनाभव ॥१३॥ नमस्तऽआयुधायानाततय-
धृष्णवे ॥ उभाब्भ्यामुततेनमोबाहुब्भ्यान्तवधन्न्वने ॥ १४ ॥ मानोमहान्तमुतमानोऽअब्भ्-
कम्मानऽउक्षन्तमुतमानंऽउक्षितम् ॥ मानोवधीꣳपितरम्मोतमातरम्मानं÷प्प्रियास्तन्न्वारुद्र-
रीरिषꣳ ॥ १५ ॥ मानस्तोकेतनयेमानऽआयुषिमानोगोषुमानोऽअश्श्वेषुरीरिषꣳ ॥ मानोवीरा-
न्न्रुद्रभामिनोवधीर्हविष्म्मन्तꣳसदमित्त्वाहवामहे ॥ १६ ॥ नमोहिरण्ण्यबाहवेसेनान्न्येदिशाञ्च-
पतयेनमोनमोवृक्षेब्भ्योहरिकेशेब्भ्यꣳपशूनाम्पतयेनमोनमं÷शष्प्पिञ्जरायत्विषीमतेपथीनाम्पत-
येनमोनमोहरिकेशायोपवीतिनेपुष्टानाम्पतयेनमो ॥ १७ ॥ नमोबब्भ्लुशायव्याधिनेन्नानाम्प-
तयेनमोनमोभवस्यहेत्यैजगताम्पतयेनमोनमोरुद्रायाततायिनेक्षेत्राणाम्पतयेनमोनमं÷सूता-
याहन्त्यैवनानाम्पतयेनमो ॥ १८ ॥ नमोरोहितायस्थपतयेवृक्षाणाम्पतयेनमोनमोभुवन्तये-
वारिवस्कृतायौषधीनाम्पतयेनमोनमोमन्त्रिणेवाणिजायकक्षाणाम्पतयेनमोनमंऽउच्चैर्ग्घोषाया-
क्क्रन्दयतेपत्तीनाम्पतयेनमो ॥ १९ ॥ नमं÷कृत्स्नायतयाधावतेसत्त्वनाम्पतयेनमोनमꣳसहमाना-

 यनिऽव्याधिनऽआव्याधिनीनाम्पतयेनमोनमोनिषङ्गिणेककुभायस्तेनानाम्पतयेनमोनमोनि- 
चेरवेपरिचरायारण्यानाम्पतयेनमो ॥ २० ॥ नमोवञ्चतेपरिवञ्चतेस्तायूनाम्पतयेन-
 मोनमोनिषङ्गिणऽइषुधिमतेतस्कराणाम्पतयेनमोनमःसृकायिभ्योजिघांᳪसद्भ्योमुष्णताम्प-
तयेनमोनमोसिमद्भ्योनक्तञ्चरद्भ्योविकृन्तानाम्पतयेनमः ॥२१॥ नमऽउष्णीषिणेगिरिचरायकु-
लुञ्चानाम्पतयेनमोनमऽइषुमद्भ्योधन्वायिभ्यश्चवोनमोनमऽआतन्वानेभ्यःप्रतिदधाने-
भ्यश्चवोनमोनमऽआयच्छद्भ्योस्यद्भ्यश्चवोनमो ॥ २२ ॥ नमोविसृजद्भ्योविध्यद्भ्य-
श्चवोनमोनमःस्वपद्भ्योजाग्रद्भ्यश्चवोनमोनमःशयानेभ्यऽआसीनेभ्यश्चवोनमोनमस्ति-
ष्ठद्भ्योधावद्भ्यश्चवोनमो ॥ २३ ॥ नमःसभाभ्यःसभापतिभ्यश्चवोनमोनमोश्वेभ्यो-
श्वपतिभ्यश्चवोनमोनमऽआव्याधिनीभ्योविविध्यन्तीभ्यश्चवोनमोनमऽउगणाभ्यस्तृ
ᳪहतीभ्यश्चवोनमो ॥ २४ ॥ नमोगणेभ्योगणपतिभ्यश्चवोनमोनमोव्रातेभ्योव्रातपति- 
भ्यश्चवोनमोनमोगृत्सेभ्योगृत्सपतिभ्यश्चवोनमोनमोविरूपेभ्योविश्वरूपेभ्यश्चवोन-
मो ॥ २५ ॥ नमःसेनाभ्यःसेनानिभ्यश्चवोनमोनमोरथिभ्योऽअरथेभ्यश्चवोनमो

नमःक्षतृभ्यःसङ्ग्रहीतृभ्यश्चवोनमोनमोमहद्भ्योऽअर्भकेभ्यश्चवोनमः ॥२६॥ नमस्त
क्षभ्योरथकारेभ्यश्चवोनमोनमःकुलालेभ्यःकर्म्मारेभ्यश्चवोनमोनमोनिषादेभ्यःपुञ्जि-
ष्टेभ्यश्चवोनमोनमःश्वनिभ्योमृगयुभ्यश्चवोनमो ॥ २७ ॥ नमःश्वभ्यःश्वपतिभ्य-
श्चवोनमोनमोभवायचरुद्रायचनमः शर्वायचपशुपततेचनमोनीलग्ग्रीवायचशितिकण्ठायच
॥ २८ ॥ नमःकपर्द्दिनेचव्युप्तकेशायचनमःसहस्राक्षायचशतधन्न्वनेचनमोगिरिशयायचशि-
पिविष्टायचनमोमीढुष्टमायचेषुमतेच ॥ २९ ॥ नमोह्रस्वायचवामनायचनमोबृहतेचवर्षीय-
सेचनमोवृद्धायचसवृधेचनमोग्र्यायचप्रथमायच ॥३०॥ नमऽआशवेचाजिरायचनमःशीघ्र्या-
चशीभ्यायचनमऽऊर्म्यायचावस्वन्न्यायचनमोनादेयायचद्वीप्यायच ॥ ३१ ॥ नमोज्येष्ठाय-
चकनिष्ठायचनमः पूर्वजायचापरजायचनमोमध्यमायचापगल्भायचनमोजघन्न्यायचबुध्न्यायच
॥३२॥ नमःसोभ्यायचप्रतिसर्य्यायचनमोयाम्म्यायचक्षेम्म्यायचनमःश्लोक्यायचावसान्न्या-
यचनमऽउर्वर्य्यायचखल्ल्यायच ॥ ३३ ॥ नमोवन्न्यायचकक्ष्यायचनमःश्रवायचप्रतिश्रवाय-
चनमऽआशुषेणायचाशुरथायचनमःशूरायचावभेदिनेच ॥३४॥ नमोबिल्मिनेचकवचिनेचन-

मोवर्म्मिणेचवरूथिनेचनमः श्रुतायचश्रुतसेनायचनमोदुन्दुभ्यायचाहनन्न्यायच ॥ ३५ ॥
नमोधृष्णवेचप्रमृशायचनमोनिषङ्गिणेचेषुधिमतेचनमस्तीक्ष्णेषवेचायुधिनेचनमः स्वायुधायच-
सुधन्न्वनेच ॥ ३६ ॥ नमःस्रुत्यायचपथ्यायचनमःकाट्यायचनीप्यायचनमःकुल्ल्यायच-
चसरस्यायचनमोनादेयायचवैशन्तायच ॥ ३७ ॥ नमःकूप्यायचावट्यायचनमोवी
ध्र्यायचातप्प्यायचनमोमेघ्यायचविद्युत्यायचनमोवर्ष्यायचावर्ष्यायच ॥ ३८ ॥ नमोवात्त्या-
चरेष्म्यायचनमोवास्तव्यायचवास्तुपायचनमःसोमायचरुद्रायचनमस्ताम्म्रायचारुणायच ॥
॥ ३९ ॥ नमःशङ्गवेचपशुपतयेचनमऽउग्ग्रायचभीमायचनमोग्ग्रेवधायचदूरेवधायचनमोहन्त्रे
चहनीयसेचनमोवृक्षेभ्योहरिकेभ्योनमस्ताराय ॥ ४० ॥ नमःशम्भवायचमयोभवायच
नमःशङ्करायचमयस्करायचनमःशिवायचशिवतरायच ॥ ४१ ॥ नमःपार्य्यायचावार्य्यायच-
नमःप्रतरणायचोत्तरणायचनमस्तीर्त्थ्यायचकूल्ल्यायचनमःशष्प्यायचफेन्न्यायचनमःसिक-
त्यायच ॥ ४२ ॥ प्रवाह्यायचनमःकिꣳशिलायक्षयणायचनमःकपर्दिनेचपुलस्तयेचनमऽइरि-
ण्यायचप्रपत्थ्यायच ॥ ४३ ॥ नमोव्रज्यायचगोष्ठ्यायचनमस्तल्प्यायचगेह्यायचनमो-

हृदय्यायचनिवेष्प्यायचनमःकाट्यायचगह्वरेष्ठायचनमःशुष्क्याय ॥ ४४ ॥ नमःशुष्क्यायचह-
रित्यायचनमःपाᳬंसव्यायचरजस्यायचनमोलोप्यायचोलप्यायचनमऽऊर्व्यायचसूर्व्याय-
चनमःपर्णाय ॥४५॥ नमःपर्णायचपर्णशदायचनमऽउद्गुरमाणायचाभिघ्नतेचनमऽआखिद-
तेचप्रखिदतेचनमऽइषुकृद्भ्योधनुष्कृद्भ्यश्चवोनमोनमोवःकिरिकेभ्योदेवानाᳬं हृदयेभ्यो-
नमोविचिन्वत्केभ्योनमोविक्षिणत्केभ्योनमऽआनिर्हतेभ्यः ॥४६॥ द्रापेऽअन्धसस्पतेदरिद्र-
नीललोहित ॥ आसाम्प्रजानामेषाम्पशूनाम्माभेर्म्मारोङ्मोचनःकिञ्चनाममत् ॥४७॥ इमारुद्रा-
यतवसेकपर्द्दिनेक्षयद्वीरायप्रभरामहेमतीः ॥ यथाशमसद्द्विपदेचतुष्पदेविश्वम्पुष्टङ्ग्रामेऽअ-
स्मिन्ननातुरम् ॥ ४८ ॥ यातेरुद्रशिवातनूःशिवाविश्वाहाभेषजी ॥ शिवारुतस्यभेषजीतया-
४२ नोमृडजीवसे ॥ ४९ ॥ परिनोरुद्रस्यहेतिर्वृणक्तुपरित्वेषस्यदुर्म्मतिरघायोः ॥ अव-
स्थिरामघवद्भ्यस्तनुष्वमीढ्वस्तोकायतनयायमृड ॥ ५० ॥ मीढुष्टमशिवतमशिवोनःसुमना-
भव ॥ परमेवृक्षऽआयुधन्निधायकृत्तिम्वसानऽआचरपिनाकम्बिभ्रदागहि ॥ ५१ ॥ विकिरि-
द्रविलोहितनमस्तेऽअस्तुभगवः ॥ यास्तेसहस्रᳬं हेतयोन्न्यमस्मन्निवपन्तुताः ॥ ५२ ॥

तासामीशानोभगवह्पराचीनामुखांकृधि ॥ ५३ ॥
अ० क० सहस्राणिसहस्रशोबाऽह्वोस्तवंहेतयः ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥५४॥
असंख्यातासहस्राणियेरुद्राऽअधिभूम्म्याम् ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥ ५५ ॥
अस्मिन्म्महत्यर्ण्णवेन्तरिक्षेभवाऽअधि ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥५६॥
१२४७ नीलग्ग्रीवाःशितिकण्ठादिवᳪरुद्राऽउपश्रिताः ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥५७॥
नीलग्ग्रीवाःशितिकण्ठाःशर्वाऽअधःक्षमाचराः॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥ ५८ ॥
येवृक्षेषुशष्प्पिञ्जरानीलग्ग्रीवाविलोहिताः ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥ ५९ ॥
येभूतानामधिपतयोविशिखासःकपर्द्दिनः ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥६०॥ येतीर्था-
येपथाम्पथिरक्षयऽऐलबृदाऽआयुर्युधः॥तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥ ६१ ॥ येन्नेषुवि-
निंप्प्रचरन्तिसृकाहस्तानिषङ्गिणः॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥६२॥ यऽएतावन्त- १२४७
विद्धयन्तिपात्रेषुपिबतोजनान् ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥६३॥ नमोस्तु-
श्चभूयाᳪसश्चदिशोरुद्रावितस्थिरे ॥ तेषांᳪसहस्रयोजनेवधन्वांनितन्मसि ॥६३॥ नमोस्तु-
रुद्रेभ्योयेदिवियेषांवर्षमिषवः॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीचीर्दशोर्द्ध्वाः ॥

तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः ॥ ६४ ॥
नमोस्तुरुद्रेभ्योयेन्तरिक्षेयेषांवातऽइषवः॥ तेभ्योदशप्प्राचीर्दशदक्षिणादशप्प्रतीचीर्दशोदीची
र्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदध्मः
॥६५॥ नमोस्तुरुद्रेभ्योयेपृथिव्व्याय्येषामन्नमिषवः ॥ तेभ्योदशप्राचीर्दशदक्षिणादशप्प्रती-
चीर्दशोदीचीर्दशोर्द्ध्वाः ॥ तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयंद्विष्मोयश्चनोद्वेष्टित-
मेषाञ्जम्भेदध्मः ॥६६॥ इतिश्रीशुक्लयजुर्वेदवाजसनेयसंहितायान्दीर्घपाठेषोडशोध्यायः॥१६॥

## यमसूक्तम् ॥

हरिःॐ अपेतोयन्तुपणयोसुम्न्नादेवपीयवः ॥ अस्यलोकः
सुतावतः ॥ द्युभिरहोभिरक्तुभिर्व्यक्तय्यमोददात्त्ववसानमस्म्मै ॥ १ ॥ सवितातेशरी
रेभ्यःपृथिव्व्याँल्लोकमिच्छतु ॥ तस्म्मैयुज्ज्यन्तामुस्त्रियाः ॥ २ ॥ वायुःपुनातु ॥ सवितापुना-
त्वग्नेर्भ्राजसासूर्य्यस्यवर्च्चसा ॥ विमुच्च्यन्तामुस्त्रियाः ॥ ३ ॥ अश्वत्थेवोनिषदनम्पर्णेवो
वसतिष्कृता ॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥ ४ ॥ सवितातेशरीराणिमातुरुप-
स्थऽआवपतु ॥ तस्म्मैपृथिविशम्भव ॥ ५ ॥ प्रजापतौत्वादेवतायामुपोदकेलोकेनिदधा-

म्म्यसौ ॥ अपनःशोशुचदघम् ॥ ६ ॥ परम्मृत्योऽअनुपरेहिपन्थाँयस्तेऽअन्यऽइतरोदेव-
यानात् ॥ चक्षुष्मतेशृण्वतेतेब्ब्रवीमिमानःप्रजाꣳरीरिषोमोतवीरान् ॥ ७ ॥ शंवातःशꣳहिते
घृणिःशन्तेभवन्त्विष्टकाः ॥ शन्तेभवन्त्वग्नयःपार्थिवासोमात्वाभिशूशुचन् ॥ ८ ॥ कल्पन्ता-
न्तेदिशस्तुभ्यमापःशिवतमास्तुभ्यम्भवन्तुसिन्धवः ॥ अन्तरिक्षꣳशिवन्तुभ्यङ्कल्पन्ता-
न्तेदिशःसर्वाः ॥ ९ ॥ अश्मन्वतीरीयतेसꣳरभध्वमुत्तिष्ठतप्रतरतासखायः ॥ अत्राज-
हीमोऽशिवायेऽअसञ्छिवान्वयमुत्तरेमाभिवाजान् ॥ १० ॥ अपाघमपकिल्बिषमपकृत्या-
मपोरपः ॥ अपामार्गत्वमस्मदपदुःष्वप्न्यꣳसुव ॥ ११ ॥ सुमित्रियानऽआपऽओषधयः
सन्तुदुर्मित्रियास्तस्मैसन्तुयोऽस्मान्द्वेष्टियञ्चवयन्द्विष्मः ॥ १२ ॥ अनड्वाहमन्वारभा-
महेसौरभेयꣳस्वस्तये ॥ सनऽइन्द्रऽइवदेवेभ्योवह्निःसन्तारणोभव ॥ १३ ॥ उद्व-
यन्तमसस्परिस्वःपश्यन्तऽउत्तरम् ॥ देवन्देवत्रासूर्यमगन्मज्ज्योतिरुत्तम् ॥ १४ ॥
इमञ्जीवेभ्यःपरिधिन्दधामिमैषान्नुगादपरोऽअर्थमेतम् ॥ शतञ्जीवन्तुशरदःपुरूचीरन्त
म्मृत्युन्दधताम्पर्वतेन ॥१५॥ अग्नऽआयूꣳषिपवसऽआसुवोर्ज्जमिषञ्चनः ॥ आरेबाधस्व-





।२४८।

दुच्छुनाम् ॥ १६ ॥ आयुष्मानग्नेहविषांवृधानोघृतप्रतीकोघृतयोनिरेधि ॥ घृतम्पीत्वाम-
धुचारुगव्यम्पितेवपुत्रमभिरक्षतादिमान्त्स्वाहा ॥१७॥ परीमे ॥ गामनेषतपर्य्यग्निमहृषत ॥
देवेष्वक्रतश्रवहकऽइमाँ२ऽआदधर्षति ॥ १८ ॥ क्रव्यादमग्निम्प्रहिणोमिदूरंयम-
राज्यङ्गच्छतुरिप्रवाह? ॥ इहैवायमितरोजातवेदादेवेभ्योहव्यंवहतुप्रजानन् ॥ १९ ॥
वहवपाञ्जातवेदःपितृभ्योयत्रैनान्वेत्थनिहितान्पराके ॥ मेदसःकुल्याऽउपतान्त्स्रवन्तु
सत्याऽएषामाशिषःसन्नमन्ताᳬस्वाहा ॥ २० ॥ स्योनापृथिविनोभवान्नृक्षरानिवेशनी ॥
यच्छानःशर्म्मसप्रथाः ॥ अपनःशोशुचदघम् ॥ २१ ॥ अस्मात्त्वमधिजातोसित्वदयंजा-
यताम्पुनः ॥ असौस्वर्ग्गायलोकायस्वाहा ॥ २२ ॥ ॥ ॥ ॥ ॥

**तत्पुरुषसूक्तम्** ॥ ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदुचन्द्रमाः ॥ तदेवशुक्रंतद्ब्रह्म-
ताऽआपःसप्रजापतिः ॥ १ ॥ सर्वेनिमेषाजज्ञिरेविद्युतःपुरुषादधि ॥ नैनमूर्द्ध्वन्नतिर्य्यञ्चन्नमध्ये-
परिजग्रभत् ॥ २ ॥ नतस्यप्रतिमाऽअस्तियस्यनाममहद्यशः ॥ हिरण्यगर्भऽइत्येषमामाहिᳬसी
दित्येषायस्मान्नजातऽइत्येषः ॥ ३ ॥ एषोहदेवःप्रदिशोनुसर्वाःपूर्वोहजातःसऽउगर्भेऽअन्तः ॥

अ० क० सऽएवजातःसजनिष्यमाणःप्रत्यङ्जनांस्तिष्ठतिसर्वतोमुखः ॥ ४ ॥ यस्माज्जातन्नपुराकि- प्रदीपः
ञ्चनैवयऽआबभूवभुवनानिविश्वा ॥ प्रजापतिःप्रजयासꣳरराणस्त्रीणिज्ज्योतीꣳषिसचतेस-
।२४१। षोडशी ॥५॥ येनद्यौरुग्रापृथिवीचदृढायेनस्वःस्तभितंयेननाकः ॥ योऽअन्तरिक्षेरजसोवि-
मानःकस्मैदेवायहविषाविधेम ॥ ६ ॥ यङ्क्रन्दसीऽअवसातस्तभानेऽअभ्यैक्षेताम्मनसारे-
जमाने ॥ यत्राधिसूरऽउदितोविभातिकस्मैदेवायहविषाविधेम ॥ आपोहयद्बृहतीर्यश्चिदापः
॥ ७ ॥ वेनस्तत्पश्यन्निहितङ्गुहासद्यत्रविश्वम्भवत्येकनीडम् ॥ तस्मिन्निदꣳसञ्चविचैतिसर्वꣳ-
सओतःप्रोतश्चविभूःप्रजासु ॥ ८ ॥ प्रतद्वोचेदमृतन्नुविद्वान्गन्धर्वोधामविभृतङ्गुहासत् ॥
त्रीणिपदानिनिहितागुहास्ययस्तानिवेदसपितुःपितासत् ॥ ९ ॥ सनोबन्धुर्ज्जनितासविधा-
ताधामानिवेदभुवनानिविश्वा ॥ यत्रदेवाऽअमृतमानशानास्तृतीयेधामन्नध्यैरयन्त ॥ १० ॥
परीत्यभूतानिपरीत्यलोकान्परीत्यसर्वाःप्रदिशोदिशश्च ॥ उपस्थायप्रथमजामृतस्या- ।२४१।
त्मनात्मानमभिसंविवेश ॥ ११ ॥ परिद्यावापृथिवीसद्यऽइत्वापरिलोकान्परिदिशःपरिस्वः ॥
ऋतस्यतन्तुंविततंविचृत्यतदपश्यत्तदभवत्तदासीत् ॥ १२ ॥ सदसस्पतिमद्भुतम्प्रियमिन्द्र-

स्यकाम्म्यम् ॥ सनिम्मेधामयासिषुᳬस्वाहा ॥ १३ ॥ यांम्मेधान्देवगणाःपितरश्श्चोपासते ॥ तयामामद्यमेधयाग्ग्नेमेधाविनङ्कुरुस्वाहा ॥१४॥ मेधाम्मे व्वरुणोददातुमेधामग्निःप्रजापतिः ॥ मेधामिन्द्रश्श्चव्वायुश्श्चमेधान्धाताददातुमेस्वाहा ॥१५॥ इदम्मेब्रह्मचक्षत्रञ्चोभेश्श्रियमश्श्नुताम् ॥ मयिदेवादधतुश्श्रियमुत्तमान्तस्यैतेस्वाहा ॥ १६ ॥

**रक्षोघ्नसूक्तम्** ॥ कृणुष्वपाजःप्रसितिन्नपृथ्वीᳬय्याहिराजेवामवाँ२ऽइभेन ॥ तृष्वीमनुप्रसितिन्द्रूणानोस्तासिविद्ध्यरक्षसस्तपिष्ठैः ॥ १ ॥ तवब्भ्रमासऽआशुयापतन्त्यनुस्पृशधृषताशोशुचानः ॥ तपूᳬष्यग्ग्नेजुह्वापतङ्गानसन्दितोविसृजविष्ष्वगुल्काः ॥ २ ॥ प्रतिस्पशोविसृजतूर्णितमोभवापायुर्व्विशोऽअस्याऽअदब्धः ॥ योनोदूरेऽअघशᳬसोयोऽअन्त्यग्ग्नेमाकिष्टेᳬव्यथिरादधर्षीत् ॥ ३ ॥ उदग्ग्नेतिष्ठप्रत्यातनुष्ष्वन्न्यमित्राँ२ऽओषतात्तिग्ग्महेते ॥ योनोऽअरातिᳬसमिधानचक्रेनीचातन्धक्ष्यतसन्नशुष्कम् ॥ ४ ॥ उर्द्ध्वोभवप्रतिविद्ध्याद्ध्यस्म्मदाविष्कृणुष्ष्वदैव्यान्न्यग्ग्ने ॥ अवस्थिरातनुहियातुजूनाᳬजामिमजामिम्प्रमृणीहिशत्रून् ॥ अग्ग्नेष्ट्वातेजसासादयामि ॥ ५ ॥ ॥ ॥ ॥

 



रक्षोहणंवलगहनं वैष्णवीमिदमहन्तंवलगमुत्किरामियम्मेनिष्ठ्योयममात्योनिचखाने
दमहन्तंवलगमुत्किरामियम्मेसमानोयमसमानोनिचखानेदमहन्तंवलगमुत्किरामियम्मेसबन्धु
र्यमसबन्धुर्निचखानेदमहन्तंवलगमुत्किरामियम्मेसजातोयमसजातोनिचखानोत्कृत्याङ्किरा-
मि ॥ १ ॥ स्वराडसिसपत्नहासत्रराडस्यभिमातिहाजनराडसिरक्षोहासर्वराडस्यमित्रहा ॥२॥
रक्षोहणोवोवलगहनः प्रोक्षामिवैष्णवान्रक्षोहणोवोवलगहनोवनयामिवैष्णवान्रक्षोहणोवोवल-
गहनोवस्तृणामिवैष्णवान्रक्षोहणौवावलगहनाउपदधामिवैष्णवीरक्षोहणौवांवलगहनौपर्यूहा-
मिवैष्णवीवैष्णवमसिवैष्णवास्स्थ ॥ ३ ॥ ॥ ॥ ॥ ॥

## पितृसूक्तम्

॥ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः ॥ असु-
म्यईयुरवृकाऋतज्ञास्तेनोवन्तुपितरोहवेषु ॥ १ ॥ अङ्गिरसोनःपितरोनवग्वाअथर्वा-
णोभृगवःसोम्यासः ॥ तेषांवयःसुमतौयज्ञियानामपिभद्रेसौमनसेस्याम ॥ २ ॥ येनः
पूर्वेपितरःसोम्यासोनूहिरेसोमपीथंवसिष्ठाः ॥ तेभिर्यमःसःरराणोहवींष्युशन्नुशद्भिः
प्रतिकाममत्तु ॥ ३ ॥ त्वःसोमप्रचिकितोमनीषात्वःरजिष्ठमनुनेषिपन्थाम् ॥ तवप्रणीती-
पितरोनइन्द्रोदेवेषुरत्नमभजन्तधीराः ॥ ४ ॥ त्वयाहिनःपितरःसोमपूर्वेकर्माणिचक्रुःपव- ।२५०।

मानधीराः ॥ त्वन्त्वन्नवातःपरिधीं१ रपोर्णुवीरेभिरश्वैर्म्मघवाभवानः ॥ ५ ॥ त्वꣳसोमपितृभिः संविदानोनुद्यावापृथिवीऽआततन्थ ॥ तस्मैतऽइन्द्रोहविषाविधेमवयꣳस्यामपतयोरयीणाम् ॥ ६ ॥ बर्हिषदःपितरऽऊत्यर्वागिमावोहव्याचकृमाजुषद्ध्वम् ॥ तऽआगतावसाशन्तमेनाथानःशंय्योररपोदधात ॥ ७ ॥ आहम्पितॄन्त्सुविदत्राँ२ अवित्सिनपातञ्चविक्क्रमणञ्चविष्णोः ॥ बर्हिषदोयेस्वधयासुतस्यभजन्तपित्वस्तऽइहागमिष्ठाः ॥ ८ ॥ उपहूताः पितरः सोम्म्यासोबर्हिष्येषुनिधिषुप्प्रियेषु ॥ तऽआगमन्तुतऽइहश्रुवन्त्वधिब्ब्रुवन्तुतेवन्त्वस्म्मान् ॥९॥ आयन्तुनःपितरःसोम्यासोग्निष्वात्ताःपथिभिर्द्देवयानैः ॥ अस्मिन्यज्ञेस्वधयामदन्तोधिब्ब्रुवन्तुतेवन्त्वस्म्मान् ॥१०॥ अग्निष्वात्ताःपितरऽएहगच्छतसदः सदतसुप्प्रणीतयः॥ अत्ताहवीꣳषिप्प्रयतानिबर्हिष्यथारयिꣳसर्व्ववीरन्दधातन ॥ ११ ॥ येअग्निष्वात्तायेऽनग्निष्वात्तामध्येदिवःस्वधयामादयन्ते ॥ तेभ्यः स्वराडसुनीतिमेतांय्यथावशन्तन्न्वङ्कल्पयाति ॥ १२ ॥

**इंद्रसूक्तम्** ॥ आशुःशिशानोवृषभोनभीमोघनाघनःक्षोभणश्चर्षणीनाम् ॥ सङ्क्रन्दनोनिमिषऽएकवीरःशतꣳसेनाऽअजयत्साकमिन्द्रः ॥ १ ॥ सङ्क्रन्दनेनानिमिषे-

र्णा जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ॥ तदिन्द्रेण जयत तत्सहध्वं युधो नर ऽइषुहस्तेन वृ-
ष्णा ॥ २ ॥ स ऽइषुहस्तैः स निषङ्गिभिर्वशी सꣳस्रष्टा स युध ऽइन्द्रो गणेन ॥ सꣳसृष्टजित्सो-
मपा बाहुशर्द्ध्युग्रधन्वा प्रतिहिताभिरस्ता ॥ ३ ॥ बृहस्पते परि दीया रथेन रक्षोहामित्राँ २
ऽअपबाधमानः ॥ प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेद्ध्यविता रथानाम् ॥ ४ ॥ बलवि-
ज्ञाय स्थविरः प्रवीरः सहस्वान्वाजी सहमान ऽउग्रः ॥ अभिवीरो ऽअभिसत्वा सहोजा जैत्रमि-
न्द्र रथमातिष्ठ गोवित् ॥ ५ ॥ गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा ॥ इम-
ꣳसजाता ऽअनु वीरयद्ध्वमिन्द्रꣳ सखायो ऽअनु सꣳरभद्ध्वम् ॥ ६ ॥ अभि गोत्राणि सहसा गाह-
मानो ऽदयो वीरः शतमन्युरिन्द्रः ॥ दुश्च्यवनः पृतनाषाडयुद्ध्यो ऽस्माकꣳ सेना ऽअवतु प्र युत्सु
॥ ७ ॥ इन्द्र ऽआसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर ऽएतु सोमः ॥ देवसेनानामभिभञ्ज-
तीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥ ८ ॥ इन्द्रस्य वृष्णो वरुणस्य राज्ञ ऽआदित्यानां मरुताꣳ
शर्द्ध ऽउग्रम् ॥ महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥ ९ ॥ उद्धर्षय
मघवन्नायुधान्युत्सत्वनां मामकानां मनाꣳसि ॥ उद्वृत्रहन्वाजिनां वाजिनान्युद्रथानां जयतां-

ऽयन्तुघोषाः ॥ १० ॥ अस्म्माकमिन्द्रः समृतेषुद्ध्वजेष्ष्वस्म्माकंऽया ऽइषवस्ताजयन्तु ॥
अस्म्माकंव्वीराऽउत्तरेभवन्त्वस्म्माँ२ऽउदेवाऽअवताहवेषु ॥ ११ ॥ अमीषाञ्चित्तम्प्प्रति-
लोभयन्तीगृहाणाङ्गान्यप्प्वेपरेहि ॥ अभिप्प्रेहिनिर्द्दहहृत्सुशोकैरन्धेनामित्त्रास्तमसासचन्ताम्
॥१२॥ अवसृष्टापरापतशरव्व्येब्रह्मसꣳशिते ॥ गच्छामित्त्रान्प्प्रपद्यस्वमामीषाङ्कञ्चनोच्छिषः ॥
॥१३॥ प्प्रेताजयतानरऽइन्द्रोवꣳशर्म्मयच्छतु ॥ उग्ग्रावः सन्तुबाहवोनाधृष्ष्यायथासथ ॥१४॥
असौयासेनामरुतःपरेषामब्भ्यैतिनऽओजसास्पर्द्धमाना ॥ ताङ्गूहततमसापव्व्रतेनयथामीऽअ-
न्न्योऽअन्न्यन्नजानन् ॥१५॥ यत्त्रबाणाः सम्पतन्तिकुमाराविशिखाऽइव ॥ तन्नऽइन्द्रोबृह-
स्प्पतिरदितिःशर्म्मयच्छतुव्विश्श्वाहाशर्म्मयच्छतु ॥१६॥ मर्म्माणितेवर्म्मणाच्छादयामिसोम-
स्त्वाराजामृतेनानुवस्ताम् ॥ उरोर्व्वरीयोव्वरुणस्तेकृणोतुजयन्तन्त्वानुदेवामदन्तु ॥ १७ ॥

## ईशावास्यम्

॥ ईशावास्यमिदꣳसर्वंय्यत्किञ्चजगत्याञ्जगत् ॥ तेनत्यक्तेनभुञ्जी-
थामागृधःकस्यस्विद्धनम् ॥ १ ॥ कुर्वन्नेवेहकर्म्माणिजिजीविषेच्छतꣳसमाः ॥ एवन्त्वयिना-
न्न्यथेतोस्तिनकर्म्मलिप्प्यतेनरे ॥ २ ॥ असुर्य्यानामतेलोकाऽअन्धेनतमसावृताः ॥ ताँ२स्ते-

प्रेत्यापिगच्छन्तियेकेचात्महनोजनाः ॥ ३ ॥ अनेजदेकम्मनसोजवीयोनैनद्देवाऽआप्नुवन्पूर्व्व-
मर्शत् ॥ तद्धावतोन्न्यानत्त्येतितिष्ठत्तस्मिन्नपोमातरिश्वादधाति ॥ ४ ॥ तदेजतितन्नैज-
 तितद्दूरेतद्वन्तिके ॥ तदन्तरस्यसर्व्वस्यतदुसर्व्वस्यास्यबाह्यतः ॥५॥ यस्तुसर्व्वाणिभूतान्न्यात्म-
न्न्येवानुपश्यति ॥ सर्व्वभूतेषुचात्मानन्ततोनविचिकित्सति ॥ ६ ॥ यस्मिन्त्सर्व्वाणिभूता-
न्यात्मैवाभूद्विजानतः ॥ तत्रकोमोहःकःशोकऽएकत्त्वमनुपश्यतः ॥ ७ ॥ सपर्य्यगाच्छु-
क्रमकायमव्व्रणमस्नाविरꣳशुद्धमपापविद्धम् ॥ कविर्म्मनीषीपरिभूःस्वयम्भूर्य्याथातथ्यतो-
र्त्थान्व्यदधाच्छाश्वतीभ्यःसमाभ्यः ॥ ८ ॥ अन्धन्तमःप्रविशन्तियेऽसम्भूतिमुपासते ॥
ततोभूयऽइवतेतमोयऽउसम्भूत्याꣳरताः ॥ ९ ॥ अन्यदेवाहुःसम्भवादन्यदाहुरसम्भवात् ॥
इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १० ॥ सम्भूतिञ्चविनाशञ्चयस्तद्वेदोभयꣳसह ॥
विनाशेनमृत्युन्तीर्त्वासम्भूत्यामृतमश्नुते ॥ ११ ॥ अन्धन्तमःप्रविशन्तियेऽविद्यामुपासते ॥ 
ततोभूयऽइवतेतमोयऽउविद्यायाꣳरताः ॥ १२ ॥ अन्यदेवाहुर्विद्यायाऽअन्यदाहुरवि-
द्यायाः ॥ इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे ॥ १३ ॥ विद्याञ्चाविद्याञ्चयस्तद्वेदोभयꣳ

सह ॥ अविद्ययामृत्युन्तीर्त्वाविद्ययामृतमश्नुते ॥ १४ ॥ वायुरनिलममृतमथेदम्भस्मान्तꣳ
शरीरम् ॥ ॐ३॥ क्रतोस्मर ॥ क्लिबेस्मर ॥ कृतꣳस्मर ॥ १५॥ अग्नेनयसुपथारायेऽअ-
स्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंवि-
धेम ॥ १६ ॥ हिरण्मयेनपात्रेणसत्यस्यापिहितम्मुखम् ॥ योसावादित्येपुरुषःसोसावहम्
॥१७॥ ॐ३खम्ब्रह्म ॥ १८ ॥ ॥ ॥ ॥ ॥

## वायुसूक्तम् ॥
पीवोऽअन्नारयिवृधःसुमेधाश्वेतःसिषक्तिनियुतामभिश्रीः ॥ तेवा-
यवेसमनसोवितस्थुर्विश्वेन्नरःस्वपत्यानिचक्रुः ॥ २३ ॥ रायेनुयञ्जज्ञतूरोदसीमेरायेदेवी-
धिषणाधातिदेवम् ॥ अधवायुन्नियुतःसश्चतस्वाऽउतश्वेतंवसुधितिन्निरेके ॥ २४ ॥ आपो-
हयद्बृहतीर्विश्वमायन्गर्भन्दधानाजनयन्तीरग्निम् ॥ ततोदेवानाꣳसमवर्त्ततासुरेकःकस्मै-
४३ देवायहविषाविधेम ॥२५॥ यश्चिदापोमहिनापर्य्यपश्यद्दक्षन्दधानाजनयन्तीर्यज्ञम् ॥ योदे-
वेष्वधिदेवऽएकऽआसीत्कस्मैदेवायहविषाविधेम ॥२६॥ प्रयाभिर्यासिदाश्वाꣳसमच्छा-
नियुद्भिर्वायविष्टयेदुरोणे ॥ निनोरयिꣳसुभोजसंयुवस्वनिवीरङ्गव्यमश्व्यञ्चराधः ॥ २७ ॥

आनौनियुद्भिःशतिनींभिरध्वरहसंहस्रिणींभिरुपंयाहियज्ञम् ॥ वायोऽअस्मिन्त्सवनेमादयस्व
यूयम्पातस्वस्तिभिहसदानह ॥ २८ ॥ नियुत्वान्वायवागह्ययहशुक्रोऽअयामिते ॥ गन्तासि-
सुन्वतोगृहम् ॥२९॥ वायोशुक्रोऽअयामितेमध्वोऽअग्रन्दिविष्टिषु ॥ आयाहिसोमपीतयेस्पा-
र्होदेवनियुत्वता ॥३०॥ वायुरग्रेगायज्ञप्रीहसाकङ्गन्मनसायज्ञम् ॥ शिवोनियुद्भिःशिवाभिः ॥
॥ ३१ ॥ वायोयेतेसहस्रिणोरथासस्तेभिरागहि ॥ नियुत्वान्त्सोमपीतये ॥ ३२ ॥ एकयाच
दशभिश्चस्वभूतेद्वाभ्यामिष्टयेविहशतीच ॥ तिसृभिश्चवहसेत्रिहशताचनियुद्भिर्वायविह-
तावि्मुञ्च ॥३३॥ तववायवृतस्पतेत्वष्टुर्जामातरद्भुत ॥ अवाᳪस्यावृणीमहे ॥ ३४ ॥

## अग्निसूक्तम्

॥ हरिः ॐअस्याजरासोदमामरित्राऽअर्चद्धूमासोऽअग्नयःपावकाः॥
श्वितीचयःश्वात्रासोभुरण्यवोवनर्षदोवायवोनसोमाः ॥ १ ॥ हरयोधूमकेतवोवातजूताऽ
उपद्यवि ॥ यतन्तेवृथगग्नयः ॥ २ ॥ यजानोमित्रावरुणायजादेवाँ२॥ऽऋतम्बृहत् ॥ अग्ने-
यक्षिस्वन्दमम् ॥ ३ ॥ युक्ष्वाहिदेवहूतमाँ२॥ऽअश्वाँ२॥ऽअग्नेरथीरिव ॥ निहोतापूर्व्यः
सदह ॥ ४ ॥ द्वेविरूपेचरतहस्वर्थेऽअन्यान्या वत्समुपधापयेते ॥ हरिरन्यस्याम्भवति-

स्वधावान्छुक्रोऽअन्यस्यान्दृढशेसुवर्चाः ॥ ५ ॥ अयमिहप्रथमोधायिधातृभिर्होता-
यजिष्ठोऽअध्वरेष्वीड्यः ॥ यमप्नवानोभृगवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ ६ ॥
त्रीणिशतात्रीसहस्राण्यग्निन्त्रिꣳशच्चदेवानवचासपर्य्यन् ॥ औक्षन्घृतैरस्तृणन्बर्हिरस्माऽ
आदिद्धोतारन्न्यसादयन्त ॥ ७ ॥ मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वानरमृतऽआजा-
तमग्निम् ॥ कविꣳसम्राजमतिथिञ्जनानामासन्नापात्रञ्जनयन्तदेवाः ॥ ८ ॥ अग्निर्वृ-
त्राणिजङ्घनद्द्रविणस्युर्विपन्यया ॥ समिद्धःशुक्रऽआहुत ॥ ९ ॥ विश्वेभिःसोम्यम्मध्वग्नऽ
इन्द्रेणवायुना ॥ पिबामित्रस्यधामभिः ॥ १० ॥ आयादिषेनृपतिन्तेजऽआनट्शुचिरेतोनिषि-
क्तन्द्यौरभीके ॥ अग्निःशर्द्धमनवद्यंयुवानꣳस्वाध्यञ्जनयत्सूदयच्च ॥ ११ ॥ अग्नेशर्द्ध-
महतेसौभगायतवद्युम्नान्युत्तमानिसन्तु ॥ सञ्जास्पत्यꣳसुयममाकृणुष्वशत्रूयतामभि-
तिष्ठामहाꣳसि ॥ १२ ॥ त्वाꣳहिमन्द्रतममर्कशोकैर्ववृमहेमहिनःश्रोष्यग्ने ॥ इन्द्र-
न्त्वाशवसादेवतावायुम्पृणन्तिराधसानृतमाः ॥ १३ ॥ त्वेऽअग्नेस्वाहुतप्प्रियासःसन्तु-
सूरयः ॥ यन्तारोयेमघवानोजनानामूर्वान्दयन्तगोनाम् ॥ १४ ॥ श्रुधिश्रुत्कर्णवह्नि-

भिर्द्देवेभिरग्ग्नेसयावभिः ॥ आसीदन्तुबर्हिषिमित्रोऽअर्य्यमाप्प्रातर्य्यावाणोऽअद्ध्वरम् ॥ १५ ॥
विश्श्वेषामदितिर्य्यज्ञियानांविश्श्वेषामतिथिर्म्मानुषाणाम् ॥ अग्ग्निर्द्देवानामवऽआवृणानः
सुमृडीकोभवतुजातवेदाः ॥ १६ ॥ महोऽअग्ग्नेः समिधानस्यशर्म्मण्यनागामित्त्रेवरुणेस्वस्तये
श्रेष्ठेस्यामसवितुःसवीमनितद्देवानामवोऽअद्यावृणीमहे ॥ १७ ॥ ॥ ॥

**सूर्यसूक्तम्** ॥ विभ्राड्बृहत्पिबतुसोम्म्यम्मद्ध्वायुर्द्दधद्यज्ञपतावविह्रुतम् ॥ वात-
जूतोयोऽअभिरक्षतित्त्मनाप्प्रजाःपुपोषपुरुधाविराजति ॥३०॥ उदुत्त्यञ्जातवेदसन्देवंवहन्तिके-
तवः ॥ दृशेविश्श्वायसूर्य्यम् ॥ ३१ ॥ येनापावकचक्क्षसाभुरण्यन्तञ्जनाँ२॥ऽअनु ॥ त्वंवरु-
णपश्यसि ॥ ३२ ॥ दैव्यावद्ध्वर्यूऽआगतंरथेनसूर्य्यत्वचा ॥ मद्ध्वायज्ञंसमञ्जाथे ॥ तम्प्र-
त्नथायंवेनश्चित्रन्देवानाम् ॥३३॥ आनऽइडाभिर्विदथेसुशस्तिविश्श्वानरःसवितादेवऽएतु ॥
अपियथायुवानोमत्सथानोविश्श्वञ्जगदभिपित्वेमनीषा ॥ ३४ ॥ यदद्यकच्चवृत्रहन्नुदगाऽअभि-
सूर्य्य ॥ सर्व्वन्तदिन्द्रतेवशे ॥ ३५ ॥ तरणिर्विश्श्वदर्शतोज्ज्योतिष्कृदसिसूर्य्य ॥ विश्श्वमा-
भासिरोचनम् ॥ ३६ ॥ तत्सूर्य्यस्यदेवत्वन्तन्महित्वम्मध्याकर्त्तोर्विततंसञ्जभार ॥ यदेदयु-

क्रुहुरितं सधस्थादाद्राग्नीवासंस्तनुतेसिमस्म्मै ॥ ३७ ॥ तन्निमत्रस्यवरुणस्याभिचक्षेसू-
र्य्योरूपङ्कृणुतेद्योरुपस्थे ॥ अनन्तमन्न्यद्रुशदस्यपाजः कृष्णमन्न्यद्धरितः सम्भरन्ति ॥ ३८ ॥
वण्महाँ२॥ऽअसिसूर्य्यबडादित्त्यमहाँ२॥ऽअसि ॥ महस्तेसतोमहिमापनस्यतेद्धादेवमहाँ२॥ऽ
असि ॥ ३९ ॥ बट्सूर्य्यश्रवसामहाँ२॥ऽअसिसत्रादेवमहाँ२॥ऽअसि ॥ मह्नादेवानामसुर्य्यः
पुरोहितोविभुज्ज्योतिरदाब्भ्यम् ॥४०॥ श्रायन्तऽइवसूर्य्यंविश्वेदिन्न्द्रस्यभक्षत ॥ वसूनि-
जातेजनमानऽओजसाप्प्रतिभागन्नदीधिम ॥ ४१ ॥ अद्यादेवाऽउदितासूर्य्यस्यनिरंहसः
पिपृतानिरवद्यात् ॥ तन्नोमित्रोवरुणोमामहन्तामदितिः सिन्धुः पृथिवीऽउतद्यौः ॥ ४२ ॥
आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्त्यञ्च ॥ हिरण्ययेनसवितारथेनादेवोयातिभु-
वनानिपश्यन् ॥ ४३ ॥ ॥ ॥ ॥ ॥ ॥ ॥

**वरुणसूक्तम्** ॥ हरिः ॐ इमम्मेवरुणश्श्रुधीहवमद्याचमृडय ॥ त्वामवस्युराचके ॥१॥
तत्त्वायामिब्रह्मणावन्दमानस्तदाशास्तेयजमानोहविर्भिः ॥ अहेडमानोवरुणेहबोध्युरुशंस-
मानऽआयुः प्रमोषीः ॥२॥ त्वन्नोऽअग्नेवरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः॥ यजिष्ठोव-

अ० क० ह्नितमꣳशोशुचानोविश्वाद्वेषाꣳसिप्रमुमुग्ध्यस्मत् ॥३॥ सत्वन्नोऽअग्नेवमोभवोतीनेदिष्ठोऽ प्रदीपः
अस्याऽउषसोव्युष्टौ ॥ अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳसुहवोनऽएधि ॥ ४ ॥
।२५५। शन्नोवातः पवताꣳशन्नस्तपतुसूर्य्यः ॥ शन्नꣳकनिक्रदद्देवःपर्ज्जन्न्योऽअभिवर्षतु ॥ ५ ॥
वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोवरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनम-
सिवरुणस्यऽऋतसदनमासीद ॥ ६ ॥ वरुणऽप्राविताभुवन्मित्रोविश्वाभिरूतिभिः ॥ करता-
न्नꣳसुराधस ॥ ७ ॥ सवितावरुणोदधद्यजमानायदाशुषे ॥ आदत्तनमुचेर्व्वसुसुत्रामाबलमि
न्द्रियम् ॥ ८ ॥ वरुणꣳक्षत्रमिन्द्रियम्भगेनसविताश्रियम् ॥ सुत्रामायशसाबलन्दधानायज्ञ-
माशत ॥ ९ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

श्रीसूक्तम् ॥ ॐहिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम् ॥ चन्द्रांहिरण्मयींलक्ष्मीं
जातवेदोममावह ॥१॥ तांमऽआवहजातवेदोलक्ष्मीमनपगामिनीम् ॥ अस्यांहिरण्यंविन्देयं ।२५५।
गामश्वंपुरुषानहम् ॥२॥ अश्वपूर्वांरथमध्यांहस्तिनादप्रमोदिनीम् ॥ श्रियंदेवीमुपह्वयेश्रीर्मा
देवीर्जुषताम् ॥३॥ काँसोस्मितांहिरण्यप्राकारामार्द्रांज्वलन्तींतृप्तांतर्पयन्तीम् ॥ पद्मेस्थितांपद्मव-

णींतामिहोपंह्वयेश्रियम् ॥४॥ चन्द्रांप्रभासांयशसाज्वलन्तींश्रियंलोकेदेवजुष्टामुदाराम ॥ तां
पद्मनेमिंशरणमहंप्रपद्येअलक्ष्मीर्मेनश्यतांत्वांवृणोमि ॥ ५ ॥ आदित्यवर्णेतपसोधिजातोवनस्प-
तिस्तववृक्षोऽथबिल्वः ॥ तस्यफलानितपसानुदन्तुमायांतरायाश्चबाह्याऽअलक्ष्मीः ॥६॥ उपै-
तुमांदेवसखःकीर्तिश्चमणिनासह ॥ प्रादुर्भूतोसुराष्ट्रेस्मिन्कीर्तिंवृद्धिंददातुमे ॥७॥ क्षुत्पिपासा
मलांज्येष्ठामलक्ष्मींनाशयाम्यहम् ॥ अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् ॥ ८ ॥ गन्धद्वारां
दुराधर्षांनित्यपुष्टांकरीषिणीम् ॥ ईश्वरींसर्वभूतानांतामिहोपंह्वयेश्रियम् ॥९॥ मनसःकाममा
कूतिंवाचःसत्यमशीमहि ॥ पशूनांरूपमन्नस्यमयिश्रीःश्रयतांयशः ॥ १० ॥ कर्दमेनप्रजाभू-
तामयिसम्भ्रमकर्दम ॥ श्रियंवासयमेकुलेमातरंपद्ममालिनीम् ॥ ११ ॥ आपःसृजन्तुस्निग्धानि
चिक्लीतवसमेगृहे ॥ नीचदेवींमातरंश्रियंवासयमेकुले ॥१२॥ आर्द्रांपुष्करिणींपुष्टिंसुवर्णांहेममा-
लिनीम् ॥ सूर्यांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ १३ ॥ आर्द्रांयःकरिणींयष्टिंपिङ्गलांपद्ममा-
लिनीम् ॥ चन्द्रांहिरण्मयींलक्ष्मींजातवेदोममावह ॥ १४ ॥ तांमऽआवहजातवेदोलक्ष्मीमनप-
गामिनीम् ॥ यस्यांहिरण्यंप्रभूतिंगावोदास्योश्वान्विन्देयंपुरुषानहम् ॥ १५ ॥ यःशुचिःप्रयतो

 भूत्वाजुहुयादाज्यमन्वहम् ॥ सूक्तंपञ्चदशर्चञ्चश्रीकामःसततंजपेत् ॥ १६ ॥ सरसिजनिलये 
सरोजहस्तेधवलतरांशुकगन्धमाल्यशोभे ॥ भगवतिहरिवल्लभेमनोज्ञेत्रिभुवनभूतिकरिप्रसी-
 दमह्यम् ॥ १७ ॥ धनमग्निर्धनंवायुर्धनंसूर्योधनंवसुः ॥ धनमिन्द्रोबृहस्पतिर्वरुणंधनमश्विनौ-
॥१८॥ वैनतेयसोमंपिबसोमंपिबतुवृत्रहा ॥ सोमंधनस्यसोमिनोमह्यंददातुसोमिनः ॥ १९ ॥
न क्रोधोनचमात्सर्यंनलोभोनाशुभामतिः ॥ भवन्तिकृतपुण्यानांभक्तानांश्रीसूक्तंजपेत् ॥ २० ॥
पद्माननेपद्मऊरूपद्माक्षीपद्मसम्भवे ॥ तन्मेभजसिपद्माक्षियेनसौख्यंलभाम्यहम् ॥२१॥विष्णुप-
त्नींक्षमांदेवींमाधवींमाधवप्रियाम् ॥ विष्णुप्रियसखींदेवींनमाम्यच्युतवल्लभाम्॥२२॥महालक्ष्मी
चविद्महेविष्णुपत्नींचधीमहि ॥ तन्नोलक्ष्मीःप्रचोदयात् ॥२३॥ पद्माननेपद्मिनिपद्मपत्रेपद्मप्रियेप-
द्मदलायताक्षि ॥ विश्वप्रियेविश्वमनोनुकूलेत्वत्पादपद्मंमयिसन्निधत्स्व ॥ २४ ॥ आनन्दःकर्दमः
श्रीदश्चिक्लीतइतिविश्रुताः ॥ ऋषयःश्रियपुत्राश्चमयिश्रीर्देवीदेवता ॥२५॥ ऋणरोगादिदारिद्र्यं 
पापञ्चअपमृत्यवः ॥ भयशोकमनस्तापानश्यन्तुममसर्वदा ॥ २६ ॥ श्रीवर्चस्वमायुष्यमारो-
ग्यमाविधाच्छोभमानंमहीयते ॥ धनंधान्यंपशुंबहुपुत्रलाभंशतसंवत्सरंदीर्घमायुः ॥२७॥

**मण्डलब्राह्मणम् ॥** ॐ यदेतन्मण्डलंतपतितन्महदुक्थन्ताऽऋचःसऽऋचांलोकोथ
यदेतदर्चिर्दीप्यतेतन्महाव्रतंतानिसामानिससाम्नाँल्लोकोथयऽएषऽएतस्मिन्मण्डलेपुरुषःसोग्नि-
स्तानियजूᳬंषिसयजुषांल्लोकः ॥१॥ सैषात्रय्येवविद्यातपतितद्धैतदप्यविद्वाᳬंसऽआहुस्त्रयीवाऽ
एषाविद्यातपतीतिवाग्घैवतत्पश्यन्तीवदति ॥२॥ सऽएषऽएवमृत्युर्यऽएषऽएतस्मिन्मण्डलेपुरु-
षोथैतदमृतंयदेतदर्चिर्दीप्यतेतस्मान्मृत्युर्नम्रियतेमृतेह्यन्तस्तस्मादुनदृश्यतेमृतेह्यन्तः ॥ ३ ॥
तदेषश्लोकोभवत्यन्तरंमृत्योरमृतमित्यवरᳬंह्येतन्मृत्योरमृतमृत्यावमृतमाहितमित्येतस्मिन्हि
पुरुषऽएतन्मण्डलम्प्रतिष्ठितंतपतिमृत्युर्विवस्वन्तंवस्तऽइत्यसौवाऽआदित्योविवस्वानेषह्यहोरा-
त्रेविवस्तेतमेषवस्तेसर्वतोह्येनेनपरिवृतोमृत्योरात्माविवस्वतीत्येतस्मिन्हिमण्डलऽएतस्यपुरुष-
स्यात्मैतदेषश्लोकोभवति ॥ ४ ॥ तयोर्वाऽएतयोरुभयोरेतस्यचार्चिषऽएतस्यचपुरुषस्यैतन्म-
ण्डलंप्रतिष्ठातस्मान्महदुक्थम्परस्मैनशᳬंसेन्नेदेतांप्रतिष्ठांछिनदाऽइत्येताᳬं हसप्रतिष्ठांछिन्ते
योमहदुक्थंपरस्मैशᳬंसतितस्मादुक्थशसम्भूयिष्ठंपरिचक्षतेप्रतिष्ठाछिन्नोहिभवतीत्याधिदेवतम्
॥ ५ ॥ अथाधियज्ञंयदेतन्मण्डलंतपत्ययᳬंसरुक्मोथयदेतदर्चिर्दीप्यतऽइदंतत्पुष्करपर्णमापो-

अ० क० होता ऽ आपःपुष्करपर्णमथय ऽ एष ऽ एतस्मिन्मण्डलेपुरुषोयमेवसयोयꣳहिरण्मयः पुरुषस्तदे प्रदीपः
तदुवैतत्रयꣳसंस्कृत्येहोपधत्तेतद्यज्ञस्यैवानुस ꣳ स्थामूर्द्धमुत्क्रामतितदेतमप्येतिय ऽ एषतपति-
।२५७। तस्मादग्निन्नाद्रियेतपरिहन्तुमसुत्रह्येषतदाभवतीत्यु ऽ एवाधियज्ञम् ॥ ६ ॥ अथाध्यात्मं
यदेतन्मण्डलंतपतियश्चैषरुक्म ऽ इदंतच्छुक्लमक्षन्नथयदेतदर्चिर्दीप्यतेयच्चैतत्पुष्करपर्णमिदंतत्कृ
ष्णमक्षन्नथय ऽ एष ऽ एतस्मिन्मण्डलेपुरुषोयश्चैषहिरण्मयःपुरुषोयमेवसयोयंदक्षिणेक्षन्पुरुषः ॥
॥ ७ ॥ स ऽ एष ऽ एवलोकंपृणतामेषसर्वोग्निरभिसम्पद्यतेतस्यैतन्मिथुनंयोयꣳसव्येक्षन्पुरुषोर्द्धमुहै-
तदात्मनोयन्मिथुनंयदावैसहमिथुनेनाथसर्वोथकृत्स्नःकृत्स्नतायैतद्यत्तेद्वेभवतोद्वन्द्वꣳहिमिथुन-
म्प्रजननंतस्माद्द्वेद्वेलोकंपृणे ऽ उपधीयेतेतस्मादुद्वाभ्यांद्वाभ्यांचितिम्प्रणयन्ति ॥८॥ स ऽ एष ऽ एवे-
न्द्रःयोयंदक्षिणेक्षन्पुरुषोथेयमिन्द्राणीताभ्यांदेवा ऽ एतांविधृतिमकुर्वन्नासिकान्तस्माज्जायाया-
अन्तेनाश्नीयाद्वीर्य्यवान्न्हास्माज्जायतेवीर्य्यवन्तमुहसाजनयतियस्या ऽ अन्तेनाश्नाति ॥ ९ ॥ ।१५७।
तदेतद्देवव्रतꣳराजन्यबन्धवोमनुष्याणामनुतमांगोपायन्तितस्मादुतेषुवीर्य्यवाञ्जायतेमृतव्राकाव-
यसाꣳसाक्षिप्रश्येनंजनयति ॥ १० ॥ तौहृदयस्याकाशंप्रत्यवेत्यमिथुनीभवतस्तौयदामि-

थुनस्यान्तङ्गच्छतोथहैतत्पुरुषः स्वपितितद्यथाहैवेदम्मानुषस्यमिथुनस्यान्तङ्गत्वासंविद ऽ इवभव-
त्येवꣳहैवैतदसंविदऽइवभवतिदैवꣳह्येतन्मिथुनम्परमोह्येषऽआनन्दः ॥ ११ ॥ तस्मादेवंवित्स्व-
प्यात्लोक्यꣳहैतेऽएवन्देवतेमिथुनेनप्रियेणधाम्नासमर्द्धयतितस्मादुहस्वपन्तन्धुरेवनबोधयेन्नेदेते-
देवतेमिथुनीभवन्त्यौहिनसानीतितस्मादुहैतत्सुखुपुषः श्लेष्मणमिवमुखम्भवत्येतेऽएवतद्देवतेरे-
तः सिञ्चतस्तस्माद्रेतसऽइदꣳसर्वꣳसम्भवतियदिदङ्किञ्च ॥ १२ ॥ सऽएषऽएवमृत्युर्यऽएषएत
स्मिन्मण्डलेपुरुषोयश्चायन्दक्षिणेक्षन्पुरुषस्तस्यहैतस्यहृदयेपादावतिहतौतौहैतदाछिद्योत्क्राम-
तिसयदोत्क्रामत्यथहैतत्पुरुषोम्रियतेतस्मादुहैतत्प्रेतमाहुराच्छेद्यस्येति ॥ १३ ॥ एषऽउऽएवप्राण
ऽएषहीमाः सर्वाः प्रजाः प्रणयतितस्यैतेप्राणाः स्वाः सयदास्वपित्यथैनमेतेप्राणाः स्वाऽअपियन्ति-
तस्मात्स्वाप्ययः स्वाप्ययोहवैतꣳस्वप्नऽइत्याचक्षतेपरोक्षम्परोक्षकामाहिदेवाः ॥ १४ ॥ सऽएतैः
सुप्तोनकस्यचनवेदनमनसासङ्कल्पयतिनवाचान्नस्यरसंविजानातिनप्राणेनगन्धंविजानातिनच-
क्षुषापश्यतिनश्रोत्रेणशृणोत्येतꣳह्येतेतदपीताभवन्तिसऽएषऽएकः सन्प्रजासुबहुधाव्याविष्ट-
स्तस्मादेकासतीलोकम्पृणासर्वमास्मिन्नुविभवत्यथयदेकऽएवतस्मादेका ॥१५॥ तदाहुरेकोमृत्यु-

अ०क० र्वैहव ऽ इत्येकश्चबहवश्चेतिहब्रूयाद्यदहासावमुत्रतेनैकोथयदिहप्रजासुबहुधाऽव्याविष्टस्तेनोबहवः प्रदीपः
।१६। तदाहुःऽअन्तिकेमृत्युर्दूराऽइत्यन्तिकेचदूरेचेतिहब्रूयाद्यदहायमिहाध्यात्मन्तेनान्तिकेथयद्
।२५८। सावमुत्रतेनोदूरे ॥१७॥तदेषश्लोकोभवत्यन्येभात्यपश्रितोरसानाꣳसंक्षरेमृतऽइतियदेतन्मण्ड-
लंतपतितदन्नमथयऽएष ऽएतस्मिन्मण्डलेपुरुषःसोत्तास ऽएतस्मिन्नन्नेपाश्रितोभातीत्यधिदेवतम्
॥१८॥ अथाध्यात्मानइदमेवशरीरमन्नमथयोयन्दक्षिणेक्षन्पुरुषःसोत्तासऽएतस्मिन्नन्नेपाश्रितो
भाति ॥१९॥ तमेतमग्निरित्यध्वर्यवऽउपासतेयजुरित्येषहीदꣳसर्वंयुनक्तिसामेतिछन्दोगाऽएतस्मि
न्हीदꣳसर्वꣳसमानमुक्थमितिबह्वृचाऽएषहीदꣳसर्वमुत्थापयतियातुरितियातुविदऽएतेनहीदꣳस-
र्वंयतंविषमितिसर्पाःसर्पऽइतिसर्पविद ऽऊर्गितिदेवारयिरितिमनुष्यामायेत्यसुराःस्वधेतिपित-
रोदेवजनऽइतिदेवजनविदोरूपमितिगन्धर्वागन्धऽइत्यप्सरसस्तंयथायथोपासतेतदेवभवतितद्वै-
नानभूत्वावतितस्मादेनमेवंवित्सर्वैरेवैतैरुपासीतसर्वꣳहैतद्भवतिसर्वꣳहैनमेतद्भूत्वावति ॥ २० ॥ ।२५८।
सऽएषत्रीष्टकोग्निर्ऋगेकायजुरेकासामैकातद्याङ्काश्चात्रर्चोपदधातिरुक्मऽएवतस्याऽआयतनम-
थयांयजुषापुरुषऽएवतस्याऽआयतनमथयाꣳसाम्नापुष्करपर्णमेवतस्याऽआयतनमेवंत्रीष्टकः

॥२१॥ तेवाऽएतेऽउभेऽएषचरुक्मऽएतच्चपुष्करपर्णमेतम्पुरुषमपीतऽउभेह्यृक्सामेयजुरपीतऽए
वम्वेकेष्टकः ॥ २२ ॥ सऽएषऽएवमृत्युः॑यऽएषऽएतस्मिन्मण्डलेपुरुषोयश्चायंदक्षिणेक्षन्पुरुषःस
ऽएषऽएवंविदऽआत्माभवतिसयदेवंविदस्माँल्लोकात्प्रैत्यथैतमेवात्मानमभिसम्भवतिसोमृतोभ-
वतिमृत्युर्ह्यस्यात्माभवति ॥२३॥ तेनवाऽइदमग्रेसदासीन्नैवसदासीत् ॥ मण्डलब्राह्मणम् ॥

'तदाहुः[1]'—किञ्छन्दःकादेवताग्नेःशिरऽइतिगायत्रीछन्दोऽग्निर्देवताशिरः ॥ १ ॥ किञ्छ-
न्दःकादेवताग्रीवाऽइत्युष्णिक्छन्दःसवितादेवताग्रीवाः ॥ २॥ किञ्छन्दःकादेवतानूकमितिबृ-
हतीछन्दोबृहस्पतिर्देवतानूकम् ॥३॥ किञ्छन्दःकादेवतापक्षावितिबृहद्रथन्तरेछन्दोद्यावापृथि-
वीदेवतेपक्षौ ॥४॥ किञ्छन्दःकादेवतामध्यमितित्रिष्टुप्छन्दऽइन्द्रोदेवतामध्यम् ॥५॥ किञ्छ-
न्दःकादेवताश्रोणीऽइतिजगतीछन्दऽआदित्योदेवताश्रोणी ॥६॥ किञ्छन्दःकादेवतायस्मादि-
४४ दम्प्राणाद्रेतःसिच्यतऽइत्यतिछन्दश्छन्दःप्रजापतिर्देवता ॥ ७ ॥ किञ्छन्दःकादेवतायोयमवा
ङ्प्राणऽइतियज्ञायज्ञियंछन्दोवैश्वानरोदेवता ॥ ८ ॥ किञ्छन्दःकादेवतोरूऽइत्यनुष्टुप्छन्दोवि-

१ तदाहुरित्यावत्र लिखितं ब्राह्मणद्वयं केचित्पठन्ति केचिन्न ॥

 श्वेदेवादेवतोरू ॥९॥ किञ्छन्दःकादेवताष्ठीवन्तावितिपङ्क्तिश्छन्दोमरुतोदेवताष्ठीवन्तौ ॥१०॥ 
छिञ्छन्दःकादेवताप्रतिष्ठेऽइतिद्विपदाछन्दोविष्णुर्देवताप्रतिष्ठे ॥ ११ ॥ किञ्छन्दःकादेवताप्रा-
 णाऽइतिविश्छन्दःछन्दोवायुर्देवताप्राणाः ॥१२॥ किञ्छन्दःकादेवतानातिरिक्तानीतिन्यूनाक्ष-
राछन्दऽआपोदेवतानातिरिक्तानिसैषात्मविद्यैवैतन्मयोहैवैतादेवता ऽएतमात्मानमभिसम्भवति
नहात्रान्यालोक्यतायाऽआशीरस्ति ॥१३॥ धीरोहशातपर्णेयः ॥ ब्राह्मणम् ॥

ॐत्रयंवाऽइदन्नामरूपंकर्मतेषान्नाम्नांवागित्येतदेषामुक्थमतोहिसर्वाणिनामान्युत्तिष्ठ
न्त्येतदेषाᳪसामैतद्धिसर्वैर्नामभिःसममेतदेषांब्रह्मैतद्धिसर्वाणिनामानिबिभर्त्ति ॥ १ ॥ 'अथ
रूपाणाम्'—चक्षुरित्येतदेषामुक्थमतोहिसर्वाणिरूपाण्युत्तिष्ठन्त्येतदेषाᳪसामैतद्धिसर्वैरूपैःस-
ममेतदेषांब्रह्मैतद्धिसर्वाणिरूपाणिबिभर्ति ॥ २ ॥ 'अथकर्मणाम'—आत्मेत्येतदेषामुक्थमतोहि
सर्वाणिकर्माण्युत्तिष्ठन्त्येतदेषाᳪसामैतद्धिसर्वैः कर्म्मभिःसममेतदेषांब्रह्मैतद्धिसर्वाणिकर्म्माणि- 
बिभर्त्तितदेतत्त्रयᳪसदेकमयमात्मात्मोऽएकःसन्नेतत्त्रयंतदेतदमृतᳪसत्येनछन्नंप्राणोवाऽअमृतं
नामरूपेसत्यन्ताभ्यामयंप्राणश्छन्नः ॥ 'ब्राह्मणम्'॥३॥ 'दृप्तबालाकिर्हानूचानोगार्ग्यऽआस'—

भूमिरन्तरिक्षंद्यौरिति ॥ अष्टावक्षराण्यष्टाक्षरꣳहवाऽएकम् ॥ गायत्र्यैपदमेतदुहास्याऽएतत्स यावदेषुलोकेषुतावद्धजयतियोस्याऽएतदेवंपदंवेद ॥१॥ ऋचोयजूꣳषिसामानीत्यष्टावक्षराण्यष्टाक्षरꣳहवाऽ एकंगायत्र्यैकपदमेतदुहैवास्याऽएतत्सयावतीयंत्रयीविद्यातावद्धजयतियोस्या ऽ एतदेवंपदंवेद ॥ २ ॥ प्राणोऽपानोव्यानऽइत्यष्टावक्षराण्यष्टाक्षरꣳहवाऽएकंगायत्र्यैपदमेतदुहैवास्याऽएतत्सयावदिदंप्राणितावद्धजयतियोस्याऽएतदेवंपदंवेद ॥३॥ अथास्याऽएतदेवतुरीयं दर्शतंपदंपरोरजायऽएषतपतियद्वैचतुर्थंतत्तुरीयंदर्शतंपदमितिददृशऽइवह्येषपरोरजाऽइतिसर्वमु ह्येषरजऽउपर्युपरितपत्येवꣳहैवश्रियायशसातपतियोस्याऽएतदेवंपदंवेद ॥ ४ ॥ सैषागायत्र्येतस्मिंस्तुरीयेदर्शतेपदेपरोरजसिप्रतिष्ठिता ॥ तद्वैतत्सत्येप्रतिष्ठिताचक्षुर्वैसत्यंचक्षुर्हिवैसत्यंतस्माद्यदिदानीन्द्वौविवदमानावेयातामहमद्राक्षमहमश्रौषमितियऽ एवंब्रूयादहमद्राक्षमितितस्माऽएवश्रद्दध्याम ॥५॥ तद्वैतत्सत्यंबलेप्रतिष्ठितम् ॥ प्राणोवैबलंतत्प्राणेप्रतिष्ठितंतस्मादाहुर्बलꣳसत्यादोजीयऽइत्येवम्वेषागायत्र्यध्यात्मंप्रतिष्ठिता ॥ ६ ॥ 'साहैषागयांस्तत्रे'–प्राणावैगयास्तत्प्राणांस्तत्रेतद्यद्गयांस्तत्रेतस्माद्गायत्रीनामसयामेवामूमन्वाहैषैवसासयस्माऽअन्वाहतस्यप्राणां

त्रायते ॥७॥ 'ताꣳहैके'—सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूमऽइतिनतथाकुर्याद्गा-
यत्रीमेवानुब्रूयाद्यदिहवाऽअपिबह्वीवप्रतिगृह्णातिनहैवतद्गायत्र्याऽएकञ्चनपदंप्रति ॥ ८ ॥ सयऽ
इमांस्त्रीँल्लोकान्पूर्णान्प्रतिगृह्णीयात् ॥ सोस्माऽएतत्प्रथमम्पदमाप्नुयादथयावतीयन्त्रयीविद्या
यस्तावत्प्रतिगृह्णीयात्सोस्याऽएतद्द्वितीयम्पदमाप्नुयादथयावदिदंप्राणियस्तावत्प्रतिगृह्णीयात्सो
स्याऽएतत्तृतीयम्पदमाप्नुयादथास्याऽएतदेवतुरीयंदर्शतंपदंपरोरजाय॥एषतपतिनैवकेनचना-
प्यंकतऽउएतावत्प्रतिगृह्णीयात् ॥९॥ 'तस्याउपस्थानम्'—(उत्थाय)—गायत्र्यस्येकपदीद्विपदी
त्रिपदीचतुष्पद्यपदसिनहिपद्यसे ॥ नमस्तेतुरीयायदर्शतायपदायपरोरजसेसावदोमाप्रापदिति
यंद्विष्यादसावस्मैकामोमासमर्द्धीतिवानहैवास्मैसकामःसमृध्यतेयस्माऽएवमुपतिष्ठतेहमदꣳमा
पमितिवा ॥१०॥ 'एतद्धवैतज्जनकोवैदेहोबुडिलमाश्वतराश्विमुवाच—यन्नुहोतद्गायत्रीविद्ब्रूथाऽ
अथकथꣳहस्तीभूतोवहसीतिमुखꣳह्यस्याःसम्राण्णविदांचकारेतिहोवाच ॥११॥ तस्याऽअग्नि-
रेवमुखम् ॥ यदिहवाऽअपिबह्वीवाग्नावभ्यादधतिसर्वमेवतत्सन्दहत्येवꣳहैवैवंविद्यद्यपिबह्वीवपापं

करोतिसर्वमेवतत्संसायशुद्धःपूतोऽजरोऽमृतःसम्भवति ॥१२॥ ब्राह्मणम् ॥ श्वेतकेतुर्हवाऽआ-
रुणेयः ॥ प्रदक्षिणीकृत्यनमस्कृत्योपविशेत् ॥१३॥ इतिमण्डलब्राह्मणम् ॥ ॥ ॥

## निर्ऋतिसूक्तम् ॥

असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ॥
अन्यमस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ॥ १ ॥ नमःसुतेनिर्ऋतेतिग्मतेजो-
यस्मयँविचृताबन्धमेतम् ॥ यमेनत्वंयम्यासंविदानोत्तमेनाकेऽअधिरोहयैनम् ॥ २ ॥
यस्यास्तेघोरऽआसञ्जुहोम्येषाम्बन्धानामवसर्जनाय ॥ यान्त्वाजनोभूमिरितिप्रमन्दतेनि-
र्ऋतिन्त्वाहम्परिवेदविश्वतः ॥ ३ ॥ यन्तेदेवीनिर्ऋतिराबबन्धपाशङ्ग्रीवास्वविचृत्यम् ॥
तन्तेविष्याम्यायुषोनमध्यादथैतम्पितुमद्धिप्रसूतः ॥ नमोभूत्यैयेदञ्चकार ॥ ४ ॥

## पवमानसूक्तम् ॥

पुनन्तुमापितरःसोम्यासःपुनन्तुमापितामहाःपुनन्तुप्रपिता-
महाःपवित्रेणशतायुषापुनन्तुमापितामहाःपुनन्तुप्रपितामहाः ॥ पवित्रेणशतायुषाविश्व-
मायुर्व्यश्नवै ॥ १ ॥ अग्नऽआयूँषिपवसऽआसुवोर्ज्जमिषञ्चनः ॥ आरेबाधस्वदुच्छुनाम्
॥ २ ॥ पुनन्तुमादेवजनाःपुनन्तुमनसाधियः ॥ पुनन्तुविश्वाभूतानिजातवेदःपुनीहिमा

॥३॥ पवित्रेणपुनीहिमाशुक्रेणदेवदीद्यत् ॥ अग्नेकत्वाक्रतूँ२॥ रनु ॥ ४ ॥ यत्तेपवित्रमर्च्चिष्यग्नेविततमन्तरा ॥ ब्रह्मतेनपुनातुमा ॥ ५ ॥ पवमानःसोऽअद्यनःपवित्रेणविचर्षणिः ॥ यःपोतासपुनातुमा ॥६॥ उभाभ्यान्देवसवितःपवित्रेणसवेनच ॥ माम्पुनीहिविश्श्वतः ॥७॥ वैश्श्वदेवीपुनतीदेव्यागाद्यस्यामिमाबह्व्यस्तन्वोवीतपृष्ठाः ॥ तयामदन्तःसधमादेषुवयठ्ठस्यामपतयोरयीणाम् ॥ ८ ॥ ॥ ॥ ॥ ॥ ॥

## विष्णुसूक्तम्

॥ युञ्जतेमनऽउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्श्वितः ॥ विहोत्रादधेवयुनाविदेकऽइन्मही देवस्यसवितुःपरिष्टुतिःस्वाहा ॥ १ ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ॥ समूढमस्यपाठ्ठसुरेस्वाहा ॥ २ ॥ इरावतीधेनुमतीहिभूतःसूयवसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्थपृथिवीमभितोमयूखैःस्वाहा ॥३॥ देवश्रुतौदेवेष्वाघोषतम्प्राचीप्रेतमध्वरङ्कल्पयन्तीऽऊर्ध्वंयज्ञन्नयतम्मािजिह्वरतम् ॥ स्वङ्गोष्ठमावदतन्देवीदुर्य्येऽआयुर्मानिर्वादिष्टम्प्रजाम्मानिर्वादिष्टमत्ररमेथांवर्ष्मन्पृथिव्याः ॥ ४ ॥ विष्णोर्नुकंवीर्य्याणिप्रवोचंयःपार्थिवानिविममेरजाठ्ठसि ॥ योऽअस्कभायदुत्तरठ्ठसधस्थंविचक्रमाणस्त्रेधोरु-

गायेविष्णवेत्वा ॥५॥ दिवोवाविष्णऽउतवापृथिव्यामहोवाविष्णउरोरन्तरिक्षात् ॥ उभाहिहस्तावसुनापृणस्वाप्रयच्छदक्षिणादोतसव्याद्विष्णवेत्वा ॥ ६ ॥ प्रतद्विष्णुस्तवतेवीर्येणमृगोन भीमःकुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेष्वधिक्षियन्तिभुवनानिविश्वा ॥ ६ ॥ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिविष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ ७ ॥

**सर्पसूक्तम्** ॥ नमोस्तुसर्पेभ्योयेकेचपृथिवीमनु॥येऽअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः॥१॥ याऽइषवोयातुधानानाञ्येवावनस्पतीँ १ रनु ॥ येवावटेषुशेरतेतेभ्यःसर्पेभ्यो नमः।२। येवामीरोचनेदिवोयेवासूर्यस्यरश्मिषु॥येषामप्सुसदस्कृतन्तेभ्यःसर्पेभ्योनमः।३।

**शान्तिसूक्तम्** ॥ हरिःॐऋचंवाचम्प्रपद्येमनोयजुःप्रपद्येसामप्राणम्प्रपद्येचक्षुःश्रोत्रम्प्रपद्ये॥ वागोजःसहौजोमयिप्राणापानौ ॥१॥ यन्मेछिद्रञ्चक्षुषोहृदयस्यमनसोवातितृण्णम्बृहस्पतिर्म्मेतद्दधातु ॥ शन्नोभवतुभुवनस्ययस्पतिः ॥ २ ॥ भूर्भुवःस्वः तत्सवितुर्वरेण्यम्भर्गोदेवस्यधीमहि ॥ धियोयोनःप्रचोदयात् ॥ ३ ॥ कयानश्चित्रऽआभुवदूती सदावृधःसखा ॥ कयाशचिष्ठयावृता ॥ ४ ॥ कस्त्वासत्योमदानाम्मंहिष्ठोमत्सदन्धसः ॥

अ०क० दृढाचिद्रुजेवसु ॥ ५ ॥ अभीषुणःसखीनामविताजरितृणाम् ॥ शतम्भवास्यूतिभिः प्रदीपः
॥ ६ ॥ कयात्वन्नऽऊत्याभिप्रमन्दसेवृषन् ॥ कयास्तोतृभ्यऽआभर ॥ ७ ॥ इन्द्रो-
।२६२। विश्वस्यराजति ॥ शन्नोऽअस्तुद्विपदेशञ्चतुष्पदे ॥ ८ ॥ शन्नोमित्रःशंवरुणःशन्नोभवत्व-
र्य्यमा ॥ शन्नऽइन्द्रोबृहस्पतिःशन्नोविष्णुरुरुक्रमः ॥ ९ ॥ शन्नोवातःपवताꣳशन्नस्तप-
तुसूर्य्यःशन्नःकनिक्रदद्देवःपर्ज्जन्योऽअभिवर्षतु ॥ १० ॥ अहानिशम्भवन्तुनःशꣳरात्रीः
प्रतिधीयताम् ॥ शन्नऽइन्द्राग्नीभवतामवोभिःशन्नऽइन्द्रावरुणारातहव्या ॥ शन्नऽइन्द्रा-
पूषणावाजसातौशमिन्द्रासोमासुवितायशंय्योः ॥ ११ ॥ शन्नोदेवीरभिष्टयऽआपोभव-
न्तुपीतये ॥ शंय्योरभिस्रवन्तुनः ॥ १२ ॥ स्योनापृथिविनोभवानृक्षरानिवेशनी ॥
यच्छानःशर्म्मसप्रथाः ॥ १३ ॥ आपोहिष्ठामयोभुवस्तानऽऊर्ज्जेदधातन ॥ महेरणायच-
क्षसे ॥ १४ ॥ योवःशिवतमोरसस्तस्यभाजयतेहनः ॥ उशतीरिवमातरः ॥१५॥ तस्माऽ ।२६२।
अरङ्गमामवोयस्यक्षयायजिन्वथ ॥ आपोजनयथाचनः ॥ १६ ॥ द्यौःशान्तिरन्तरिक्षꣳ
शान्तिःपृथिवीशान्तिरापःशान्तिरोषधयःशान्तिः ॥ वनस्पतयःशान्तिर्विश्वेदेवाःशान्ति-

ब्र्ह्मशान्तिःसर्व्वꣳशान्तिःशान्तिरेवशान्तिःसामाशान्तिरेधि ॥ १७ ॥ दृतेदृꣳहमामित्र-
स्यमाचक्षुषासर्व्वाणिभूतानिसमीक्षन्ताम् ॥ मित्रस्याहञ्चक्षुषासर्व्वाणिभूतानिसमीक्षे ॥ मित्र-
स्यचक्षुषासमीक्षामहे ॥ १८ ॥ दृतेदृꣳहमा ॥ ज्ज्योक्तेसन्दृशिजीव्यासञ्ज्योक्तेसन्दृशिजी-
व्यासम् ॥ १९ ॥ नमस्तेहरसेशोचिषेनमस्तेऽअस्त्वर्च्चिषे ॥ अन्न्याँस्तेऽअस्म्मत्तपन्तुहेतयः
पावकोऽअस्म्मब्भ्यꣳशिवोभव ॥ २० ॥ नमस्तेऽअस्तुविद्युतेनमस्तेस्तनयित्नवे ॥ नमस्तेभ-
गवन्नस्तुयतःस्वः समीहसे ॥ २१ ॥ यतोयतःसमीहसेततोनोऽअभयङ्कुरु ॥ शन्नः कुरु-
प्रजाब्भ्योभयन्नःपशुब्भ्यः ॥ २२ ॥ सुमित्रियानऽआपऽओषधयःसन्तुदुर्म्मित्रियास्तस्म्मै
सन्तुयोस्म्मान्द्वेष्टियञ्चवयन्द्विष्म्मः ॥ २३ ॥ तच्चक्षुर्द्देवहितम्पुरस्ताच्छुक्क्रमुच्चरत् ॥ पश्ये-
मशरदः शतञ्जीवेमशरदः शतꣳशृणुयामशरदः शतम्प्रब्ब्रवामशरदः शतमदीनाःस्यामश-
रदः शतम्भूयश्चशरदः शतात् ॥ २४ ॥ ॥ ॥ ॥

॥ इति सूक्तसंग्रहः ॥

## ॥ पृथक् पृथक् कर्मसुविनियुक्तानां सूक्तानां प्रतीकान्यभिधानानि ॥

### ॥ एकादशाहेसूक्तानि ॥

१ ब्रह्मसूक्तम्–ॐतेजोसि० अ० २२
२ विष्णुसूक्तम्–ॐसहस्रशीर्षा० अ० ३१
३ रुद्रसूक्तम्–ॐनमस्ते० अ० १६
४ यमसूक्तम्–ॐअपेतः अ० ३५
५ तत्पुरुषसूक्तम्–ॐतदेवाग्नि० अ० ३२

### ॥ सपिण्डीकरणेमहालयादिश्राद्धेसूक्तानि ॥

१ राक्षोघ्नसूक्तम्–ॐकृणुष्वपाजः० मंत्राः ५ अ० १३
अन्येराक्षोघ्नमंत्राः–रक्षोहण मित्यादयः अ० ५
२ पितृसूक्तम्–ॐउदीरता०मंत्राः १२ अ० १९
३ पुरुषसूक्तम्–ॐसहस्रशीर्षा०मं० १६ अ० ३१
४ इन्द्रसूक्तम्–ॐआशुः०मं० १७ अ० १७
(अन्यानि=पिण्डब्राह्मणादीनितथाचवृद्धयाज्ञवल्क्यः–पुरुषसूक्तंयजुषांपिण्डब्राह्मणशान्त्यर्थंपितृस्तवंचपश्चैवगायत्रींमधुब्राह्मणम् ॥

### ॥ पुत्तलविधानेसूक्तानि ॥

१ राक्षोघ्नसूक्तम्–राक्षोघ्नमंत्राः (रक्षोहणमित्यादि)
२ ॐईशावास्य० अ० ४०

### ॥ सूतिकारजस्वलाविधानेसूक्तानि ॥

१ विष्णुसूक्तम्–ॐसहस्रशीर्षा०मंत्राः १६ अ० ३१
२ वायुसूक्तम्–ॐपीवोऽन्ना०मं० १२ अ० २७
३ अग्निसूक्तम्–ॐअस्याजरासः०मं० १७ अ० ३३
४ सूर्यसूक्तम्–ॐविभ्राट्०मं० १७ अ० ३३
५ वरुणसूक्तम्–ॐइमम्मेतिचत्वारः अ० २१
वरुणस्योत्तम्भनमितिपश्च
६ यमसूक्तम्–ॐअपेतः० अ० ३५ ।२६३।

### ॥ पश्चकविधानेसूक्तानि ॥

१ श्रीसूक्तम्–ॐहिरण्यवर्णां०
२ सूर्यसूक्तम्–ॐविभ्राट्०

३ मण्डलब्राह्मणम्–ॐयदेतन्मण्डलम्० ब्राह्मण २
४ राक्षोघ्नसूक्तम्–ॐकृणुष्वपाजः० अ० १३
५ रुद्रसूक्तम्–ॐनमस्ते० अ० १६
६ शान्तिसूक्तम्–ॐऋचंवाचं० अ० ३६

## ॥ नीलोद्वाहेसूक्तानि ॥

१ श्रीसूक्तम्–ॐहिरण्यवर्णां०
२ सूर्यसूक्तम्–विभ्राट्० अ० ३३
३ मंडलब्राह्मणम्–ॐयदेतन्मडलंमित्यादि
४ राक्षोघ्नसूक्तम्–ॐकृणुष्वपाजः ( रक्षोहणमित्यादि )
५ रुद्रसूक्तम्–ॐनमस्ते० अ० १६
६ शान्तिसूक्तम्–ॐऋचंवाचं० अ० ३६

## ॥ नारायणबलिकरणेसूक्तानि ॥

" पञ्चदेवतानांतर्पणम् " तर्पणमंत्रास्तुएकादशाह प्रयोगेद्रष्टव्याः ॥

१ ब्रह्मसूक्तम्–ॐतेजोसि०
२ विष्णुसूक्तम्–ॐसहस्रशीर्षा०
३ रुद्रसूक्तम्–ॐनमस्ते०
४ यमसूक्तम्–ॐअपेतः
५ तत्पुरुषसूक्तम्–( प्रेतसू० ) ॐतदेवाग्नि०

## ॥ सर्पबलिविधानेसूक्तानि ॥

१ रुद्रसूक्तम्–ॐनमस्ते०
२ इन्द्रसूक्तम्–ॐआशुः०
३ अग्निसूक्तम्–ॐअस्याजरासः
४ वरुणसूक्तम्–ॐइमम्मेति ९
५ यमसूक्तम्–ॐअपेतः०
६ निर्ऋतिसूक्तम्–ॐअसुन्वन्तमितिचतस्रः अ० १२
७ वायुसूक्तम्–ॐपीवोऽअन्ना०
८ पावमानसूक्तम्–ॐपुनन्तुमेति ९ अ० १९

९ सूर्यसूक्तम्–ॐविभ्राट्० अ० ३३
१० विष्णुसूक्तम्–ॐयुञ्जतेति अष्टौ अ० ५
११ सर्पसूक्तम्–ॐनमोस्तुसर्पेभ्य इतित्रयः अ० १३
१२ शान्तिसूक्तम्–ॐऋचंवाचं० अ० ३६

## ॥ प्रेतबलिविधानेसूक्तानि ॥

१ रुद्रसूक्तम्–ॐनमस्ते० अ० १६
२ विष्णुसूक्तम्–ॐसहस्रशीर्षा० अ० ३१
३ यमसूक्तम्–ॐअपेतः० अ० ३५

## ॥ भूतबलिविधानेसूक्तानि ॥

१ रुद्रसूक्तम्–ॐनमस्ते० अ० १६
२ इन्द्रसूक्तम्–ॐआशुः० अ० १७
३ अग्निसूक्तम्–ॐअस्याजरासः० अ० ३३
४ यमसूक्तम्–ॐअपेतः० अ० ३५
५ निर्ऋतिसूक्तम्–ॐअसुन्वन्तम० अ० १२
६ राक्षोघ्नसूक्तम्–ॐकृणुष्वपाजः० अ० १३
७ वरुणसूक्तम्–ॐइमम्मे० अ० २१
८ वायुसूक्तम्–ॐपीवोऽन्ना० अ० २७
९ पावमानसूक्तम्–ॐपुनन्तुमादेवजनाः० ९
१० सूर्यसूक्तम्–ॐविभ्राट्०
११ विष्णुसूक्तम्–ॐयुञ्जते०
१२ पुरुषसूक्तम्–ॐसहस्रशीर्षा०
१३ शान्तिसूक्तम्–ॐऋचंवाचं०

इति श्रीद्विवेद्युपाह्व लीलाधरात्मज "चुनीलालशर्मणा" तथाच ज्योतिर्विदुपनामक भानुशंकरात्मज "सूर्यरामशर्मणा" संशोध्यसंवर्ध्यप्रकाशिते दालभ्योक्ते अशुभकर्मप्रदीपे सूक्तसंग्रहाख्यः पंचमोविभागो ग्रन्थश्च संपूर्णः ॥

# और्ध्वदुहिककर्मणामुपहारसूचयः ॥

**देहशुद्धिप्रायश्चित्ते उपहारः**

**पंचगव्यम्**

गोमूत्रं

गोमयं

दूध

दधि

घृत

कुशोदकं

**पंचामृतम्**

दूध

दधि

मध

खांड

घी

चंदन

अक्षत

तुलसी

पुष्प

तिल

यव

यज्ञोपवीत

वस्त्र

उपवस्त्र

अबील

गुलाल

कंकु

सोपारी

श्रीफल

साकर

दराख

शंख

घंटा

तरभाणुं

आचमनी

दर्भ

लोटो

पवालुं

विष्णु
तांबानो लोटो ( तरभाणा सहित )
सत्येश मूर्ति ( सोनानी )

**दशविधस्नान**

भस्म
गोमय
मृत्तिका
गोरज
धान्य
फल
हिरण्य
सर्वौषधी
कुशोदक
पंचगव्य

**पूर्वाङ्ग उत्तराङ्ग प्रायश्चित्तार्थं द्रव्यं**

नागरवेलना पान

**दशमहादानानि**

गौः
तिलाः
पृथ्वि
हिरण्यम्
आज्यम्
वासांसि
धान्यम्
गुड
रौप्य
लवण

**सप्तधान्यदानानि**

व्रीहि
यवाः
गोधूमाः ( गहुं )
मुद्ग ( मग )
माषाः ( अडद )
प्रीयंगु ( कांग )
तिलाः

**अष्टमहादानानि**

तिलाः
लोहम्
हिरण्यम्
कार्पासम्
लवणम्
सप्तधान्यम्
क्षितिः
गौः
वस्त्र

**तिलपात्रादिघृतपात्रपर्यंतदानानि.**

तिलपात्र

वैतरणी
पद
उमामहेश्वर
वृषभ
दीप
वरुण
सुवर्ण
घृतपात्र

**प्रत्यक्ष गौदाने उपहारः**

कपिलागाय वाछरडासाथे
रत्न नंग–२
सोनानी शिंगडी नं. २
रूपानी खरी नं. ४
सुवर्ण
दोहनपात्र ( तांमडी )

तांबानी पीठ
श्वेतचामर
श्वेतपुष्पमाला
मोतीनो गुच्छो
श्वेतवस्त्र
घंटा
कौशेयवस्त्र
गुगरीनी माला
दर्पण
दक्षिणा
गोग्रासमाटे खाद्य
पूजासाहित्य
गंध
अक्षत
पुष्प

सौभाग्यद्रव्य
धूप
दीप
दराख
कपुर
पूगीफल
श्रीफलादि०
त्रिष्णु
दर्भ
तुलसी

**वैतरणी नद्युत्तरणार्थं गोदाने विशेषः**

वत्ससहित काळी गाय
कृष्णवस्त्र
रक्तपुष्पमाला
तिल

शेषं पूर्ववत्

**संक्षेपतः पुण्यौषधीप्र० साहित्यम्**

विष्णु
दर्भ
तिल
यव
भस्म
गोमय
गोमूत्र
मृत्तिका
पंचामृत
चंदन
अक्षत
पुष्प
तुलसी
सौभाग्यद्रव्यं
धूप
दीप
नैवेद्य
सोपारी
श्रीफल
तरभाणुं
आचमनी
पवालुं
लोटो
ताम्रमय मध्यकलश तरभाणासहित
पान
गोनिष्क्रय द्रव्यं

**आसन्नमरणे साहित्यम्**

उत्क्रान्ति धेनुदान सं०
दर्भ
तिल
यव
अक्षत
पंचगव्यम्
गोपीचंदनम्
भस्म
गंगोदकम्
तुलसीदलानि
षट्पिण्डे—यवतण्डुल पिष्टम् शेर०।।
आज्यम्
दुग्धम्
कुठारः
मृण्मयकुम्भः
कोडीयुं

प्रेतशरीरे आच्छादनार्थं वस्त्रम्
चंदनकाष्ठ
तुलसीकाष्ठ

**दुग्धोदकदाने साहित्यम्**

अपक्व मृत्तिकानां पात्र नं. २
( कुलडां नंग २ )
दूध
तिल
यव
गंधपुष्प इत्यादि
जल
दर्भ
सुतरनो दडो

**पञ्चकमरणे दाहविधौ विशेषः**

दर्भनां पांच पुतलां
उर्णसूत्रम्
शेषं पूर्ववत्

**त्रिपुष्करयोगमध्ये मृतस्य दाहविधौ विशेषः**

यवना लोटनां त्रण पुतलां
गंध
पुष्प विगेरे पूर्ववत्
घी
हिरण्यशकल

**रजस्वलामरणे दाहविधौ विशेषः**

दर्भ
यवनो लोट
मृत्तिकानो घडो
भस्म
गोमय
पंचगव्य
पञ्चदश प्राजापत्यरूपं प्रायश्चित्तद्रव्यम्
आच्छादनार्थं वस्त्रम्
शेषं पूर्ववत्

**सूतिकामरणे दाहविधौ विशेषः**

दर्भ
यवनो लोट शवना लेपनमाटे
मृण्मयकुंभः ( घडो )
शूर्पं
भस्म
मृत्तिका
गोमयम
पञ्चगव्यम्
पञ्चदशप्राजापत्यरूपं प्रायश्चित्तद्रव्यम्
आच्छादनार्थं वस्त्रम्

शेषं पूर्ववत्

**ब्रह्मचारीमरणे दाहविधौ विशेषः**

कौपीनवस्त्र ३०
अन्नम्
कृष्णाजिन ३०
पादुकाः
छत्रम्
माल्यम्
गोपीचंदनम्
मणिप्रवाल स्रजः ३०
ब्रह्मसूत्राणि ३०
आज्यम्
हरिद्रा
पीतवस्त्रम्
आच्छादनार्थं वस्त्रयुग्मं

**आहिताग्नेर्मरणे दाहविधौ विशेषः**

तीर्थोदकम्
गोमयम
गोमूत्रम्
कुशोदकम्
प्रक्षालितवस्त्रद्वयम्
दर्भ
तिल
चंदन
पुष्पाणि
दुर्मरणनिमित्तं प्राय० द्रव्यम्
मृण्मयस्थाल्यां पञ्चाग्निः
सर्वाणि यज्ञपात्राणि
पृषदाज्यम्
घृतम्
यवपिष्टः
शुद्धोदकम्
पलाशपात्राणि
शूर्प
कृष्णाजिनम्
सप्तहिरण्यशकलानि
समिधः
शुष्क गोमयम्
हरितवस्त्रम्

**दशाहे उपहारः**

श्वेतवस्त्र
उत्तरीयवस्त्र
लोटो
पञ्चपात्र
आचमनी

तरभाणुं
श्वेतचंदन
श्वेतपुष्प
वाळो
तुलसीपत्र
भांगरो
राळधूप
दीप
दूध
घी
मध
शर्करा
चोखा शेर १।
तपेली ढांकणसाथे
पत्रावली

ऊन
दर्भ
तिल
यव
सोपारी
द्राक्ष
अडद
छाणां

**शिशोर्मरणे (चोथीयानुं) साहित्य**

काचीमाटीनी कुंडी नं. ४.
चंदन
अक्षत
पुष्प
तुलसीपत्र
सुतरनो दडो

दर्भ
दूध
तिल
यव
लोटो
पंचपात्र
आचमनी
तरभाणुं

**एकादशाहे उपहारः**

पञ्चगव्यम्
पञ्चामृतम्
दर्भ
कंकु
चंदन
अक्षत

| | | |
|---|---|---|
| यव | कोडीयां नं. २ मृत्तिकानां | मग शे. १। |
| तल | आज्य | अडद शे. १। |
| तुलसीपत्र | सोपारी | तिल शे. १॥। |
| पुष्पाणि | श्रीफल | यव शे. ०॥ |
| यज्ञोपवीत | सूत्रनो दडो | श्वेतकटको गज १। |
| अबील | ताम्रकलश नं. ७ | रातोकटको गज १। |
| गुलाल | तरभाणां नं. ७ | पञ्चरत्ननी पडी |
| धूपसली | मोटुं तरभाणुं नं. १ | परिधानार्थ वस्त्र |
| दराख | आचमनी | उत्तरीय वस्त्र |
| विष्णु | सुवर्णमूर्ति नं. २ } मूर्त्या भावे चटाः | श्वेतवस्त्र |
| शंख | ताम्रमूर्ति १ | चरूनेमाटे तपेली ढांकणसाथे |
| दीवी | रजतमूर्ति १ | आज्यस्थाली—ताम्रमयी |
| समीधनी पडी | लोहमूर्ति १ | सुखडनो कटको |
| स्रुची | सिसानीमूर्ति १ | लीलो गेरो |
| स्रुवो | तांदूल शेर ५ | केलां |
| | घउं शे. १। | |

कांस्यपात्र
वृषभ
वत्सतरी
मींढल नं. २
लोहमय चक्र
लोहमय त्रिशूल
अष्टसौभाग्यनी छाबडी
पत्रावली
दडीया
छाणां
फलाहार माटे
उपयोगी साहित्य
चोखानो लोट शे. ०।
**द्वादशाहे सामान्य उपहारः**
विष्णु

शंख
दर्भ
चंदन
अक्षत
तुलसीपत्र
पुष्प
पञ्चामृत
तिल
यव
घृत
मध
सोनानी सळी
चोखा शे. २।
तपेली ढांकणसाथे
पत्रावली

दडीया
सोपारी
श्रीफल
दराख
शर्करा
आदु
वस्त्र
अडायां
आसन
पञ्चपात्र विगेरे
**समानयश्राद्धे उपहारः**
वस्त्रं यजमानपरिधानार्थं
यज्ञोपवीत नंग ८
वस्त्र ब्राह्मणार्थं
पाटला ८

दिवि ८
तांबानां कोडीयां ८
आसन ग्रा. ८
त्रिवेणीवींटी ९
आचमनी ८
श्वेतपुष्पमाला १०
गोपीचंदन
श्वेतपुष्प छुटां
श्वेतचंदन
तुलसी
तिल
यव
तांदुल शेर २।
धूपसली
लोटो तांबानो नं. १

पञ्चपात्र १
तरभाणु १
हस्तप्रक्षालनार्थं पात्रं
उत्तरीय
सुवर्णनो तार पिंडछेदनार्थं
अथवा रूपानी सली
नागरवेलनां पान
पलासनि पत्रावली नं. १०
द्रोण १२
पातरांनो पडो
मुखवासार्थं पूगीफल ताम्बूलं
हिरण्यदक्षिणा
पिण्डोपरि वस्त्राणि
ब्राह्मणभोजनार्थं पायसान्नादिहविष्यान्नम्
मुद्र

आदानी कचुंबर
शर्करा
मध
घृत
दधि
कांस्यपात्र
नारिकेल नं. २
विष्णु
शंख
दर्भ

**त्रयोदशाहे उपहारः**

विष्णु
शंख
दर्भ
श्वेतचंदन

पुष्प
तुलसी
तिल
यव
पञ्चामृत
साकर
केळां
लीलोमेवो
श्रीफल
सोपारी
सुतरनो दडो
दिवी
कोडीयुं
करवडो मृत्तिकानो
घडो

कोडीयां
ताम्रकलश
तिलपात्र दान
वैतरणी दान
**पद दानम्**
थाळी
वाडको
लोटो
पवालुं
आमान्न
गौदान
वृषभदान
उमामाहेश्वरदान
घृतपात्रदान
शय्यादान

पञ्चधान्यदान
तिल
यव
दर्पण
कुलेरना लाडु नं. १३
शय्यानो सामान
मग
अडद
घऊं
चोखा
शय्या
तलाई
चादर
उशीकुं
उर्णावस्त्र

छत्री
उपानह
पञ्चवस्त्र
पंद
दिवी
कोडीसुं
पाटलो
सुवर्णदक्षिणा
लक्ष्मीनारायणनीमूर्ति
पांथिकदान
जोरीयो ( झोळी )
लोटी
तपेली
लोटो
दोरी

छत्री
फानस
लाकडी
उपानह
मीठाई
दक्षिणा

**मासिक निवृत्तिश्राद्धे उपहारः**

विष्णु
शंख
दर्भ
चंदन
अक्षत
तिल
यव
तुलसी

श्वेतपुष्पे
पञ्चामृत
द्राक्ष
धूप
दीप
वस्त्र
पान
सोपारी

**पुत्तलस्य उपहारः**

पुत्तल करणार्थे दर्भः
सूतरनो दडो ऊणतारनो
कृष्णाजिन
यवपीठ
माषपिष्ट
पलाशवृंत २६०

नारीकेल
तुंबीफल
शीपणी ( छीप ) नं. २
कोडी नं. २
चणोठी नं. २
काच
शतपत्र
पद्मपुष्प
साकर
दाडमनां बीज नं. ३२
परवाला २
मूळो
गुड
नीलां २
सुखडना कटका २

कामळ
द्राक्ष
हरताल
ताम्बूल
कमलकाकडी
मध
घृत
हींगलो
पट्टसूत्र
गाजर
रींगण ( वेंगण )
पारो
गोमूत्र
गंधक
मजीठ

अत्तर
चंदन
( रतांजली )
वाळो
वाल नं. २०
टंकणखार
सूकरनाकेश
श्वेतवस्त्रना कटका नं. ३
आच्छादनार्थ वस्त्र
ऊन
वस्त्रखंड
विष्णु
शंख
चक्र
दीप विगेरे

**तीर्थेऽस्थिक्षेपे उपहारः**

पञ्चामृत
चंदन
तुलसी
पुष्प
तिल
यव
साकर
धूप
दीप
पञ्चगव्य
दर्भ
घी
यवपिष्ठ
सोपारी
अस्थि सतधावेष्टित
दक्षिणा

**नीलोत्सर्गे उपहारः**

कंकु
अबील
गुलाल
सिंदुर
धूपसली
कपुर
सुतरनोदडो
श्रीफळ
नाडु
तल शे. २
सरसीया
जव शे. ०।
सर्वौषधी
कमलकाकडी
सुखडनां छोडां
समीध
सोपारी
साकर
दराख
एलची
लवींग
जायफळ
जावंत्री
सुकोमेवो
नागरवेलनां पान
यज्ञोपवीत
दर्भ

विष्णु
गणपति
शंख
केळां
जमरूख
मोसंबी
दाडम
कोपरानी वाटी
बीजोरूं
सेरडी
वाळो
गुगळ
चंदन
दूर्वा
तुलसी

पुष्प
पञ्चामृत
सत्येशमूर्ति सोनानी
रुद्रमूर्ति सुवर्णनी
रक्तवस्त्र गज ४
श्वेतवस्त्र गज २॥
धोतीयां नं. २
श्राद्धनेमाटे पंचीयां नं. २
रेशमीवस्त्र गज १।
कलश तांबाना नं. ७
तरभाणी नं. ७
पवालां नं. ४
रकाबी नं. ४
चोखा शे. १०
घऊं शे. ५
घी

दंपतीवस्त्र
सूर्प
लाजा
( कांस्यपात्र )
थाळी—वाडको
पञ्चरत्न
पंचपल्लव
सुवर्णशृंग
रौप्यखुर
ताम्रपृष्ठ
दोहनपात्र
मुक्तापुच्छ
वस्त्र
घंटा
सप्तधान्य
गजादिसप्तदान

दशमहादान
पांच दीवा
पांच मोदक
माटली—२
घाडवा—२
कोडीयां ४
घृतपात्र
मृत्तिका
पञ्चगव्य
पत्रावली
दडिया
ऋत्विग्—आचार्यादि ब्राह्मणोने माटे
दक्षिणार्थं द्रव्यं

**नारायणबलिकरणे उपहारः**

सत्येशमूर्ति सुवर्णनी
उत्तरीयवस्त्र
ताम्रकलश नं. ७
मृत्तिकानो घडो १
वेष्टनवस्त्रं
रेशमी कृष्णवस्त्र गज १।
श्वेतवस्त्र गज १।
ब्रह्मादीनां मूर्तयः ५
पञ्चधान्यानि
श्रीफल
द्राक्ष
खारेक
घृत
गुग्गुल
आज्यस्थाली
चरुस्थाली
स्रुव
स्रुची
चरुपाकार्थं तंडुलाः
पलाशपत्राणि
कंकु
सुतरनोदडो
दुध, दधि
मध
शर्करा
चंदन
पुष्प
अक्षत
तुलसी
तिल, यव
विष्णु
शंख
गोमय
दर्भ

पूगीफल
श्वेतवस्त्र
रक्तवस्त्र
यज्ञोपवीत
व्रीहि
सर्वौषधी
मृन्मयकलशः
चतुर्दशछिद्रयुक्त कलश
प्रेतोना कलश १२
प्रेतमंडल स्थापनार्थं श्वेतवस्त्रं
वंशपात्रं
यमस्थापनार्थं माषाः ( अडद )

**पञ्चधान्यानि**

चोखा
मग
घउं
अडद

तिल
गायत्री दशांश
होमार्थं प्रायश्चित्त
होमार्थंच तिलाः
प्रेतस्थापनार्थं मंडलार्थं चरुपाकार्थंच तंदुलाः
तिलपिष्टं यमपिंडार्थं प्रेतपिण्डार्थंच

**नागबलिकरणे उपहारः**

तांबाना कलश नं. १०
तरभाणी नं. १०
श्वेतवस्त्र गज १।
कृष्णवस्त्र गज १।
श्रीफल
पूगीफल शेर २
चोखा
घृत शेर १।

तिल शे. १।
यव शे. ०।
नागमूर्ति सुवर्णनी ९
मुद्रार्पणानि
तरभाणुं
आचमनी
कलश
पञ्चपात्र
चंदन
अक्षत
पुष्प
तुलसी
धूप
दीप
पञ्चामृत
शर्करा
दूध

मधु
दर्भ
पञ्चपल्लव
सर्वौषधी
सप्तमृत्तिका
बलिदानार्थं कृसरः
अपूप ( मालपुडा )
चरुपाकार्थं मण्डलार्थं च तण्डुलाः

**पिण्डोपरिदानसाहित्यम्**

गोदान
वृषभदान
भूमि ,,
सुवर्ण ,,
रौप्य ,,
ताम्र ,,
लोह ,,
कंबल ,,

कृष्णवस्त्र
स्वस्तिवाचन कलश सपिधानः
विष्णु
शंख

**भूतबलिकरणे उपहारः**

धोतीयां नं. २
उत्तरीयवस्त्र १
कलश २
वस्त्र ब्राह्मणवरणार्थं १३
ताम्रमय कलशाः १२
मृन्मयकलश १
पूर्णपात्राणि १३
छाबडी १
सूर्प १
श्रीफल नं. १५
वस्त्र १४

रत्येशाकलश १
चूको २१
ध्वजा २१
पूगीफल ५०
मुद्रार्पणानि ५२
महाभूतस्यमूर्ति १
तांदुल शे. १२
घृत शे. ४
दूध शे. १
खांड शे. १
कंकु शे. १
सुतर शे. १
विष्णु
शंख
दर्भ
तिल
अक्षत

चक्र
चंदन
तुलसी
पुष्प
स्रुव
स्रुचि
ताम्रपात्र १
चरुपात्रद्वयम्
चरु शे. ३
सार्द्धशत चर्वाहुतयः १५०
समीधनी जुडी नं. ३
ग्रहाणां फलानि पूर्ववत्
पाठः
पलाशपत्राणि
पञ्चपल्लवाः
जांबु
आम्र

उदुंबर
वट
पीपल
सर्वौषधयः
उपलेट
मुरमांसी
हळद
देवदारू
शैलेय
सुखड
कपुर
मोथ
अष्टगंधः
श्रीखंड
कस्तुरी
केसर
नागकेसर

कपुर
अगर
लोबान
प्रीयंगु ( कांग )
वालो
पञ्चरत्न
गोरूचंदन
सर्षप
व्रीहि
यव
शमी
दूर्वा
अपामार्ग
हस्तीदंत
मृगशृंग
सप्ततीर्थजल
१ गंगाजल

